चात्र मुद्रा पल्लवा नाम सर्वाशापारिपूरिका । पुष्पमन्त्रा चात्र भवति । नमः सर्वबुद्धानामप्रतिहतशासनानाम् । नम सङ्कुसुमितराजस्य तथागतस्य । तद्यथा — कुसुमे कुसुमे कुसुमाढ्ये कुसुमपुरवासिनि कुसुमावति स्वाहा । तेनैव धूपमन्त्रेण पूर्वोक्तेनैव धूपेन धूपयेत् ।

सर्वबुद्धां नमस्कृत्य अचिन्त्याद्भुतरूपिणाम् ।
बलिमन्त्र प्रवक्ष्यामि सम्यक् सम्बुद्धभाषिताम् ॥

नम' सर्वबुद्धबोधिसत्त्वानामप्रतिहतशासनाना तद्यथा — हे हे भगव! महासत्त्व! बुद्धावलोकित! मा विलम्ब । इद बलि गृह्णापय गृह्ण हूँ हूँ सर्वविघ्न र र ट ट फट् स्वाहा । निवेद्यं चानेन दापयेत् । बलिं च सर्वभौतिकम् । भवति चात्र मुद्रा शक्ति' सर्वदुष्टनिवारिणी । नम सर्वबुद्धानामप्रतिहतशासनानां सर्वतमोऽन्धकारविध्वंसिनां नम' समन्तज्योतिगन्धावभासश्रियाय तथागताय । तद्यथा — हे हे भगवं! ज्योतिरश्मिशतसहस्रप्रतिमण्डितशरीर! विकुर्व विकुर्व महाबोधिसत्त्वसमन्तज्वालोद्योतितमूर्ति खुर्द खुर्द अवलोकय अवलोकय सर्वसत्त्वानां स्वाहा ॥ प्रदीपमन्त्रा । प्रदीप चानेन दापयेत् । मुद्रा विकासिनी नाम सर्वसत्त्वावलोकिनी । नम' समन्तबुद्धानामप्रतिहतशासनानाम् । तद्यथा — ज्वल ज्वल ज्वालय ज्वालय । हुँ । विबोधक हरिकृष्णपिङ्गल स्वाहा । अग्निकारिका मन्त्रा । भवति चात्र मुद्रा सम्पुटनाम लोकविश्रुता । सर्वसत्त्वप्रभोद्योतनी भाषिता मुनिवरैः पूर्व बोधिसत्त्वस्य धीमत ॥

अथ खलु मञ्जुश्री' कुमारभूत' वज्रपाणिं बोधिसत्त्वमामन्त्रयते स्म । इमानि गुह्यकाधिपते मन्त्रपदानि सरहस्यानि परमगुह्यकानि

त्वदीय कुलविख्यातः सुतं घोर सदारुण ।
य एव सर्वमन्त्राणां साध्यमानाना विचक्षणे ॥

मूर्धटक इति विख्यात + + + जकुलयोरपि ।
तस्य निर्नाशनार्थाय विधेय सम्प्रवक्ष्यते ॥

नम' सर्वबुद्धबोधिसत्त्वानामप्रतिहतशासनानाम् । उ कर कर कुरु कुरु मम कार्यम् । भञ्ज भञ्ज सर्वविघ्ना । दह दह सर्ववज्रविनायकम् । मूर्ध टकजीवितान्तकर महाविकृतरूपिणे पच पच सर्वदुष्टां । महागणपतिजीवितान्तकर बन्ध ब ध सर्वग्रहा । षण्मुख! षड्भुज! षट्चरण' रुद्रमानय । विष्णुमानय । ब्रह्माद्यां देवानानय । मा विलम्ब मा विलम्ब । झल् झल मण्डलमध्ये प्रवेशय । समयमनुस्मर । हूँ हूँ हूँ हूँ हूँ हूँ फट् फट् स्वाहा । एष स. परमगुह्यकाधिपते परमगुह्य' महावीर्य' मञ्जुश्री षण्मुखो नाम महाक्रोधराजा सर्वविघ्नविनाशक । अनेन पठितमात्रेण दशभूमिप्रतिष्ठापितबोधिसत्त्वा विद्रवन्ते । कि पुनर्दुष्टविघ्ना । अनेन पठितमात्रेण महारक्षा कृता भवति । मुद्रा चात्र भवति महाशूलेति विख्याता सर्वविघ्नविनाशिका । अस्यैव क्रोधराजस्य हृदयम् । ॐ ह्रीँ श्री' विकृतानन हुम् । सर्वशत्रु नाशय स्तम्भय फट् फट् स्वाहा । अनेन मन्त्रेण सर्वशत्रू महाशूलरोगेण चतुर्थकेन वा गृह्णापयति । शततजपेन वा यावद् रोचते, मैत्रता वा न प्रतिपद्यते । अथ करुणा चित्त लभते । जापान्ते मुक्तिर्न स्यात् । मृयत इति रत्नत्रयापकारिणा कर्तव्य नाशेष सौम्यचित्तानां मुद्रा महाशूलैव प्रयोजनीया । उपहृदय चात्र भवति । ॐ ह्रूँः कालरूप हु ख स्वाहा । मुद्रा महाशूलयेव प्रयोजनीया । सर्वदुष्टा यमिच्छति त कारयति । परमहृदयम् । सर्वबुद्धाधिष्ठित एकाक्षर नाम । हूँ । एष सर्वकर्मकर' । मुद्रा महाशूलयैव प्रयोजनीया । सर्वानर्थनिवारणम् । सर्वभूतवशङ्कर सक्षेपत. । एष क्रोधराज सर्वकर्मेषु प्रयोक्तव्यः मण्डलमध्ये जाप सिद्धिकाले च विशिष्यते । विसर्जनमन्त्रा भवति । नम सर्वबुद्धानामप्रतिहतशासनानाम् । तद्यथा—जय जय सुजय महाकारुणिक विश्वरूपिणे गच्छ गच्छ स्वभवन सर्वबुद्धांश्च विसर्जय । सपरिवारां स्वभवन चानुप्रवेशय । समयमनुस्मर । सर्वार्थाश्च मे सिद्धय तु मन्त्रपदा मनोरथ च मे परिपूरय स्वाहा ॥ अय विसर्जनमन्त्र सर्वकर्मेषु प्रयोक्तव्य । मुद्रा भद्रपीठेति विख्याता । आसन चानेन दापयेत् । मनसा सप्तजप्तेन विसर्जन सर्वेभ्यः लौकिकलोकोत्तरेभ्यो मण्डलभ्य म त्रेभ्यश्चैव मन्त्रसिद्धि' । समयजपकालनियमेषु च प्रयोक्तव्येति ॥

अथ खलु मञ्जुश्री कुमारभूत. पुनरपि तं शुद्धावासभवनम वलोक्य त महापर्षन्मण्डल स्वक च विद्यागणमन्त्रपटलावसर भाषते स्म । नम' सर्वबुद्धानाम् अप्रतिहतशासनानाम् । ॐ रिटि स्वाहा ॥ मञ्जुश्रियस्येदम् अनुचरी केशिनी नाम विद्या सर्वकर्मिका । महामुद्राया पञ्चशिखाया योज्यसर्वविषकर्मसु । नम. समन्तबुद्धानामप्रतिहतशासनानाम् । ॐ निटि । उपकेशिनी नाम विद्येय सर्वकार्मिका मुद्रया विकासिन्या च योजयेत् । सर्वग्रहकर्मेषु । नम' समन्तबुद्धाना मप्रतिहतगतीनाम् । ॐ नि' ।

विद्येय बलिनी नाम सवर्कमकरा शुभा ।
मुद्रया भद्रपीठया सयुक्ता यक्षिणी आनयेद् ध्रुवम् ॥
नम समन्तबुद्धाना अचिन्त्याद्भुतरूपिणाम् ।
मुद्रया शक्तिना युक्ता सर्वडाकिनीघातिनी ॥

ॐ ह्रीः स्वाहा ।

विद्या कापतलिनी नाम मञ्जुघोषेण भाषिता ।
समन्तासर्वबुद्धैश्च प्रशस्ता दिव्यरूपिणी ॥
नमः समन्तबुद्धानाम् अप्रतिहतगतिप्रचारिणाम् ।
तद्यथा — ॐ वरदे स्वाहा ।
मुद्रा त्रिशिखेनेव प्रयोजयेत् । श्रेयसात्मकः ।
बहुरूपधरा देवी क्षिप्रभोगप्रसाधिका ॥
नम. समन्तबुद्धाना अचिन्त्याद्भुतरूपिणाम् ।

ॐ भूरि स्वाहा ।

मुद्रया शूलसयुक्ता सर्वज्वरविनाशिनी ।
नम. समन्तबुद्धानामचिन्त्याद्भुतरूपिणाम् ॥

ॐ नु रे स्वाहा ।

विद्या तारावती नाम प्रशस्ता सर्वकर्मसु ।
मुद्रया शक्तियष्टया तु योजिता विघ्नघातिनी ॥
नम. समन्तबुद्धानामचिन्त्याद्भुतरूपिणाम् ।

तद्यथा — ॐ विलोकिनि स्वाहा ।

विद्या लोकवती नाम सर्वकोशवशङ्करी ।
योजिता वज्रमुद्रेण सर्वसौख्यप्रदायिका ॥
नमः समन्तबुद्धानामचिन्त्याद्भुतरूपिणाम् ।

तद्यथा — ॐ विश्वे विश्वसम्भवे विश्वरूपिणि कह कह आविशाविश । समयमनुस्मर । रुरु तिष्ठ स्वाहा ।

एषा विद्या महावीर्या दर्शिता लोकनायकैः ।
दंष्ट्रमुद्रासमेतास्त्रसर्वसत्त्वा + वेशिनी ॥
शुभा वरदा सर्वभूतानां विश्वेति सम्प्रकाशिता ।
नमः समन्तबुद्धानामचिन्त्याद्भुतरूपिणाम् ॥

तद्यथा — ॐ श्वेतश्री वपुः स्वाहा ।

प्रयुरा ... मुद्रेण विन्यस्ता सर्वकर्मिका ।
महाश्वेतेति विख्याता अचिन्त्याद्भुतरूपिणी ॥
सौभाग्यकरण लोके नरनारीवशङ्करी ।
नम समन्तबुद्धानामचिन्त्याद्भुतरूपिणाम् ॥

तद्यथा — ॐ । खिखिरिखिरि भ्रकुटि सर्वशत्रु स्तम्भय जम्भय मोहय वशमानय स्वाहा ।

एषा विद्या महाविद्या योगिनीति प्रकथ्यते ।
योजिता वक्रमुद्रेण दुष्टसत्त्वप्रसादिनी ॥
नमः समन्तबुद्धानामप्रतिहतगतिप्रचारिणाम् ।

तद्यथा — ॐ श्री ।

एषा विद्या महालक्ष्मी लोकनाथैस्तु दर्शिता ।
मुद्रा सम्पुटया युक्ता महाराज्यप्रदायिका ॥
नमः समन्तबुद्धानां सर्वसत्त्वाभयप्रदायिनाम् ।

तद्यथा — ॐ । अजिते ! कुमाररूपिणि ! एहि आगच्छ मम कार्यं कुरु स्वाहा ।

अजितेति विख्याता कुमारी अमृतोद्भवा ।
मुद्रया पूर्णया युक्ता सर्वशत्रुनिवारणी ॥
नमः समन्तबुद्धानामचिन्त्याद्भुतरूपिणाम् ।

तद्यथा — ॐ जये स्वाहा । विजये स्वाहा । अजिते स्वाहा । अपराजिते स्वाहा ।

चतुर्भगिन्य इति विख्याता बोधिसत्त्वानुचारिका ।
पर्यटन्ति महीं कृत्स्नां सत्त्वानुग्रहकारिका ॥
भ्राता स्तुम्बुरुविख्याता एतासामनुचारकः ।
नौयानसमारूढा अन्दुर्धतु' निवासिन' ॥
मुष्टिमुद्रेण विन्यस्ता सर्वाशापारिपूरिका ।
नमः समन्तबुद्धाना लोकाग्राधिपतीनाम् ॥

तद्यथा — ॐ । कुमार! महाकुमार! क्रीड क्रीड पण्मुखबोधिसत्त्वानुज्ञात! मयूरासनसङ्गोद्यतपाणि रक्ताङ्ग! रक्तगन्धानुलेपनप्रिय! ख ख खाहि खाहि खाहि । हु नृत्य नृत्य । रक्तापुष्पार्चितमूर्ति समयमनुस्मर । भ्रम भ्रम भ्रामय भ्रामय भ्रामय । लहु लहु माविलम्ब सर्वकार्याणि मे कुरु कुरु चित्ररूपधारिणे तिष्ठ तिष्ठ हु हुं सर्वबुद्धानुज्ञात स्वाहा ।

भाषिता बोधिसत्त्वेन मञ्जुघोषेण नायिना ।
षड्विकारा मही कृत्स्ना प्रचचाल समन्ततः ॥
हितार्थं सर्वसत्त्वानां दुष्टसत्त्वनिवारणम् ।
महेश्वरस्य सुतो घोरो वैनेयार्थमिहागत' ॥
स्कन्दमङ्गारकश्चैव ग्रहचिह्नै सुचिह्नित ।
मञ्जुभाषिणी ततो भाषे करुणाविष्टेन चेतसा ॥
महात्मा बोधिसत्त्वोऽय बालानां हितकारिण ।
सत्त्वचर्या यत मोक्तो विचेरुः सर्वतो जगत् ॥
मुद्राशक्तियष्ट्यानुसयुक्तो स महात्मन' ।
आवर्तयति ब्रह्माद्यां किं पुनर्मानुष फलम् ॥

कौमारभित्तमखिल कल्पमस्य समासत' ।
कार्त्तिकेयमञ्जुश्री' मन्त्रोऽय समुदाहृत' ॥
सत्त्वानुग्रहकाम्यर्थं बोधिसत्त्व इहागतः ।
त्र्यक्षरं नाम हृदयं मन्त्रस्यास्य उदाहृतम् ॥
सर्वसत्त्वहितार्थाय भोगाकर्षणतत्पर. ।
मुद्रया शक्तियष्ट्या तु विन्यस्त सर्वकर्मिक. ॥

ॐ हूॅं ज ।

एष मन्त्रः समासेन कुर्यान्मानुषक फलम् ।
नमः समन्तबुद्धानां समन्तोद्यातितमूर्तिनाम् ॥

ॐ विकृतग्रह हु फट् स्वाहा ॥

उपहृदय चास्य सयुक्तो मुद्राशक्तिना तथा ।
आवर्तयति भूतानि सग्रहां मातरा तथा ॥
सर्वमुद्रितमुद्रेषु विन्यस्ता सफला भवेत् ।
वित्रासयति भूताना दुष्टाविष्टविमोचनी ॥

एष मञ्जुश्रियस्य कुमारभूतस्य कार्त्तिकेयमञ्जुश्रीर्नाम कुमार अनुचर सर्वकर्मिक जपमात्रेणैव सर्वकर्माणि करोति, सर्वभूतानि त्रासयति, आकर्षयति, वशमानयति, शोषयति, घातयति, यथेप्सितं वा विद्याधरस्य तत् सर्वं सम्पादयति । नमः समन्तबुद्धानामप्रतिहतशासनानाम् । तद्यथा — ॐ ब्रह्म सुब्रह्म ब्रह्मवर्चसे शान्तिं कुरु स्वाहा ॥

एष मन्त्रो महाब्रह्मा बोधिसत्त्वेन भाषितः ।
शान्ति प्रजग्मुर्भूतानि तत्क्षणादेव शीतला ॥
मुद्रा पञ्चशिखायुक्ता क्षिप्र स्वस्त्ययन भवेत् ।
आभिचारुकेषु सर्वेषु अथर्वो वेदपठ्यते ॥
एष सक्षेपत उक्तो कल्पमस्य समासत' ।
नम' समन्तबुद्धानामप्रतिहतशासनानाम् ॥

तद्यथा — ॐ गरुडवाहन! चक्रपाणि! चतुर्भुज! हुँ हुँ समयमनुस्मर । बोधिसत्त्वो ज्ञापयति स्वाहा ॥

आज्ञप्तो मञ्जुघोषेण क्षिप्रमर्थकरं शिवं ।
विद्रापयति भूतानि विष्णुरूपेण देहिनाम् ॥
मुद्रा त्रिशिखे युक्तं क्षिप्रमर्थकर स्थिरः ।
य एत्र वैष्णवे तन्त्रे कथिता. कल्पविस्तरा. ॥
उपायवैनेयसत्त्वानां मञ्जुघोषेण भाषिताः ।
नमः समन्तबुद्धानामप्रतिहतशासनानाम् ॥

तद्यथा—ॐ महामहेश्वर! भूताधिपतिवृषध्वज! प्रलम्बजटामकुटधारिणे सितभस्मधूसरितमूर्ति हुं फट् फट् । बोधिसत्त्वो ज्ञापयति स्वाहा ॥

एष मन्त्रो मया प्रोक्तं सत्त्वाना हितकाम्यया ।
शूलमुद्रासमायुक्ता सर्वभूतविनाशक ॥
यन्मया कथित पूर्वं कल्पमस्य पुरातनम् ।
सैवमिति वक्ष्यन्ते सत्त्वा भूतलवासिन. ॥
विविधा गुणविस्तारा शैवतन्त्रे मयोदिताः ।
नमः समन्तबुद्धानामप्रतिहतशासनानाम् ॥

तद्यथा—ॐ शकुन महाशकुन पद्मविततपक्ष सर्वपन्नगनाशक ख ख खाहि खाहि समयमनुस्मर । हु । तिष्ठ । बोधिसत्त्वो ज्ञापयति स्वाहा ॥

एष मन्त्रा महावीर्यं वैनतेयेति विश्रुतं ।
दुर्दान्तदमको श्रेष्ठं भोगिनां विषनाशनम् ॥
महामुद्रया समायुक्तः हन्त्यनर्थं सुदारुणाम् ।
विचिकित्सयति न सन्देहो विष स्थावरजङ्गमम् ॥
सत्त्वानुपायवैनेया बोधिसत्त्वसमाज्ञया ।
विचेरुर्गरुडरूपेण पक्षिराट् स महाद्युतिः ॥
यावन्त. गारुडे तन्त्रे कथिता' कल्पविस्तराः ।
ते मयैवोदिता. सर्वे सत्त्वानां हितकारणात् ॥
गरुत्मा बोधिसत्त्वस्तु वैनतेयार्थमिहागतं ।
भोगिनां विषनाशाय विचेरुः पक्षिरूपिणः ॥

यावन्तो लौकिका मन्त्राः तेऽस्मि कल्प उदाहृताः ।
वैनेयार्थं हि सत्त्वानां विचरामि तथा तथा ॥
ये तु ताथागतीमन्त्राः कुलिशाङ्कुलयोरपि ।
तेऽस्मिन् कल्पविस्तरे भाषिता पूर्वमेव तु ॥
यथा हि धात्री बहुधा बालाना लालति यत्नत' ।
तथा बालिशबुद्धीनां मन्त्ररूपी चराम्यहम् ॥
दशबलै कथित पूर्वे अधुना च मयोदितम् ।
सकल मन्त्रतन्त्रार्थं कुमारोऽप्याह महाद्युतिः ॥
जिनवरैश्च ये गीता गीता दशबलात्मजै ।
मञ्जुस्वरेण ते गीता अचिन्त्याद्भुतरूपिणाम् ॥

अथ खलु मञ्जुश्री कुमारभूत सर्वावन्त शुद्धावासभवन त च महा पर्षन्मण्डलमवलोक्य सर्वसमयसञ्चोदना नाम समाधि समापद्यते स्म। यत्र समाधे. प्रतिष्ठितस्य अशेषसत्त्वनिर्हारचयोमनस सर्वसत्त्वा प्रति ष्ठिताः भवेयुः, समनन्तरसमापन्नस्य मञ्जुश्रिय कुमारभूतस्य सर्वा वन्त शुद्धावासभवन विचित्रमणिरत्नव्यूहालङ्कारमण्डल अचिन्त्या द्भुतबोधिसत्त्वविकुर्वेण सर्वप्रत्येकबुद्धार्यश्रावकचयाप्रविष्टैरपि बोधि सत्त्वैः दशभूमिप्रतिष्ठितैश्चैरपि न शक्यत मण्डल लिखितु वा, क' पुनर्वादो पृथग्जनभूतै सत्त्वै त दिव्यमार्यमण्डलसमयनिर्हार वस्थानात्रस्थितं मञ्जुश्रिय कुमारभूतं दृष्ट्वा सर्वे बुद्धा भगवन्त सर्वे प्रत्येकबुद्धा, सर्वे आर्यश्रावका, सर्वे बोधिसत्त्वाः, दशभूमिप्रति ष्ठिता, यौवराज्याभिषेकसमनुप्राप्ता आर्या प्रतिपन्नाश्च सर्वे सत्त्वा साश्रवा अनाश्रवाश्च मञ्जुश्रिय कुमारभूतस्याधिष्ठानेनाचिन्त्य बुद्ध बोधिसत्त्वाचार्यनिष्पादितं समाधिविशेषमानसोऽवं मण्डल प्रविष्टमा त्मान सञ्जानन्ते स्म । न शक्यतं तत् पृथग्जने सत्त्वै. समनसाप्या लम्बयितुम्, कः पुनर्वादो लिखितु लेखयितु वा ॥

अथ मञ्जुश्री कुमारभत, ता महापर्षन्मण्डलसमयमनुप्रविष्ट सत्त्वानामन्त्रयते स्म । शृण्वन्तु मार्षा ! अनतिक्रमणीयमेतत् तथा

गतानां बोधिसत्वानां च समयं, कं पुनर्वादोऽन्येषां सत्वानाम् आर्यानार्याणाम्। अथ मञ्जुश्री कुमारभूतं वज्रपाणिं गुह्यकाधिपतिमामन्त्रयते स्म। निर्दिष्ट भो जिनपुत्रातिक्रान्तमानुष्यकं समयं मानसांश्च मानुष्यकं तु वक्ष्ये परिनिर्वृतानां च तथागतानाम्, यत्र सत्वा समनुप्रविश्य सर्वमहालौकिकलोकोत्तरां सिद्धिं गच्छेयु ॥

अथ खलु वज्रपाणिर्गुह्याधिपतिं मञ्जुश्रियं कुमारभूतमामन्त्रयते स्म। भाष भाष त्वं भो जिनपुत्र! यस्येदानीं कालं मन्यसे।

परिनिर्वृते लोकनाथे शाक्यसिंहे अनुत्तरे।
बुद्धत्व इव सत्वानां त्वदीयं मण्डलं भुवि ॥
दृष्टमात्रो हि लोकेऽस्मिन् मन्त्रा सिद्धिं प्रजग्मिरे।
अज्ञानविधिहीनं तु शयानविकृतेन वा ॥
मन्त्रा सिद्धिं न गच्छेयु ब्रह्मस्यापि महात्मनं।
अनभियुक्ता तन्त्रेऽस्मिन् अदृष्टसमयोदिते ॥
मन्त्रा सिद्धिं न गच्छन्ति यत्नेनाप्यनेकदा।
समयप्रयोगहीनं शक्रस्यापि प्रयत्नत ॥
मन्त्रा सिद्धिं न गच्छन्ति किं पुनर्भुवि मानुषे।
समयशास्त्रतत्त्वज्ञे चर्याकर्मसु साधने।
पठितमात्रा हि सिध्यन्ते मन्त्रा आर्या च लौकिका ॥
मण्डलं मञ्जुघोषस्य प्रविष्ट सर्वकर्मकृत्।
मन्त्रसिद्धिर्ध्रुवं तस्य कुमारस्यैव शासने ॥

अथ खलु वज्रपाणिर्गुह्याधिपति तं महासत्वं मध्ये भाषते स्म। संक्षेपतः भो भो महाबोधिसत्व! सत्वानामर्थाय मण्डलविधानं भाषस्वेति ॥

एवमुक्तस्तु गुह्यकाधिपतिना मञ्जुश्री कुमारभूत सर्वसत्वानामर्थाय मण्डलविधानं भाषते स्म। आदौ तावत् प्रतिहारकपक्षे चैत्रवैशाखे च मासे सितपक्षे प्रशस्तदिवसे शुद्धग्रहनिरीक्षिते शुभनक्षत्रसंयुक्ते शुक्लप्रतिपदि पूर्णमास्यां वा अन्ये वा काले प्रावृण्मासविवर्जिते पूर्वाह्णे भूमिमधिष्ठातव्यं महानगरमासाद्य यत्र वा स्वयं तिष्ठे-

न्मण्डलाचार्ये' श्च समुद्रगामिनी वा नदीमाश्रित्य, समुद्रतटसमीप वा महानगरस्य पूर्वोत्तरे दिग्भागे नातिदूरे नात्यासन्ने मण्डलाचार्येण सत्त्वाना सप्ताह पक्षमात्र वा एका त उद्दर्य कृत्वा प्रतिवस्तव्यम् । य तस्मिन् स्थाने सुचोक्ष पृथवीप्रदेश समन्ताच्चतुरश्र षोडशहस्त द्वादशहस्त वा अपगतपाषाणकठण्णभस्माङ्गारतुषकपालास्थिवर्जित सुचौक्ष सुपसुपरिकर्मित पृथिवीप्रदेश निग्रात्मकेनादकेन पञ्चगव्यस न्मिश्रितेन चन्दनकर्पूरकुङ्कुमोन्केन वा यमान्तकेन क्रोधराजेनाष्टस हस्राभिमन्त्रितेन पञ्चशिखमहामुद्रासयुक्त त पृथिवीप्रदेश अभ्युक्ष येचतुर्दिक्षु इत्यूर्ध्वमधस्तियग विदिक्षु च सर्वत क्षिपेत् । ततो त पृथिवीप्रदेश समन्ताच्चतुरश्र षोडशहस्त द्वादशहस्त वा अष्टहस्त वा, तत्र षोडशहस्त ज्येष्ठ, मध्य द्वादशहस्त कन्यस अष्टहस्तम् । एतत् त्रिविध प्रोक्त मण्डल सर्वदर्शिभि राज्यकामाय ततो ज्येष्ठ मध्यम सम्भोगव र्धने कन्यस समयमात्र तु सर्वकर्मकर शिवम् । ततोऽन्यतम मनसेप्सित मण्डलमालिखेत् । तत्र तं पृथिवीप्रदेश द्विहस्तमात्र खनेत् । तत्र पाषाणाङ्गारभस्मास्थिकेशाद्यो विविधा वा प्राणकजातय यदि दृश्यन्ते, अन्य पृथिवीप्रदेश खनेत् । निरुपहत्य निरुपद्रव भवत् । न चत् पर्वताग्रन दीपुलिनसमुद्रात्सङ्गमहानदीपुलिनसिकतादिचय महता प्रयत्नत स प्रत्यवेक्षित सुचोक्ष निष्प्राणक कृत्वा लिखेत् । त पृथिवीप्रदेश भूयो निष्प्राणेनोदकेन पञ्चगव्यसम्मिश्रेण नदीकूलमृत्तिकया मेध्यया वल्मीकमृत्तिकया, वा यत्र प्राणका न सन्ति, तया मृत्तिकया पूरयितव्यम् । पूरयित्वा च स्वाकोटित समतल समन्तात् त्रिविध मण्डल यथेप्सितं कारयेत् । चतुर्दिक्षु चत्वार खदिरकीलका निखनेत् । क्रोधराजेनैव सप्ताभिमन्त्रित कृत्वा, पञ्चरङ्गिकेण सूत्रेण सप्ताभिमन्त्रितेन क्रोधहृदयेन कृत्वा समन्ता त मण्डल चतुरश्राकारेण वेष्टयेत् । एव मध्यमे स्थाने एवमभ्यन्तरे चतुरश्राकार कारयेत् । मध्यस्थानस्थितेन मण्डलाचार्येण विद्या अष्टसहस्र मूलमन्त्रा उच्चारयितव्या महामुद्रा पञ्चशिखा त्वथवा मूलमन्त्रेण ससखायरक्षा आत्मरक्षा च कार्या । जपतश्च निष्कसर्वहिमण्डल प्रदक्षिणीकृत्य प्राङ्मुख कुशविण्डकोपविष्ट

सर्वबुद्धबोधिसत्त्वानां मनसि कुर्वाण'। समन्ताच्च तन्मण्डल चतुर श्राकारेण वेष्टयेत्। बहिर्नाथ. एकरात्रोषितां कृत्वा प्रवासयेत्॥

तत्र मण्डलाचार्येण कृतपुरश्चरणेन स्वतन्त्रमन्त्रकुशलेन उपायसत्त्वार्थमहायानाधिमुक्तेन एकरात्रोषितेन सुसखायसमेतेन विधिशास्त्रदृष्टेन कर्मणा पञ्चरङ्गिकेन चूर्णेन श्लक्ष्णोज्ज्वालेन सुपरिकर्मकृतेन, षडक्षराभिमन्त्रिते हृदयेनाभिमन्त्र्यं त चूर्ण मण्डलमध्ये स्थापयेत्। बहिश्चोच्छ्रितध्वजपताकतोरणे चतुष्पथालङ्कृत कदलीस्तम्भरोपितफलभरितपिण्डीभि. प्रलम्बमानमाहतभेरीमृदङ्गशङ्खतन्त्रीनिर्घोषनिनादितं पृथिवीप्रदेश कुर्यात्। प्रशस्तशब्दधर्मश्रवणचतुष्पर्षानुकूलमहायानसूत्रां चतुर्दिक्षु पुस्तकां वाचयन्॥

तद्यथा—भगवती प्रज्ञापारमिता दक्षिणा दिशि वाचयेत्। आर्यचन्द्रप्रदीपसमाधि पश्चिमायां दिशि। आर्यगण्डव्यूह उत्तरायां दिशि। आर्यसुवर्णप्रभासोत्तमसूत्र पूर्वायां दिशि। एवमधीतचतु'सूत्रान्तिक पुद्गला धर्मभाणक पुस्तकाभावादद्ध्येपयेत्। धर्मश्रवणाय ततो मण्डलाचार्येणोत्थाय चन्दनकर्पूरकुङ्कुमव्यामिश्रकेण श्वेतसुगन्धपुष्पै. मूलम त्र जपता सर्वतस्त मण्डलमभिकिरेत्। अभिकीर्य च बहिर्निर्गच्छेत्। सप्ताहाद्धविर्याहारोपिता द्वौ त्रयो वा उत्पादितबोधिचित्त उपाषध उपवासोषितां चित्रकरा निपुणतरां प्रवेशयेत्। मूलमन्त्रेणैव शिखाबन्ध कृत्वा, तत सुवर्णरूप्यविविधरत्नपञ्चविचित्रोज्ज्वलचारुसूक्ष्मचूर्णताम्रा प्रतिगृह्य, महाभोगे. सत्त्वै' महाराजानैश्च धार्मिकै. लिखापनीयम्। बोधिपरायणीय बोधिपरायण नियतं॥

मण्डल दर्शनादेव किं पुनर्मन्त्रसाधने।
सत्त्वानामल्पपुण्यानां निर्वृते शाक्यपुङ्गवे॥
कुत एवंविधा भोगा विधिरेषा तु कल्प्यते।
दरिद्रजनतां दृष्ट्वा मञ्जुघोषो महाद्युतिः॥
उदीरयेत् कल्पसक्षेप मण्डल तु समासत।
शालितण्डुलचूर्णैस्तु सूक्ष्मैः पञ्चरङ्गोज्ज्वलैः॥

शुक्लपीतरक्तकृष्णहरितवर्णैर्वर्णयत् ।

पूर्वस्थापितक चूर्ण मण्डलाचार्येण स्वय गृह्य, महामुद्रा पञ्च-शिखा बद्ध्वा मूलमन्त्र जपता त चूर्ण मुद्रयेत् । अपरेण तु साधका चार्येण मण्डलाद्बहिर्दक्षिणपूर्वायां दिशि विधिदृष्टेन कर्मणा अग्नि कुण्डं कारयेत् । द्विहस्तप्रमाण हस्तमात्रनिम्न समन्तात् पद्मपुष्करा कार वहि' पद्मपुष्कराकारा पलाशकाष्ठसमिद्भि अग्नि प्रज्वाल्य श्रीफलकाष्ठसमिधानां वितस्तिमात्रप्रमाणाना सार्द्रां दधिमधुघृताक्ता मूलमन्त्र षडक्षरहृदयेन वा मुद्रामुष्टिं बध्वा आह्वयेत् । आहूय च पूर्वोक्तेनैव एकाक्षरमूलमन्त्रहृदयेन भूयो अष्टशत जुहुयात् ॥

ततो मण्डलाचार्येण बद्धोष्णीपकृतपरिकर आत्मना चित्रक रांश्च निपुणतरानात्मना कारयेत् । ततो मण्डलाचार्येण बुद्धबोधि सत्त्वां मनसि कुर्वता पूर्वोक्तेनैव धूपमन्त्रेण धूप दहता अञ्जलिं कृत्वा सर्वबुद्धबोधिसत्त्वा प्रणम्य, मञ्जुश्रिय कुमारभूत नमस्कृत्य चूर्ण गृहीत्वा, आकारयेत् । रूप चित्रकरैश्च पूरयितव्यम् । एतेन विधिना प्रथमत एव/बुद्ध भगवन्त शाक्यमुनि सर्वाकारवरोपेत रत्न सिंहासनोपविष्टं शुद्धावासवभनस्थ धर्म देशयमानमालिखत् । लिखि तश्च मण्डलाचार्यस्यानुसाधकेन आत्मरक्षाविधान मूलमन्त्रेण कृत्वा सर्वभूतिका बलिर्देया चतुर्दिक्षूर्ध्वमधः बहिर्मण्डलस्य क्षिपेत् ॥

ततो स्नात्वा अग्निकुण्डसमीप गत्वा शुचिवस्त्रप्रावृतन शुचिना कृता रक्षाविधानेन घृताहुतीना कुङ्कुमभिश्राणामष्टसहस्रं जुहुया मूल मन्त्रेण । तत. कुशपिण्डकोपविष्टेन जप कुर्वत तत्रैव स्थातव्यम् । श्वेतसर्षपाणामष्टाभिमन्त्रित कृत्वा यमान्तकक्रोधराजेनाभिमन्त्र्य शरा वसम्पुटे स्थापयेत् । अनेकाकारविकृतरूपघोरस्वरवातवर्षदुर्दिनयन्य तयान्यतम वा विघ्नमागत दृष्ट्वा हुतेन सर्षपाहुतय सप्त होतव्या । ततो विघ्ना. प्रणश्यन्ति । मनुष्यविघ्नैर्वा पञ्चाहुतयो होतव्या । स्तम्भिता भवन्ति अशक्तिव त' पुरुपा मृयन्ति वा । अमानुष्यैर्वा गृह्यन्ते तत्क्षणादेव न सन्देहोस्ति । कथञ्चन शक्रोऽपि म्रियते क्षि प्रम् । किं पुनर्दुष्टचेतसा मनुष्या', इतरे वा विघ्ना यमान्तकक्रोध भया निर्नष्टा विद्रवन्ति इता इत इति ॥

ततोऽनुसाधकेन तत्रैव कुशविण्डकापात्रपन यमान्तककोधरा जानं जप कुर्वाण स्थातव्यम् । तता मण्डलाचार्येण भगवन' शाक्य मुने प्रतिमाया दक्षिणे पार्श्व द्वा प्रत्येकबुद्धा पद्मासनोपविष्टौ पर्यङ्केनो पविष्टौ कार्या, तयारधस्ताद् द्वा महाश्रावका भग शृण्व न कार्यो। तेषामपि दक्षिणत. भगवानार्यावलोकितेश्वर. सर्वालङ्कारविभपित. श रत्काण्डगौर पद्मासनोपविष्ट , वामहस्तन पद्म गृहीत्वा दक्षिणहस्तेन वरद' । तस्यापि दक्षिणत भगवती पण्डरवासिनी पद्महस्ता दक्षिणेन हस्तेन भगवन्त शाक्यमुनि वन्दमाना पद्मासनोपनिषण्णा जटामकुटधा रिणी श्वेतपट्टवस्त्रनिवस्ता पट्टांशुकोत्तरासङ्गिनी कृष्णभस्मतृमुण्डी- कृता । एव तारा, भृकुटी स्वकस्वकासनेर्यथायथे सुस्थिता,कार्या । उपरिष्टाच्च भगवती तेषां प्रज्ञापारमिता, तथागतलोचना, उष्णीप- राजा स्वकार्या । एव बोधिसत्त्वा, षोडश कार्या । तद्यथा— समन्तभद्र , क्षितिगर्भ , गगनगञ्ज सर्वनीवरणविष्कम्भी, अपाय जह मैत्रेय', चमरव्यग्रहस्त , बुद्ध भगवन्त निरीक्षमाणः, विमल गतिः, विमलकेतु', सुधन, चन्द्रप्रभ, विमलकीर्ति, सर्वव्या धिचिकित्सक' सर्वधर्मेश्वरराज , लोकगति', महामतिः, पतिधर श्चेति । एते षोडश महाबोधिसत्त्वा प्रसन्नमूर्तय सर्वालङ्कारभूपिता लेख्याः । प्रधानविद्याराज , विद्याराज्ञी अब्जकले रूपकमुद्रा । स च यथास्मरत' आगमनश्च यथास्थानेषु वा शेषा लेख्या' । अन्ते च स्थान चतुरश्राकार स्थान स्थापये पद्मपुष्पसस्कृतम् । येन स्म- रिता विद्या देवता तेऽस्मिन् स्थाने तिष्ठन्त्विति ॥

एव दक्षिण पार्श्व भगवत शाक्यमुने द्वौ प्रत्येकबुद्धौ गन्धमा- दनः, उपारिष्टश्चेति । एव प्राङ्मुख मण्डल सर्वत प्रवेशद्वार का- र्यम् । भगवतः शाक्यमुने पार्श्व अपरौ द्वौ प्रत्येकबुद्धो चन्दनसिद्ध श्चेति आलेख्यौ । तेपामधस्ताद् द्वौ महाश्रावको महाकाश्यपमहाका- त्यायनश्चालेख्यौ । तेपामपि वामत' आर्यवज्रपाणिकुवलयश्यामा भ प्रसन्नमूर्तिः सर्वालङ्कारभूपित. दक्षिणे चामरव्यग्रहस्त' वामेन क्रोधमूर्तिस्थ. वज्रमुष्टि' वज्राङ्कुशि वज्रशृङ्खला सुबाहु वज्रसेन

यथावेषचिह्नस्थानासनसर्वविद्याराज्ञराज्ञीसपरिवारः रूपमुद्रादिषु यथास्मरणा लेख्याः । तेषामपि वामत. चतुरश्राकारमुभयवज्रमुद्रां लिखेत् । लिख्य च वक्तव्यम् , येऽत्र स्थाने न स्मरिता विद्यागणा , तेऽत्र स्थाने न स्मरिता विद्यागणा', तेऽत्र स्थान तिष्ठन्त्विति ॥

तेषामुपरिष्टात् वेद्यारमिता' भगवती मामकी आलेख्या सर्वालङ्कारविभूषिताश्च ता' प्रसन्नमूर्तय: ॥

तेषामप्युपरिष्टा अष्टौ उष्णीषराजान' समन्तज्वालमालाकुला: । मुद्रा च स्वकस्वकानि महाराजचक्रवर्तीरूपाणि आलख्यानि । कनकवर्णसुप्रसन्नेन्द्रियाणि सर्वालङ्कारविभूषितानि । ईषत् तथागत प्रतिमदृष्टिजातानि । तद्यथा — चक्रवर्ती, उष्णीष', अभ्युद्गतोष्णीष, सितातपत्र , जयोष्णीष, कमलोष्णीष , तेजोराशि , उन्नतोष्णीष इति ॥

एते अत' उष्णीषराजान' प्रत्येकबुद्धानां वामत. आलेख्य, द्वारे बुद्धो बोधिसत्त्वो कार्यप्रवेशतदक्षिणतो लोकातिक्रान्तगामी नाम जटामकुटधारी सौम्यमूर्ति' दक्षिणहस्तेन अक्षसूत्र गृहीत्वा वामहस्तेन कमण्डलु द्वाराभिमुख' ईषद्भ्रुकुटीवदन वामत' प्रवेशे महाबोधिसत्व अजितञ्जयो नाम आलेख्य' । प्रसन्नमूर्ति' जटामकुटधारी दण्डकमण्डलुवामकरावसक्तः दक्षिणहस्तेन अक्षसूत्र गृहीत्वा वरप्रदानकर. ईषद्भ्रुकुटीवदन' द्वाराभिमुख आलेख्य ॥

सिंहासनस्याधस्ताद् धर्मचक्र समन्तज्वालमालाकुल , तस्याप्यधस्तात् रत्नविमान', तत्रस्थो भगवां महाबोधिसत्त्व. मञ्जुश्री' कुमारभूत कुमाररूपी कुङ्कुमगौराकार' प्रसन्नमूर्ति चारुरूपी ईषित् प्रहसितवदन' वामहस्ते नीलोत्पलावसक्त' दक्षिणहस्तेन श्रीफलाय सक्तवरद. सर्वबालालङ्कारभूषितपञ्चचीरकोपशोभित' मुक्तावलीयज्ञोपवीत पट्टांशुकोत्तरीय. पट्टवस्त्रनिवस्तः समन्तप्रभ समन्तज्वाल मालाकुलः पद्मासनोपनिषण्ण' यमान्तकक्रोधराजगतदृष्टिः मण्डलप्रवेशद्वाराभिमुखः चारुदर्शनो सर्वतः आलेख्यः ॥

तस्य दक्षिणे पार्श्वे पद्मस्याधस्ताद् यमान्तकः क्रोधराजा आ लेख्यः महाविकृतरूपी समन्तज्वालमालाकुलः आज्ञां प्रतीच्छमानः महाबोधिसत्त्वगतदृष्टिः सर्वत आलेख्यः । वामपार्श्वे पद्मस्याधस्ताच्छु द्धावासकायिकाः देवपुत्ररूपिणः बोधिसत्त्वाः पञ्च आलेख्याः । तद्यथा—सुनिर्मलः, सुदान्तः, सुशान्तः, सशुद्धः, तमोद्घातनः, समन्तावलोकश्चेति । सर्वे च ते शुद्धावासभवनोपनिषण्णाः अनेकरत्नोज्ज्वलशिलातलाकारः समन्तज्वालविचित्रपुष्पावकीर्णश्चारुरूपी आलेख्य ॥

बहिः समन्ताच्चतुरश्राकार चतुस्तोरणाकार चतुर्दिश विचित्रपञ्चरङ्गोज्ज्वल सुप्रगुणरेखावनद्ध अभ्यन्तरमण्डलं कार्यम् । पूर्वायां दिशि भगवतः शाक्यमुनेः उपरिष्टाद् रेखाभिः मध्ये सङ्कुसुमितराजेन्द्रः पद्मासनोपनिषण्णः तथागतविग्रहः स्वल्पमात्रः कार्यः समन्तज्वालमालाकुलः वरदप्रदानहस्तः पर्यङ्कोपनिषण्णः ॥

तस्य दक्षिणतः उष्णीषचक्रवर्तिमुद्रा लेख्या । वामतस्तेजोराशिमुद्रा लेख्या । तथागतलोचनाया उपरिष्टात् प्रज्ञापारमितामुद्रा लेख्या । भगवतः आर्यावलोकितेश्वरस्योपरिष्टात् प्रज्ञापारमितामुद्राया दक्षिणतः भगवानमिताभः तथागतविग्रहः कार्यः वरप्रदानहस्तः पद्मासनोपनिषण्णः समन्तज्वालमालाकुलः ॥

तस्यापि दक्षिणतः पात्रचीवरमुद्रे कार्यौ । एवमनुपूर्वतः प्रवेशस्थाने पद्ममुद्रा कार्याः । भगवतो सङ्कुसुमितराजस्य तथागतस्य वामतो उष्णीषतेजोराशिमुद्रा लेख्या समन्तज्वालमालाकुलाः ॥

तस्यापि वामतः रत्नकेतुस्तथागतः कार्यः, रत्नपर्वतोपनिषण्णः धर्म देशयमानः नीलवैडूर्यमरकतपद्मरागविचित्रज्वालार्चिषि निर्गत समन्तात्समन्तप्रभ आलेख्यः ॥

तस्यापि वामतः जयोष्णीषमुद्रा समन्तज्वालमालाकुला आलेख्या । तस्यापि वामतः धर्मचक्रमुद्रा आलेख्या समन्तज्वालावती । तस्यापि वामतः खखरककमण्डलुमक्षसूत्रकमण्डलुं भद्रपीठमुद्रा आलेख्या । अनुपूर्वतः द्वारस्थाने वज्रसूच्योभयतः समन्तज्वाल

आलेख्यः । भगवतो मञ्जुश्रियस्याधस्तान्महामुद्रा पञ्चशिखा नाम, उत्पलमुद्रा वा लेख्या । समन्तज्वालिनौ एतौ अन्योऽन्यासक्त समन्त्- मण्डलाकारमालेख्यम् । द्वारतः पश्चान्मुखप्रवेशतः प्राङ्मुखश्च कार्यः ' सर्वेष्वपि बहिर्मण्डल भवति पञ्चवर्णरङ्गोज्ज्वलं विचित्रचारुदर्शन, चतु'कोणविभक्त, चतुस्तोरणाकार चतुर्दिश द्विहस्तमात्राभ्यन्तरमण्ड- लतो बहिरालेख्यम् । पूर्वस्यां दिशि महाब्रह्मा चतुर्मुख' शुक्लवस्त्रानि- वस्तः श्वेतवस्त्रोत्तरासङ्गिनः श्वेतयज्ञोपवीतः कनकवर्णः जटामकुटधारी दण्डकमण्डलु वामावसक्तपाणिः ॥

तस्य दक्षिणत. आभास्वरो देवपुत्रः कार्यः कनकवर्णः ध्या नान्तरगतमूर्त्तिः पट्टवस्त्रनिवस्तः पट्टांशुकोत्तरीय. सुप्रसन्नवदन' जटा- मकुटधारी श्वेतयज्ञोपवीत पर्यङ्कोपनिषण्ण' दक्षिणहस्तेन वरद. ॥

तस्य दक्षिणत अकनिष्ठो देवपुत्र. कार्य' सर्वालङ्कारभूषित' प्र- सन्नमूर्त्ति' ध्यानगतचेतसः पट्टवस्त्रनिवसननिवस्त. पट्टांशुकोत्तरीय' ॥

तस्य दक्षिणत' पर्यङ्कोपविष्टः दक्षिणहस्तेन वरद' श्वेतयज्ञोप वीतः ॥

एवमनुपूर्वतः, सन्तुषित सुनिर्मित', परनिर्मित', सुयामशक्रप्र- भृतयो देवपुत्रा आलेख्या. यथानुपूर्वतः यथावेषसस्कृता ॥

शक्रस्याधस्ताच्चातुर्महाराजकायिकाः सदामत्ताः मालाधारिणो करोटपाणयः वीणाद्वितीयका लेख्या' । भौमाश्च देवपुत्रा यथानुपूर्वतः यथावेषेनालेख्याः ॥

एव दक्षिणायां दिशि अनूह अनय सुदृश सुदर्शन परीत्ताभ पुण्यप्रसवप्रभृतयो देवपुत्रा आलेख्या यथावेपस्थानाः ॥

एव पश्चिमाया दिशि चोत्तरायां दिशि तेपामधस्ताद् द्विप ङ्क्ति आश्रिता आलेख्याः । द्वितीयमण्डलाद् बहिस्तृतीयमण्डलं भवति । चतुर्दिशं चत्वारो महाराजानः अनुपूर्वत आलेख्याः ॥

उत्तरायां दिशि प्रविशतो दक्षिणः धनद', निधिसमीपस्थः सर्वालङ्कारभूपितः ईषत्प्रलम्बकिरीटः यक्षरूपी । तस्य दक्षिणत मणिभद्र- पूर्णभद्रौ यक्षसेनापती आलेख्यौ ॥

एवमनुपूर्वेन. हारीती महायक्षिणी आलेख्या । प्रियङ्कर कुमार उत्सङ्गोपविष्टो मण्डलं निरीक्षमाण आलेख्या. । पञ्चिक पिङ्गल भीषणश्च आलख्य' ॥

तेषा च समीपे यक्षाणा मुद्रा आलेख्या । एवमनुपूर्वत वरुणो पाशहस्त पश्चिमाया दिशि आलेख्यः । नागौ नन्दोपनन्दौ तक्षकवासुकिप्रभृतयाऽष्टौ महानागराजान आलेख्या' ॥

एव द्विपङ्क्त्याश्रिता' अनुपूर्वत' यक्षराक्षसकिन्नरमहोरगऋषय' सिद्धप्रेतपिशाचगरुडकिन्नरमनुष्या मनुष्याद्या ओषधयश्च मणिरत्नविशेषा' पर्वता सरित. द्वीपाश्च अनुपूर्वत. सर्वे प्रधाना लेख्या. ॥

दक्षिणाया दिशि यम आलेख्य सपरिवार । मातरा सप्त पूर्वदक्षिणस्या दिशि । अग्नि समन्तज्वालमालाकुल' दण्डकमण्डलु अक्षसूत्रव्यग्रपाणि जटामकुटधारी श्वेतवस्त्रनिवस्त पट्टांशुकोत्तरासङ्गिक' श्वतयज्ञोपवीत कनकवर्ण. भस्मत्रिपुण्डरीकृतः ॥

एव नानाकरणप्रहरणवेषसस्थानवर्णतत्त्वद्विपङ्क्ती आश्रिता आलेख्या । सर्वत प्रविशतो बहिर्मण्डले उमापतिर्वृषवाहनस्त्रिशूलपाणि, उमा च देवी कनकवर्णा सर्वालङ्कारभूषिता, कार्तिकेयश्च मयूरासन शक्त्युद्यतहस्त कुमाररूपी षण्मुख रक्ताभासमूर्ति पीतवस्त्रनिवस्त' । पीतवस्त्रोत्तरासङ्ग वामहस्तेन घण्टा गृहीत्वा रक्तपताकां च अनुपूर्वतः भृङ्गिरिटि अत्यन्तकृशाकार' महागणपतिनन्दिकेश्वरमहाकालौ मातराः सप्त यथाभरणप्रहरणवेषसस्थानाभिलेख्या' । अष्टौ वसव, सप्त ऋषयः, विष्णुश्चक्रपाणिश्चतुर्भुजो गदाशङ्खासिहस्तो गरुडासनः सर्वालङ्कारभूषितश्च । अष्टौ ग्रहा', सप्तविंशतिनक्षत्रा., येषु चरन्ति भुवि मण्डले उपग्रहाश्चाष्टा नेत्रा लेख्याः अनुपूर्वेश पञ्चदश तिथय' सितकृष्णा, द्वादश राशयो षड् ऋतवा, द्वादश मासाः सवत्सरश्च । चतुर्भगिन्य' नाराभिरूढा' भ्रातृपञ्चमाः सलिलवासिनश्चेति सक्षेपता मुद्रासु व्यवस्थाप्या हि देवता अनुपूर्वतश्च द्विपङ्क्त्या श्रिताश्च कार्या सक्षेपतो मण्डलत्रये पितृमण्डलाश्रय । अभिलेख्य चतुरश्रश्च । त्रिमण्डलेष्वपि व्यवस्था सेषा भवति । सक्षेपत' बुद्धो भगवान

सर्वसत्त्वानामग्र अवश्यमभिलेख्य । अब्जकुले आर्यावलोकितेश्वरो दक्षिणत अवश्यमभिलेख्य । वामत वज्रकुले वज्रपाणिरवश्यमभिलेख्यः । बोधिसत्त्वानामग्र आर्यसमन्तभद्रोऽवश्यमभिलेख्य । मञ्जुश्री कुमारभूतोऽवश्यमभिलेख्य । सैषा मुद्रासु यथाव्यवस्थायामभिलेख्या । एतदभ्यन्तरमण्डल मध्यमण्डलेऽपि ब्रह्मा सहाम्पात पूर्वायां दिश्यवश्यमभिलिखितव्यः। एवमाभास्वरो दक्षिणायां दिशि, अकनिष्ठ अरूपिणश्च देवा मण्डलाकारा अव्यक्ता नैव सञ्ज्ञानासञ्ज्ञायतना देवा, उत्तरायां दिशि शक्रो देवराजा सयामः सन्तुषित' सुनिर्मित परनिर्मित' परीत्ताभप्रभृतयो देवपुत्रा अवश्यमनेक देवराजोऽभिलिखितव्य' । सैषा मुद्रासु व्यवस्थाप्या' ॥

एव तृतीयमण्डलेऽपि उत्तरायां दिशि ईशानो भूताधिपति॰ सहोमयावश्यमभिलिखितव्य' । द्वितीयद्वारसमीपे कार्त्तिकयमञ्जुश्री मयूरासन शक्तिपाणि॰ रक्तावभासमूर्त्ति पीतवस्त्रनिवस्तोत्तरासङ्गिन दक्षिणहस्ते घण्टापताकाग्रसक्त॰ कुमाररूपी मण्डल निरीक्षमाण । पूर्वायां दिशि वैनतेयः पक्षिरूपी । ऋषिर्मार्कण्डः अवश्यमभिलिखितव्य । सैषा मुद्रासु च व्यवस्थाप्याः ॥

दक्षिणपूर्वत' चतु कुमार्या कुमारभ्रातृसहिता नौयानसस्थिता महोदधे' परिभ्रमन्त्यः । अग्निश्च देवराट् अवश्यलिखितव्यः । एवं दक्षिणस्यां दिशि लङ्कापुरी विभीषणश्च राक्षसाधिपति, तत्रास्थित॰ पिचुमन्दवृक्षाश्रितः जम्भलजलेन्द्रनामा यक्षरूपी बोधिसत्त्वोऽवश्यमभिलिखितव्य' ॥

एवमनुपूर्वतो यमो राजा प्रेतमहर्द्धिकोऽवश्यमभिलिखितव्यः । एवं पिशाचराजा विकरालो नामावश्यमभिलिखितव्य' । सैषा मुद्रासु व्यवस्थाप्या ॥

तत्र दक्षिणपश्चिमायां दिशि नन्दोपनन्दौ नागमुख्यो अवश्यमभिलिखितव्यौ । ग्रहमुख्यश्चादित्यः पश्चिमायां दिशि कपिलमुनिर्नाम ऋषिवरो निर्ग्रन्थतीर्थकरऋषभ निर्ग्रन्थरूपी अनुपूर्वत' । सैषा मुद्रासु व्यवस्थाप्या । उत्तरपश्चिमासु च दिशासु यक्षराड धनद',

गन्धर्वराट् पञ्चशिख किन्नरराजा द्रुम, एतेऽवश्यमभिलिखितव्याः। सैषा मुद्रासु च अनुपूर्वेत यथास्थान संस्थिता अभिलिखितव्या इति ॥

चतुर्थमण्डल वहि पञ्च रेखा चित मुद्रमालाभिश्चापशोभित चतुरश्र चतुस्तोरणाकार चतुर्महाराजविभूषित यथानुपूर्वस्थिता। तद्यथा — मुद्रा भवन्ति पूर प्रदेशे नीलोत्पलमभिलेख्यम्। दक्षिणतो वामत पद्म वज्र परशुखड्गशूलत्रिशूलगदाचक्रस्वस्तिककलशमीनशङ्खकुण्डलध्वजपताक पाशघण्टाकद्वारकधनुर्नाराचमुद्गर एतैर्विविधाकारमहरणमुद्रैः समन्ताच्चतुरश्रमालाकुलं कुर्यादित्यत वहिश्चतुर्दिश चत्वारो महासमुद्राः स्थापनीयाः ॥

उत्तरायां दिशि चतुरश्राकार मण्डलक कृत्वा उभयतज्रं त्रिसूच्याकार समन्तज्वाल त्रिकोणाकार मण्डलक कृत्वा स्थापयेत् ॥

दक्षिणायां दिशि धन्वाकार मण्डलक कृत्वा पात्र समन्तज्वाल स्थापयेत्। पश्चिमायां दिशि समन्तप्रभाकार मण्डलक कृत्वा नीलोत्पलं सनालपत्रोपेत समन्तज्वाल विदिक्षु च चत्वारो मुद्रा भवन्ति। उत्तरपश्चिमायां दिशि पाश वर्तुलाकार मण्डल कृत्वा समन्तज्वाल दक्षिणपश्चिमायां दिशि दीर्घाकारमण्डलक कृत्वा दण्ड समन्तज्वाल दक्षिणपश्चिमायां दिशि परशु सम तज्वाल त्रिकोणाकार मण्डलकं कृत्वा पूर्वोत्तरायां दिशि खड्ग समन्तज्वाल स्थापयेत् ॥

आलिख्य सर्वत इत्यूर्ध्वमधस्तिर्यक् त्रीणि मुद्राद्वारसमये वहि मण्डलस्यालेख्या चूर्णैरेव। तद्यथा — वज्रव्यजनोपानहौ च समन्त ज्वालिनस्त्वेते अभिलेख्या इति ॥

एत मण्डलविधान कथितं त्विह समासत ।
सत्त्वाना हितकाम्यार्थं मञ्जुघोषेण धीमता ॥

ततो मण्डलाचार्येण शिष्याः पूर्वमेवानुगृहीतव्याः अविकलेन्द्रियाः सर्वाङ्गशोभनाः ब्राह्मणक्षत्रियविट्शूद्राः उत्पादितबोधिचित्ता महायानयायिन इतरयानास्पृहणशीला महासत्त्वाः श्रद्धा कल्याणधर्मिणः महाराज्याभिकाङ्क्षिणः अल्पभागजुगुप्सनाः महाभोगाभिरुचि

तवन्तः भद्रा विनीता' शीलवन्त' भिक्षुभिक्षण्युपासकोपासिका निय मस्था उपोपवोपवाससवरस्था महाबोधिसत्त्वाद्रूपिणो महायक्ष'कुकी- ना मकृत्यैव धर्मचारिण अहोरात्रोषिता शुचिवस्त्रप्रावृता' सुग ध- केशा त्रि'स्नायिन' मोनिनश्च । तदहा कर्पूरकुङ्कुमलवङ्गसुग धमुखग धिन नित्य चोपस्पृशितव त' कुशपिण्डकोपविष्टाः कृतरक्षाविधाना' ब्रह्मचारिण सत्यव त + + + + + + न्मण्डल + + + + + नात्यासन्ने स्थापनीया' । शुचिन सुचौक्षाः अष्टाना प्रभृति यावदक ना'न्येषाम् । ते च परस्परासंसक्तिन॰ क्षत्रिया मूर्द्धाभिषिक्ताश्च महा राजान । तेषां च सुता॰ कुमारकुमारिकाश्च अविदितग्राम्यधर्माण कारण भगवान् कुमाररूपी महाबोधिसत्त्वो मञ्जुश्री' बालजनप्रबो धक' कुमारक्रीडनपरश्च । अत' प्रथमतर एव कुमार प्रवेशयितव्यः । महाराज्ञाभिवर्द्धन आयुरारोग्यैश्वर्यकाम भोगाभिवर्द्धन च विशेषत॰ बालानां मन्त्रसिद्धि' ध्रुव स्थिता इति ॥

एता पूर्वस्थापिता कृत्वा सुसखायोपेता अप्रमत्ता ततो मण्ड लाचार्येण कर्पूरधूप दहता पृष्ठतो बहिर्निग तव्यम् । निर्गत्य च य- थासुखतुकोदकेनाष्टशताभिमन्त्रितेन मूलमन्त्रेण महामुद्रा पञ्चशिख- मुद्रितेनोदकेन स्नात्वा उपस्पृश्य च शुचिर्वस्त्रप्रावृतेन शुचिना अग्नि कुण्ड गत्वा कुशविण्डकोपविष्ट' उत्तरपूर्वाभिमुखः आहुतीनां कर्पूरकु- ङ्कुमचन्दनमिश्राणामष्टसहस्र जुहुयात् ॥

पूर्वोक्तेन विधिना आहूय विसृज्य च भूयो मण्डल प्रवेष्ट- यम् । प्रविश्य चाष्टो पूणकलशा॰ शुचिवस्त्रोपेताः सहकारपल्लवविभू षिता॰ सुवर्णरजतरत्नधान्यव्रीहिप्रक्षिप्तगर्भ एक भगवतः शाक्यमुनेः प्रतिपादयेत् । द्वितीय सर्वबुद्धानाम् । तृतीय सर्वप्रत्येकबुद्धार्यश्राव- कसङ्घस्य । चतुर्थ' सर्वमहाबोधिसत्त्वानाम् । पञ्चमा महाबोधिसत्त्वस्य आर्यमञ्जुश्रियस्य । षष्ठ' सर्वदेवानाम् । सप्तमाष्टमौ द्वितीयमण्डले द्वारकोष्ठके स्थापयितव्यौ । शुचिवस्त्रोपेता । एक' सर्वभूतानाम् । द्वितीय पूर्वसत्त्वपरिणामित' साधारणभूतं स्थापयितव्येति ॥

ततः पूर्वोक्तेनेव विधिना धूप दहता महामुद्रापञ्चशिखां

बध्वा भूयश्चावाहनं कुर्यात्। सर्वबुद्धानां, सर्वप्रत्येकबुद्धानां, आर्य श्रावकमहाबोधिसत्त्वानां, सर्वभूताना, सर्वसत्वांश्च मञ्जुश्रियं कुमार भूतं च पूर्वोक्तेन विधिना आह्वानयेत् ॥

एवं पुष्पधूपगन्धप्रदीपे निवेद्यांश्च पूर्वनिर्दिष्टेनैव कर्मणा निवेद्यः। सर्वेषां सर्वत अनुपूर्वेणैव कुर्यात्। प्रदीपग्रहणेनैव घृतदीप दद्यात्। सर्वेभ्य आर्यानार्येभ्य निवेद्यग्रहणेन शाल्योदन दध्नोपेत मधुपायसविशेषविशेष्योपरचितघृतपक्वपूपान् अशोकवर्त्तीखण्डखाद्य काद्यां सर्व तथागतेभ्यो नियातयेत्। हवि पूर्ण श्रीवेष्टमधुशिरपयो पक्वभक्षाद्या सर्वप्रत्येकबुद्धार्यश्रावकमहाबोधिसत्वानार्यदेवतानां च निर्यातयेत्। एव लड्डुकागर्भोक्तारकविशेषान् पूपोपकारणान् सर्व देवभूतगणान् सर्वसत्वांश्च मन्त्रोपेतान् विधिना निर्यातयेत्। एव सुगन्धपुष्पान् जातीतगरनागपुष्पपुन्नागप्रभृतिं पूर्वनिर्दिष्टान् सर्वबुद्ध प्रत्येकबुद्धार्यश्रावकमहाबोधिसत्वेभ्य आर्यानार्येभ्यो निर्यातयेत्। विशेषतः तथागतकुले जातीकुसुम पद्म पद्मकुले तथा कुवलय कुलिशपाणे अन्यमन्त्रेभ्यो इतरमिति कर्पूरधूप तथागतकुले चन्दन पद्म कुले तथा गुग्गुलुं गुह्यके द्रस्य वज्रिणस्यैव शस्यते। अन्यमन्त्रेभ्य सर्वेभ्य' धूपं दद्यात् इतरघृतप्रदीपानार्येभ्य' सर्वेभ्यश्चैव दापयेत्। अनार्येभ्य मन्त्रेभ्य सुगन्धतैल तु दापयेत्।

अनुपूर्वेण विधिना पूर्वदृष्टेन हेतुना।
गन्ध । । यथैवोक्त सर्वमन्त्रेभ्यो नित्यश ॥
अवलोकितेन यत् प्रोक्त यत् प्रोक्त कुलिशपाणिना।
स्वकस्वकेषु तन्त्रेषु मन्त्रचर्यार्थसाधने ॥
तेष्येह कल्पे द्रष्टव्याः अनुवर्त्त्याश्च सर्वदा।

इति ॥

ततो मण्डलाचार्येण पूर्वदृष्टेन विधिना आवाहनपूजनधूपना दिनिवेद्यप्रदानानुवर्तनक्रियां कृत्वा, ततोऽनुसाधकेन कुशलेन त्वरमाणेन सार्वभौतिक बालिं निरामिषां सर्वतश्च पटहशङ्खध्वनिनन्दीश ब्दघोषनिनादितेन धूपपुष्पदीपमालभिरचितः चतुर्दिक्षु विदिक्षु च

इत्यूर्ध्वमधस्तिर्यक् सर्वतो बहिर्मण्डल प्रदक्षिणी + + + वै भौतिकां क्षि + + + + + यां दधिमधुघृताक्तानां शालित दुलाहुतीनामष्टसहस्र जुहुयात् । षडक्षरमूलमन्त्रहृदयेन जुह्वत पूर्वस्थापितकां मण्डलानुप्रवेशमहासत्त्वां कृतरक्षाविधानानां मण्डलाचार्यशिष्यत्वाभ्युपगतानामुत्पादितबोधिचित्तानामुपोषधिकाना सर्वबुद्धबोधिसत्त्वात्मानिर्यातितमूर्त्तीना सिद्ध्यर्थसत्त्वोपभोगसाधारणभूतानामनुत्तरबोधिमण्डाक्रमणकुशलानां सर्वज्ञज्ञानबुद्धलिप्सकामानां मण्डलदर्शनादेव मुच्यते सर्वकिल्बिषात् । आनन्तर्यहारिणोऽपि ये मुच्यन्ते तत्क्षणाज्जना इति ॥

ततो मण्डलाचार्येण अनाहतेन वस्त्रेण तन्त्रोद्धृतेनापगतकेशेन मूलमन्त्रसप्ताभिमन्त्रितेन सुगन्धचन्दनकुङ्कुमाभ्यक्तेन पटेन मण्डल प्रवेष्टुकानां मुख वेष्टयित्वा प्रथमत बालषोडशप्रभृति यावत्त्रीणि वर्षजन्मिक पञ्चचीरकोपशोभित एकचीरकोपशोभितं शिखोपशाभितं अशिरस्क वा राजपुत्रं मूर्धाभिषिक्त क्षत्रियपुत्र वा, अन्य वा महोत्साहमहाराज्यकाम वा प्रवेशयेत् ॥

द्वितीयमण्डलस्थित मुख वेष्टयित्वा, उत्पलमुद्रां बद्ध्वा, मञ्जुश्रियः कुमारभूतस्य मूलमन्त्र सकृज्जप्त्वा, कारापयित्वा गन्धपुष्पं दत्त्वा, चन्दनकुङ्कुमाभ्यां मिश्र सचोक्षाभ्यां हस्ताभ्या पुष्पाणि क्षिपापयितव्याः । यत्रास्य पुष्पमधितिष्ठति तमस्य मन्त्र दद्यात् । स्वमन्त्रेति कीर्त्यते । सैवास्यानुबद्धा जन्मपरम्परासु सैवास्य कल्याण मित्रा बोधिमण्डक्रमणमहाबोधिसत्त्वज्ञज्ञानपरिपूरणार्थमभिनिर्हरति । सैवास्य साधनीयम् । महाभोगमहाराज्यमहेशाख्यपुद्गलसमवधान ता चास्यमभिनिर्हरति । इहैव जन्मनि अविचारतः साधनीय सिध्यते सर्वकर्मेषु च । एवमनुपूर्वत' एक प्रति तावद् यावदष्टानां नान्येषामिति सिद्धिकामैः । अन्येषां यथेप्सत पापक्षपणार्थं समयमात्र स्यादिति अभिषेक ददता मण्डलाचार्येण आदौ ताव मण्डले बहिर्नातिदूर नात्यासन्ने पूर्वोत्तरे दिग्भागे भूप्रदेशे अधिष्ठाय मन्त्रपूतं कृत्वा मूल मन्त्रेण ततः राज्याभिषेकमिव मन्यमानमात्मान एकान्ततुद्धधर्मसङ्घाभिप्रसन्नं श्राद्धं महोत्साहिनं अविरहितबोधिचित्त महायानयायिनं

रत्नत्रयोपकारिण अविकलेन्द्रिय अकुत्सितमिहैव जन्मनि मन्त्रां साधयितुकाम । भद्राशय मन्त्रचर्यानुरक्तमानस रोतुकजातीय जिज्ञासनहेतोरपि अविकल्पितम त्रार्थतद्गतमानस ण्क प्रभृति यावत्प्रभे अभिपन्ना रो-यात्रज्या इति । प्राज्ञा अमृ-गारः । इति । शपता अभिषेच्या । नान्यषामपि । तत सर्वराज्याभिषेकमिवापकरण सम्भृत्य आचार्या त्रा येन तुष्येत । तत त्रितात्रितानोच्छ्रितध्वजपताकश्वेतच्छत्रमूर्धनि धार्यमाण. सितचामरे निवीज्यमात महता सत्कारेण नन्दीशब्दनिर्घोषशङ्खभेरीमृदङ्गजयशब्दै मङ्गलगाथाभि' प्रशस्तस्वस्तिकगाथाभिश्च जिनभाषितैरभिस्तूयमान प्रदक्षिणीकृत्य च तन्मण्डल सर्वबुद्धबोधिसत्त्वा प्रणम्य आचार्य शिरसा प्रणम्य, एव च वक्तव्यम् ज + + ध्याचार्यसर्वबुद्धबोधिसत्त्वमन्त्रचर्यानिर्हार ममनुप्रवेष्टु सर्वलौकिकातिक्रा तरहस्यविमोक्षमण्डल रामनुप्रवेष्टु सर्वधर्मराज्यम मनुप्रवेशबुद्धत्वमधिगन्तु सक्षेपतो वक्तव्य बुद्धो भूयामिति ॥

ततः कुशविण्डकोपविष्ट पूर्वाभिमुखः म + + + + । । । । । ।

पञ्चशिखा बद्धापयितव्य' । ततो स्वस्थितं मन्त्र या यस्य रोचते भूर्जपत्रे गारोचनया लिखितव्यम् । लिखि त्रा चन्दनकुङकुमाभ्या हस्तौ म्रक्षयित्वा शरावसम्पुट च ततस्त भूर्जपत्र शरावसम्पुटाभ्यन्तरस्थ । । । बोधिसत्त्वस्य पादमूले स्थापनीयम् ॥

ततस्तत्रोपविष्टेन विद्यामूलमन्त्रा अष्टशतवारानुच्चारयितव्य' । पूर्वमेव तु ततः त कुशविण्डकोपविष्टमभिषेचनीयम् । बहिर्मण्डले य सर्वसत्त्वसाधारणभूत पूर्णकलश पूर्वस्थापितक द्वारसमीप त गृही त्रा आचार्येण मूलमन्त्र पठता मूर्धनि अभिषेक्तव्यः । शेषा यथेष्टमुदकेनेति ॥

ततस्त शरावसम्पुट तस्यैव दातव्यम् । प्रदीपेन च पाठयितव्यः । यदि सा एव भवति मन्त्रा क्रमात् सिध्यति यत्नत. । अथ अ यो मन्त्रपठनादेव सिद्ध्यति । अथ मन्त्राक्षरहीनातिरिक्ता वा

दत्ता भवति, प्रथमसाधन एव सिध्यतीत्यविकल्पत । सा एष पूर्वलिखिता आचार्येण त्रिभि साधनै क्षुत्रं सिद्ध्यतीत्ययत्नतः ॥

एवं प्रथमत विद्याभिषेक दद्यात् । द्वितीयमण्डलाभिषेक द्वितीयमण्डले सर्वदेवाना यत् प्रतिपादितक पूर्णकलश, तेनाभ्यषिञ्चेत् । मूर्धनि यथैव वा पूर्वक तेनैव विधिना मुच्यते सर्वकिल्विषात् । अनुज्ञातश्च भवति सर्वबुद्धै सर्वलौकिकलोकोत्तरसमयमण्डल सर्वमन्त्रमुद्रासाधनेषु च अध्यष्टो भवति । सर्वबोधिसत्त्वैरिति आचार्याभिषेक दद्यात् ॥

तृतीयमण्डले सर्वश्रावकप्रत्येकबुद्धेभ्य पूर्णकलश निर्यातितकं तेनैव विधिना मूर्ध्न्यभिषेचयेत् । वक्तव्य अनुज्ञातस्त्वं सर्वबुद्धै बोधिसत्त्वैश्च महर्द्धिकै सर्वलौकिकलोकोत्तराणां म त्राणा लिखनपठनमण्डलोपदेशमन्त्रतन्त्रमुद्राचर्यानिर्देश स्वय चरितु निर्देष्टु वा । इहैव जन्मनि परम्परासु च यावत्पश्चिमक नियत बुद्धत्वं प्राप्तव्यमिति ॥

एव जयविजयाभिषेकेऽपि पूर्वनिर्दिष्टेन विधिना भगवतो बुद्ध निर्यातितकपूर्णकलशेन बोधिसत्त्वनिर्याति । तेन च पूर्णकलशेन तथैवाभ्यषिञ्चेत् । एव च वक्तव्यमनुज्ञातस्त्व सर्वबुद्धैर्भगवद्भिर्महाबोधिसत्त्वैश्च श्रावकै,

अभ्रय सर्वभूताना जित सर्वमोहनाम् ।
विजयत्व सर्वमन्त्राणां साधयस्व यथेप्सत ॥
ततो मण्डलाचार्येण एकैकस्य यथेप्सत ।
पञ्चाभिषेका दातव्या सर्वेभ्या पञ्च एव तु ।

ततस्तामनुपूर्वेण मण्डल प्रवेश्य शवबुद्धबोधिसत्त्वाना निर्यातयित्वा मण्डल त्रि प्रदक्षिणीकृत्य विसर्जयितव्य । तदहो परेण अनुपूर्वेण शिक्षयितव्या म त्रचर्यासु नियोक्तव्या । तत्क्षणादेव भगवतो मञ्जुश्रियस्य महाबोधिसत्त्वस्य य पूर्वनिर्यातितक पूर्णकलश गृहीत्वा तेषा मण्डलप्रविष्टानामुदकचुलुकत्रय पूर्वाभिमुखं कृत्वा पाययेत् । वक्तव्याश्च—'इय भो महाबोधिसत्त्वस्य मञ्जुश्रियः कुमारभूतस्य

समयरहस्य मातिक्रमिष्यथे'ति मा वहु अपुण्य प्रसविष्यथे'ति। तानि
मन्त्राश्च न प्रतिक्षेप्तव्या । सर्वबुद्धबोधिसत्त्वाश्च न विसंवादनीया. ।
गुरुराराधनीयश्चेति । अ यथा समयातिक्रम' स्यात् । मन्त्राश्च सिद्धिं
न गच्छेयु' । वहुपुण्य स्यादिति । एव विसर्जयितव्या' ॥

ततो मण्डलाचार्येण भूयो दधिमधुघृताभ्यक्ता शालितण्डु
लाहुतयोऽष्टा६ हृदयेन होतव्या । ततोत्थाय मण्डलमध्य प्रविश्य
पूर्वनिर्दिष्टै पुष्प पूर्वोक्तेन विधिना अर्घ्य देय' सर्वेभ्य. मनसा
चिन्तयेत् । पूर्वोक्तेनैव धूपेन सर्वबुद्धबोधिसत्त्वा प्रत्येकबुद्धार्यश्राव
का सर्वदेवनागयक्षगरुडगन्धर्वकिन्नरमहोरगयक्षराक्षसपिशाचभूतयो
गिनसिद्धऋषय. सर्वसत्त्वा सन्धूप्य पुष्पैरवकीर्य चन्दनकुङ्कुमो
दकेनाभ्यपिञ्चेत् । पूर्वोक्तेनैव विधिना विसर्जयेत् । मनसा मोक्षः
सर्वेभ्य इति ॥

ततो मण्डलाचार्यण निवेद्य वलिं चूर्ण सर्व नद्यां प्लावयित
व्या । दु खितेभ्यो वा प्राणिभ्यो दातव्यम् । सुपरामृष्ट सुकेलायितं
सुशोभित पृथिवीप्रदेशं कृत्वा गोमयेन लेप्तव्य । उदकेन वा प्लाव
यितव्यम् । शुचौक्षमृत्तिकया वाभ्यलिम्प्य सिकताया वा अस्यैव
कार्य यथेष्टता गन्तव्यम् । तैर्मण्डलप्रविष्टैरात्मनः क्षीरोदनाहारेण
हविष्याहारेण वा भवितव्यमिति ॥

बोधिसत्त्वपिटकावतंसका महाकल्पराजेन्द्रा मञ्जुश्रीकुमारभूतविकुर्वणात्
बोधिसत्त्वपटलविसराद् द्वितीय मण्डलविधिनिर्देश
पारवर्त समाप्त इति ।

— ——

अथ तृतीय परिवर्तः ।

अथ खलु मञ्जुश्रीः कुमारभूतः पुनरपि तं शुद्धावासभवनमव लोक्य तां महापर्षन्मण्डलसन्निपतितां सर्वबुद्धबोधिसत्त्वां प्रणम्य, एकाक्षरं परमगुह्यं सर्वविघ्नघातसर्वकार्मिकं च मन्त्रं स्वमण्डलसाधनौप यिकं सर्वक्षुद्रकर्मेषु चोपयोज्य भाषते स्म । कतमं च तत् । नमः सम न्तबुद्धानाम् । तद्यथा — जः । एष समासतः सर्वभूतगणाश्च अस्यैव मन्त्रमेकाक्षरस्य द्वितीयं मण्डलविधानं संक्षेपतो योज्यम् । अष्टहस्तं चतुर्हस्तं वा भूमदेशं संशोध्य पञ्चरङ्गिकैरेव चूर्णैः स्वयं लिखितव्यम् । न परैः । यत्र वा तत्र वा न चात्र दोषः । समं चतुरश्रं त्रिमण्डलो- पशोभितं पञ्चशिखां महामुद्रां प्रथमं च तत्रालिखेत् । भगवतो मञ्जु- श्रियः उत्पलमुद्रां दण्डमुद्रां वज्रमुद्रां यष्टिमुद्रां च । एते मुद्रा अभ्यन्त रमण्डलपूर्वदिग्भागे आलिखितव्याः । तत पद्मवज्र उत्पलध्वजपताक च्छत्रतोरणरथकुञ्जरं अश्वबलीवर्दमहिषस्वस्तिकमयूर अजमेषपुरुषकु माररूपी बहिर्द्वारमूले आलिखितव्य । यथानुपूर्वतः पङ्क्ति आश्रिता आलेख्याः त्रिमण्डलाश्रिता एवं कार्या स्युरिति ॥

ततो एकाक्षरेणैव मन्त्रेण पूर्वदक्षिणे दिग्भागे अग्निकार्यं का र्यम् । अपामार्गसमिधानां दधिमधुघृताक्तानां अष्टशतं होतव्यम् । ततः पुष्पैरर्घ्यो देयः । एकाक्षरेणैव मन्त्रेण बलिनिवेद्यप्रदीपं यथेप्सितं दातव्यम् । धूपं वा, आह्वानविसर्जनं कुर्यादिति ॥

ततः प्रवेशयेद् राज्यकामं नगरमध्ये आलिखेत् । भोगकामं व- टवृक्षसमीपे, पुत्रकामं पुत्रञ्जीवकवृक्षसमीपे, अनपत्नीकं हस्त्यश्वकामं कुञ्जरशालायां वाजिशालायां वा, दष्टकं महाहृद नागायतने वा, चा तुर्थकनित्यज्वरसर्वज्वरेषु च एकलिङ्गे ग्रामदक्षिणादिशे वा, राक्ष सगृहीतं श्मशाने शून्यगृहे वा, पिशाचगृहीतं बिभीतकवृक्षसमीपे एरण्ड वृक्षसमीपे वा, मातरसर्वग्रहीतेषु चतुष्पथेषु मृतकमृतकगृहसमीपे वा, ब्रह्मराक्षसगृहीतं तालवृक्षे श्लेष्मातकवृक्षे वा, गरदत्तकं एकाक्षरेणैव मन्त्रेण उदकं सप्ताभिमन्त्रितं कृत्वा ॥ तत्रैव मण्डलमध्ये पातयितव्यः पुरुषो ॥

एवं स्त्रियाया पुरुषस्य वा यशोर्थिन च चत्वरे ब्रह्मस्थले वा आलिखितव्यम् । मृतवत्साया सफले वृक्षे क्षीरवृक्षे वा, शालिधान्यपक्वकेदारमध्ये अनपत्याया लिखितव्यम् । विविधरोगस्त्रीकृतान्यदुष्टतः मतरादिषु महारोगस्पृष्टासु, रक्षोघ्न नदीपुलिने कूले वा पर्वताग्रे चाभिलेख्यम् । सर्वरोगेषु सर्वत । डाकिनीकृतान्यपि ब्रह्मपालिकायां शून्यवेश्म एकान्तस्थान निम्नप्रदेशे वा । एवं सर्वकर्मेषु अर्धरात्रे मध्याह्ने वा सर्वकालमभिलिखितव्यम् । तेनैवैकाक्षरमन्त्रेण पुष्पैरर्घ्यं दत्वा विसर्ज्य च मण्डल उदकेन प्लावयितव्यम् । सर्वग्लानानां महती रक्षा कृता भवति ॥

मुच्यते सर्वरोगेभ्या ईप्सितमर्थं च सम्पद्यन्ते ।
अपुत्रो लभते पुत्र दुर्भग सुभगो भवेत् ॥
दरिद्रो लभते अर्थां दर्शनादेव मण्डलम् ।
स्त्रियस्य पुरुषस्यापि श्राद्धस्यापि कल्पत ॥
यथेष्टविविधाकारां प्राप्नुयात् सम्पदां सदा ।

इति बोधिसत्त्वपटलविसरा मञ्जुश्रीकुमारभूतमूलकल्पात
तृतीयो मण्डलविधानपरिवर्त ।

---

## चतुर्थः पटलविसरः ।

नमो बुद्धाय सर्वबुद्धबोधिसत्त्वेभ्यः । अथ खलु मञ्जुश्रीः सर्वावन्त शुद्धावासभवनमवलोक्य, पुनरपि तन्महापर्षन्मण्डलसन्निपातमवलोक्य, शाक्यमुनेश्चरणयोर्निपत्य, प्रहसितवदनो भूत्वा, भगवन्तमेतदवोचत् ॥

तत् साधु भगवां सर्वसत्त्वानां हिताय मन्त्रचर्यासाधनविधाननिर्हारनिष्यन्दधर्ममेघप्रवर्षणयथेप्सितफलनिष्पादनपटलविसरः पटविधानं, अनुत्तरपुण्यप्रसवं, सम्यक् सम्बोधिबीजमभिनिर्वर्तकं सर्वज्ञज्ञानाशेषं अभिनिर्वर्तकं सक्षेपतः सर्वाशापारिपूरकं सर्वमन्त्रफलसम्यक् सम्प्रयुक्तः सफलीकरणं अवन्ध्यसाधितसाधकं सर्वबोधिसत्त्वचर्यापारिपूरकं महाबोधिसत्त्वसन्नाहसन्नद्धः सर्वमारबलं अभिभवनपरापृष्ठीकरणं तद्वदतु भगवानस्माकमनुकम्पामुपादाय सर्वसत्त्वानां च ॥

एवमुक्ते मञ्जुश्रिया कुमारभूतेन, अथ भगवांश्छाक्यमुनिर्मञ्जुश्रियं कुमारभूतमेतदवोचत् ॥

साधु साधु मञ्जुश्रीः ! यस्त्वं बहुजनहिताय प्रतिपन्नो लोकानुकम्पायै यस्त्वं तथागतमेतमर्थं परिप्रष्टव्यं मन्यसे । तच्छृणु साधु च सुष्ठु च मनसि कुरु, भाषिष्येऽहं ते त्वदीयं पटविधानविसरसर्वसत्त्वचर्यासाधनमनुप्रवेशमनुपूर्वकं वक्ष्येऽहं पूर्वनिर्दिष्टं सर्वतथागतैः । अहमप्येदानीं भाषिष्ये ॥

आदौ तावच्छुचौ पृथिवीप्रदेशे रजोविगते पिचु गृह्य समयप्रविष्टैः सत्त्वैः तत् पिचु संशोधयितव्यम् । संशोध्य च अनेन मन्त्रेण मण्डलाचार्येणाभिमन्त्रितव्यम् अष्टशतवारां । 'नमः सर्वबुद्धबोधिसत्त्वानामप्रतिहतमतिगतिप्रतिचारिणाम् । नमः संशोधनदुःखप्रशमनराजेन्द्रराजाय तथागतायार्हते सम्यक्सम्बुद्धाय । तद्यथा— 'ॐ शोधय शोधय सर्वविघ्नघातक ! महाकारुणिक ! कुमाररूपधारिणे । विकुर्व विकुर्व । समयमनुस्मर । तिष्ठ तिष्ठ हुम् हुम् फट् फट् स्वाहा' ॥

सहर्तव्यः । भूयो वा पूर्वसवां कृत्वा प्रारब्धव्यम् । एव यावत् सप्तवारान् । पश्चान तर्येकरिणस्यापि सप्तमे कर्मप्रयोगे सिध्य तीति ॥

तत' साधकेन तां कुमारीं कृतरक्षां कृत्वा कुशविण्डकोपविष्टकां कारयेत् । पूर्वाभिमुखामुत्तराभिमुखां वा सस्थाप्य आत्मनश्च हवि ष्याहारः तां च कन्यां हविष्याहार भोजयेत् । पूर्वमेव परिकल्पित कुशविण्डकं तेनैव विधिना तं पिन्तु कर्तापयेत् । तत् सूत्र सुकर्तितं शुक्ल पूर्वशिक्षापितकन्यया सहृत्य, अप पञ्च त्रीणि एक प्रभृती यावत् षोडशमात्रां पलां वा कर्पां वा सुप्रशस्तगणनगेता कुर्यान्मध्यमे अष्ट मां गाथा इतरे पश्चैक वा क्षुद्रसाध्येषु कर्मसु यथाशक्तित कुर्यात् स र्वकर्मिषु मन्त्रवित् ॥

ततः प्रभृति यत् किञ्चित् पाप कर्म पुराकृतम् ।
नश्यते तत्क्षणादेव सूत्रार्थं च न चेतने ॥
सद्गृह्यमिदं सूत्र शुचौ भाण्डे निवेशयेत् ।
न हि ततुगतो कृत्वा धूपयेत् कर्पूरधूपनैः ॥
आमाण्याङ्गसमुत्थ वा कुङ्कुमच दनाग्भि ।
अर्चित सुगन्धपुष्पैर्मल्लिकचम्पकादिभि' ॥
शुचौ प्रदेशे सस्थाप्य कृतरक्षापिधानतम् ।
मन्त्रवित् सर्वकर्मज्ञा कृतजाप' सुसमाहत ॥
तन्तुवाय गृहो गत्वा मूल्य दत्वा यथप्सितम् ।
अव्यङ्गमकृश चैव शुक्लधर्मसदारतम् ॥
अव्याध्यर्तमवृद्ध च कासश्वासाविनिर्मुक्तम् ।
कासश्वासविनिर्मुक्त अपण्ड यानिरात्यजम् ॥
अनवद्यमकुब्ज चैवापङ्गुपतिवर्जितम् ।
समस्तलक्षणोपेत प्रशस्त चारुदर्शनम् ॥
शुभबुद्धिसमाचार लौकिकीं वृत्तिमाश्रितम् ।
सिद्धिकामोऽत्र त याचेदुत्तमे पन्वायने ॥
प्रशस्ता शुभवर्णे वा बुद्धिमन्तो सुशिक्षितः ।
अतोत्कृष्टतमैः श्रेष्ठै' पन्वायनश्रेयगे ॥

उत्तमे उत्तम कुर्यान्मध्यमे मध्यसाधनम् ।
इतरैः क्षुद्रकर्माणि निकृष्टान्येव सर्वत' ॥

यथामृ्य ततो द्त्वा यथा वदि शिल्पिन ।
प्रथमे वाक्समुत्थाने शिल्पिनस्य स मन्त्रवित् ॥

दद्यात् पण्यं तत' क्षिप्रं धीरकृमेति रा उन्यते ।
प्रात्थनादेव चतस्य पुण्यभावेन जापिने ॥

क्षिप्रसिद्धिकरो ह्येप पटश्रेष्ठो निरुत्तर' ।
सर्वकर्मकरो पूज्यो दिव्यमानुष्यसौख्यद' ॥

श्रेयसः सर्वभूतानां सम्यक् सम्बुद्धभाषितम् ।

इति ॥

ततो विद्याधरेण तन्तुवायस्य पोपध दत्त्वा सशुभे नक्षत्रे प्रा-
तिहारकपक्षे शुक्लेऽहनि शुभग्रहनिरीक्षितेऽन्ये वा शुक्लपक्षे सुकुसुमित-
सहकारमञ्जरीवरतरुपुष्पाढ्यवसन्तसमये ऋतुवरे तस्मिन् काले त
स्मिन् समये पूर्वाह्णादिते सवितरि पूर्वनिर्दिष्ट त तुवाय हविष्याहार
शुचिवस्त्रप्रावृतवद्धोष्णीपशिरस्कसुस्नातं सुविलिप्त श्वेतचन्दनकुङ्कु
माभ्यामन्यतरेणानुलिप्ताङ्ग कर्पूरवासितवदन हृष्टमनस क्षुत्पिपासाप
गतं कृत्वा सर्वत्र भाण्ड रज्ज्वाद्युपकरणानि च मृद्गोमयाभ्यां प्रक्षाल्य
प्रत्यग्राणि च भूयो भूयो पञ्चगव्येन प्रक्षालयेत् । ततो निःप्राणके
नोदकेन प्रक्षाल्य, श्वेतचन्दनकुङ्कुमाभ्यामभ्यपिञ्चेत् । शुचौ पृथि
वीप्रदेशे अपगतकोलाहले विगतजनपदे विविक्तासने प्रसन्ने गुप्ते
पुष्पार्चिते ॥

ततः साधकेन सशोधनमन्त्रेणैवाष्टशताभिमन्त्रित कृत्वा श्वेत
सर्षपान् चतुर्दिक्षु इत्यूर्ध्वमधः विदिक्षु च क्षिपेत् । ततो तन्तु
वायं सर्षपैः स ताड्य, महामुद्रां पञ्चशिखां वद्ध्वा, शिखावन्धं कु
र्वीत । महारक्षा कृता भवति । यदि ज्येष्ठं पटं भवति चतुर्हस्तविस्ती
र्णमष्टहस्तसुदीर्घ एतत्प्रमाण हि त तुवायोपाचित कुर्यात् । मध्यमं भ
वति द्विहस्तविस्तीर्णं पञ्चहस्तदीर्घत्वम् । कन्यसं सुगतवितस्तिप्रमाण

अङ्गुष्ठहस्तदीर्घत्वम् । तत्र भगवतो बुद्धस्य वितस्तिमध्यदेशपुरुषप्रमाणहस्तमेक एषा सुगतस्य वितस्तिरिति कीर्त्यते । अनेन प्रमाणेन प्रामाण्यमाख्यातम् ।

उत्तिष्ठ सिद्धिर्ज्येष्ठा तु कथिता लोकपुङ्गवै. ।
म ग्यमे राज्यकामानामन्तर्धाने परे मु ।ो ॥
महाभोगार्थिनां पुसा त्रिदेवासुरभोगिनाम् ।
कन्यसे सिद्धिमाख्याता मध्यमे सिद्धिमध्यमा ॥
क्षुद्रकर्माणि सिध्य ते क यसे तु पटे स ा ।
सर्वकार्याणि सिध्यन्ते सर्वद्रव्याणि वै सदा ॥
पटत्रयेऽपि निर्दिष्टा सिद्धि' श्रेयार्थि ाा नृणाम् ।
विधिभ्रष्टा न सिध्येयु' शक्रस्यापि शचीपते ॥
सिध्य ते क्षिप्रमेव तु सर्वकर्मा न य नत ।
विधिना च समायुक्ता इतस्यापि तज मिन. ॥
एष मार्गः समाख्यातो जिनै जिनवरात्मजैः ।
श्रेयस' सर्वसत्त्वानां दरिद्रानाथदु खिनाम् ॥
बोधिमार्गो ह्यशेषस्तु दर्शितस्तत्त्वदर्शिभि. ।
बोधिहेतुरय वर्त्म मन्त्रमार्गेण दर्शित ॥
मन्त्राः सिध्यन्त्ययत्नेन सर्वलौकि मण्डला ।
लोकोत्तराश्चापि सि यन्ते मण्डला ये उदाहृता' ॥
बोधिहेतुमतिर्येषां तेषां सिद्धि' स ा भवेत् ।
नान्येषां कथ्यते सिद्धि' अहिता ये जगे सदा ॥
बोधाय प्रस्थितां सत्त्वां सदा सिद्धिरुदाहृता ।
मञ्जुश्रियस्य महात्मानो कुमारस्येह विशेषत' ॥
क्षिप्रकार्यानुसाध्यर्थं प्राप्नुयात् सक न्ति ।
अनुपूर्वं ततो शिल्पी पट वायेत यत्नतः ॥
दिवसैः पञ्चरष्टाभिः षोडशाद्विचतुष्कयोः ।
अहोरात्रेण वै क्षिप्र समाप्तिः पटवायने ॥

अहोरात्रेण वै श्रेयो उत्तमा सिद्धिलिप्सुनाम् ।
शौचाचारसम्पन्ना शिल्पिनो नित्यशिक्षिता ॥

दूरादारम्भतथा गत्वा कुत्रिमस्नानमुत्सृजेत् ।
सचेलस्तु ततः स्नात्वा अ पवासान्निवास्य च ॥

शुक्लाम्बरधरः स्रग्वी उपस्पृश्य पुनः पुनः ।
श्वेतचन्दनलिप्ताङ्गा हस्तौ उद्धृत्य शिल्पिन ॥

भूयो वयेत यत्नेन श्लक्ष्ण सन्धीत सदा ।
एवमाद्यैः प्रयोगैस्तु अन्यैर्वा जिनभाषिते ॥

विचारशीली यत्नेन पटस्याशेपवायना ।
समाप्ते तु पट प्रोक्ते पूर्वकर्मसु निर्मिते ॥

प्रमाणस्थे अहीने च कुर्याद् भद्रेऽहनिः समम् ।
अवतारयेत् ततो त त्रा शुक्लपक्षे सुशोभने ॥

परिस्फुटं तु पटं कृत्वा दशा बद्धानुशोभनम् ।
वेणुयष्ट्यावनद्ध तु पटं गृह्य ततो व्रजेत् ॥

शिल्पिन स्वस्त्ययित्वा तु सविभागार्थविस्तरे ।
गत्वा यथेप्सता मन्त्री शुभमाचारसुव्रती ॥

सुग धपुष्पैरभ्यर्च्य शुचौ देश तु त न्यसेत् ।
अनेनैव तु म त्रेण कृतरक्षाप्रथानितम् ॥

येन तत् पिचुक पूर्व सशो य बहुधा पुन ।
तेनैव कारयेद् र क्षामात्मनश्च पटस्य वै ॥

मञ्जुश्रियो महावीरः मन्त्ररूपेण भाषितः ।
अतीतैर्बहुभिर्मन्त्रैर्मयाप्येतर्हि पुन पुन ॥

स एव सर्वमन्त्राणां विचेरु मन्त्ररूपिणः ।
महावीर्या महातेजः सर्वेम त्रार्थसाधकः ॥

करोति विविधाकारां विचित्रा त्राणहेतवः ।
जम्बूद्वीपगताः सत्त्वाः मूढाचारचेतनाः ॥

अश्राद्धविपरीतस्तु मिथ्याचारसलालुपाः ।
न साधयन्ति मन्त्राणि सर्वद्रव्याणि वै पुनः ॥
अत एव भ्रमन्ते ते ससारान्धारचारके ।
यस्तु शुद्धमनसो नित्य श्राद्धो कोतुकमङ्गले सदा ॥
औत्सुक्को सर्वमन्त्रेषु नित्यं ग्रहणधारणे ।
सिद्धिकामा महात्मानो महोत्साहा महोजसाः ॥
तेषां सिद्ध्यन्त्ययत्नेन म त्रा ये जिनभाषिताः ।
अश्राद्धानां तु ज तूनां शुक्को धर्मेण रोहते ॥
बीजमूषरे क्षिप्त अङ्कुरोऽफलो यथा ।
श्रद्धामूल सदा धर्मे उक्त सर्वार्थदर्शिभिः ॥
मन्त्रसिद्धिः सदा प्रोक्ता तेषां धर्मार्थशीलिनाम् ॥

इति ॥

ततो साधने शिल्पिनः, सुशिक्षितचित्रकरो वा आत्मनो वा कुशला लेख्याः । अश्लेशकैरङ्गैः सर्वोज्ज्वल रङ्गोपेत वर्णकं गृह्य पूर्वेणैव विधिना यथा तन्तुवाययायनेनैव लक्षणसमन्वागतेन चित्रकरेण पेयाल विस्तरेण कर्तव्य यथा पूर्वं तन्तुवायविधि, तेनैव तत्पट चित्रापयितव्यम्; स्वय वा चित्रितव्यम् । कर्पूरकुङ्कुमचन्दनादिभिरङ्गं वासयितव्यम् । धूप दहता तनव मन्त्रेणाष्टशतवार परिजप्य नागकेसरपुन्नागवकुलचम्पकवापीकधातुष्कारिकमालतीकुसुमादिभिः त पटमभ्यवकीर्य पूर्वाभिमुख, कुशपिण्डकोपविष्टः स्वस्थबुद्धि सर्वबुद्धबोधिसत्त्वगतचित्तः सूक्ष्मवर्तिप्रतिगृहीतपाणिरनायासचित्तः तं पटमालिखेत् ॥

आदौ तावच्छाक्यमुनि तथागतमालिखेत् । सर्वाकारवरोपेतं द्वात्रिंशन्महापुरुषलक्षणलक्षित अशीत्यानुव्यञ्जनोपशोभितशरीरं रत्नपद्मोपरिनिषण्णं समन्तज्वालं समन्तव्यामोपशोभितं मूर्ति धर्म देशयमान प्रसन्नमूर्ति सर्वाकारवरोपेत मध्यस्थ वैदूर्यनालपद्मं अधश्च महासारं द्वौ नागराजानौ तं पद्मनालं धारयमानौ तथागतदृष्टयो दक्षिण-

हस्तेन नमस्यमानौ शुक्लौ सर्वालङ्कारभूषितौ मनुष्याकारार्द्धसर्पदेहौ नन्दोपनन्दौ लेखनीयौ । समन्ताच्च तत् पद्मसरः पद्मपत्रपुष्पकुड्मलविकसितजलजप्राणिभिश्च अनुगमीनादिभिर्व्याप्तं अशेषपत्रि यस्तसुचिरसुशोभनाकारमभिलेख्यम् । यद्वा भगवतो मूलपद्मदण्ड विटपं, तत्रैव विनिःसृतान्यनेकानि पद्मपुष्पाणि अनुपूर्वोन्नतानि वामपार्श्वेऽष्टौ पद्मपुष्पाणि । तेषु च पद्मेषु निषण्णानि अष्टौ महाबोधिसत्त्वविग्रहाण्यभिलेख्याः । प्रथमं तावदार्यमञ्जुश्रीः, ईषत्पद्मकिञ्जल्कगौरः कुङ्कुमकनकवर्णो वा कुमाराकारो दारकरूपी पञ्चचीरकशिरस्कः कुमारालङ्कारालङ्कृतः वामहस्तनीलोत्पलगृहीतः, दक्षिणहस्तेन तथागतं नमस्यमानः चारुमूर्त्तिस्तथागतगतदृष्टिः सौम्याकारः ईषत्प्रहसितवदनः समन्तज्वालाबुद्धमण्डलपर्येषः । अपरस्मिं पद्मे आर्यचन्द्रप्रभः कुमारभूतः तथैवमभिलेख्यः । तृतीये सुधनः, चतुर्थे सर्वनीवरणः, पञ्चमे गगनगञ्जः, षष्ठे क्षितिगर्भः, सप्तमेऽनघः, अष्टमे सुलोचनमिति ॥

एते सर्वे कुमारदारकाकारा अभिलेख्याः । कुमारालङ्कारभूषिता दक्षिणपार्श्वे भगवतः अष्टौ महाबोधिसत्त्वाः सर्वालङ्कारभूषिताः वर्जयित्वा तु मैत्रेयं भगवतः समीपे आर्यमैत्रेयः ब्रह्मचारिवेषधारी जटामकुटाबद्धशिरस्कः कनकवर्णः रक्तकषायधारी रक्तपटांशुकोत्तरीयः त्रिपुण्ड्रककृतचिह्नः कायरूपी दण्डकमण्डलुवामविन्यस्तपाणिः कृष्णसारचर्म वामस्कन्धावासक्तदक्षिणहस्तगृहीताक्षसूत्रः तथागतं नमस्यमानः तद्गतदृष्टिः ध्यानालम्बनगतचित्तचरितः ॥

द्वितीयस्मिं पद्मे समन्तभद्रः प्रियङ्गुवर्णश्यामः सर्वालङ्कारशरीरः वामहस्ते चिन्तामणिरत्नविन्यस्तः दक्षिणहस्ते श्रीफलविन्यस्तहस्तवरदः चारुरूपी तथैवमभिलिखितव्यम् ॥

तृतीये आर्यावलोकितेश्वरः शरत्काण्डगौरः सर्वालङ्कारभूषितः जटामकुटधारी श्वेतयज्ञोपवीतः सर्वज्ञशिरसीकृत आर्यामिताभ दशबलजगान्तोपलग्नापविष्टं चारुरूपं चामरहस्तारविन्दविन्यस्तं दक्षिण-हस्तेन वरदं ध्यानालम्बनगतचित्तचरितं समन्तद्योतितशरीरम् ॥

चतुर्थे आर्यवज्रपाणिः वामहस्तविन्यस्तवज्रं कनकवर्णं सर्वालङ्कारभूषितं दक्षिणहस्तोपरुद्धसफलं वरदं च चारुरूपिणं सौम्यदृ

र्शनं हाराद्धहारोपशुम्भितदेह मुक्ताहारयज्ञोपवीतं रत्नोज्ज्वलविच्छुरितमकुट पट्टचलननिवस्त श्वेतपङ्क्तिकाचरीय तथैवार्यावलोकितेश्वरं समन्तभद्र तीर्थिकाभ्युन्नतगात्रदेह आकारतश्च यथापूर्वनिर्दिष्टम् ॥

पञ्चमस्मिन तथा पत्रे आर्यमहामति, षष्ठे शान्तमतिः, सप्तमे वैरोचनगर्भः, अष्टमे अपायजहश्चेति ॥

इत्येते बोधिसत्त्वा अभिलेख्याः । फलपुस्तकविन्यस्तकपाणयः सर्वालङ्कारसुशोभनाः पट्टांशुकोत्तरीयाः सर्वालङ्कारभूषिताः पट्टचलनिकानिवस्ताः ॥

तेषां चोपरिष्टा अष्टौ प्रत्येकबुद्धा अभिलेख्याः । भिक्षुवेषधारिणो महापुरुषलक्षणशरीरा रक्तकाषायवाससा पर्यङ्कोपविष्टाः रत्नोपलनिषण्णाः शान्तवेषात्मकाः सम तज्जालमालाकुलाः सुगन्धपुष्पाणि कीर्णाः । तद्यथा — मालतीवार्षिकाधातुष्कारिकापुन्नागनागकेसरादिभिः पुष्पैः सम तात् पट्टमभ्यन्तरीयेणाण लिखित भगवतः शाक्यमुनेः वामपार्श्वे आर्यमञ्जुश्रियस्योपरिष्टा अनेकरत्नोपरचित सुदीर्घाकार विमानमण्डल शैलराजोपशोभि । रत्नोपलसञ्छन्नपर्वताकारमभिलिखेत् ॥

तत्रस्थां बुद्धां भगवता अष्टौ लिखेत् । तद्यथा — रत्नशिखिवैदूर्यप्रभारत्नविच्छुरितसम तव्यामप्रभ पद्मरागे इन्द्रनीलमरकतादिभिः वैदूर्याश्मगर्भादिभि महामणिरत्नविशेषैः समन्ततो प्रज्वाल्यमाण, ईषदादित्योदयवर्ण तथागतविग्रह पीतचीवरोत्तरासङ्गिन पर्यङ्कोपविष्टं धर्मं देशयमान पीतनिवासितोपरिवस्त महापुरुषलक्षणकवचितदेह, अशीत्यानुव्यञ्जनोपशोभितमूर्ति प्रशान्तदर्शन सर्वाकारवरोपेत रत्नशिखिं तथागतमभिलिखेत् ॥

द्वितीय सङ्कुसुमितराजेन्द्र तथागत कनकवर्ण अभिलिखेत् सुतरां नागकेसरबकुलादिपुष्पैरभ्यन्तरीकृतमभिलिखे । आर्यमभिनिरीक्षमाण समन्तप्रभ रत्नप्रभाविच्छुरितद्योतिपयपम् ॥

तृतीय शालेन्द्रराज तथागतमभिलिखेत् । पद्मकिञ्जल्काभ धर्म देशयमानम् ॥

चतुर्थं सुनेत्रं तथागतमभिलिखेत् । पञ्चम दुःप्रसहम् । षष्ठ वैरोचनं जिनम् । सप्तम भैषज्यवैदूर्यराजम् । अष्टम सर्वदुःखप्रशमन राजेन्द्र तथागतमभिलिखेदिति ॥

सर्व एव कनकवर्णाः तथागतविग्रहाः कार्याः अभयप्रदान कराः । उपरिष्टाच्च तथागतानां मेघान्तरालस्थाः पट्टकोणे उभयतः पुष्पवर्षमुत्सृजमानाः द्वौ शुद्धावासकायिकौ देवपुत्रौ अभिलेख्यौ । अन्तरीक्षस्थितो सर्वबुद्धबोधिसत्त्वप्रत्येकबुद्धार्यश्रावकानां नमस्यमानौ अभिलेख्यो ॥

प्रत्येकबुद्धानां चोत्तरतः अष्टौ महाश्रावका अभिलेख्याः बोधिसत्त्वशिर स्थानावरजोपविष्टाः । तद्यथा — स्थविरशारिपुत्रः महामौद्गल्यायनः महाकाश्यपः सुभूतिः राहुलः नन्दः भद्रिकः कफिणश्चेति ॥

प्रत्येकबुद्धापि तद्यथा — गन्धमादनः चन्दन उपरिष्ट श्वेतसितकेतुनेमिसुनेमिश्चेति । सर्व एव सुशोभनाः शान्तवेष आत्मनो सुदान्ताकाराः । महाश्रावका अपि कृताञ्जलयो बुद्धं भगवन्त शाक्यमुनिं निरीक्षमाणा । उपरिष्टाच्च शुद्धावासादेव साभिकृष्टौ अपरौ द्वौ देवपुत्रौ समन्तात्पट्टवितानदीर्घापायशसोभनागृहीतौ सर्वबुद्धबोधिसत्त्वप्रत्येकबुद्धार्यश्रावकाणामुपरिष्टाद्धारयमाणौ दिव्यमाल्याम्बरधरौ देवपुत्रौ अभिलेख्यौ । भगवत शाक्यमुनेः उपरिष्टान्मूर्धनि मुक्ताहाररत्नपद्मरागेन्द्रनीलादिभिः ग्रथित रत्नसूत्रकलाप तस्मिंश्च पट्टवितानसुविन्यस्तं समन्ताच्च मुक्ताहारप्रलम्बोपशोभितमभिलिखेत् । अधश्च बुद्धस्य भगवतः पद्मासनात् आर्यमञ्जुश्रियस्य पादमूलसमीपे नागराजोपनन्दपार्श्वे महारत्न पर्वत पद्मशरादभ्युन्नत रत्नाङ्कुरगुहाकन्दरप्रवाललतापरिवेष्टित रत्नतरु महर्षयसिद्धसेवितं तस्य पर्वतस्योत्तुङ्गे यमान्तकं क्रोधराजान महाघोररूपिण पाशहस्तं वामहस्तगृहीत दण्डं भृकुटिवदनमाज्ञां प्रतीच्छमानः आर्यमञ्जुश्रियगतदृष्टिं वृकोदर ऊर्ध्वकेशं भिन्नाञ्जनकृष्णमेघसङ्काशं, कपिलश्मश्रुदीर्घकराल दीर्घनख रक्तलोचनक सर्पमण्डितकण्ठोद्देश व्याघ्रचर्मनिवसनं सर्वविघ्नघातकः महादारुणतरं महाक्रोधराजानं समन्तज्वाल यमान्तक क्रोधराजा अभिलिखेत् ॥

तस्य पर्वतस्याधस्ताच्छिलातलोपनिषण्ण पृथिव्यामवनतजानु देह धूपकटच्छुकव्यग्रहस्तं यथावेषसंस्थानगृहीतालिङ्ग यथानुवृत्तचरित पार्श्वमञ्जुश्रियगतदृष्टि सा क्रमभिलिखे । न द्रनाग द्रराजसमीपं भगवतः शाक्यमुनेरधस्तात्, दक्षिणपार्श्वे पद्मसराभ्युद्गत महारत्न शैलेन्द्रराज कथित तथागतमभिलिखेत् । यमान्तकक्रोधराजरहित दिव्यपुष्पावकीर्णमाभिलिखेत् । आर्यावलोकितेश्वर' स्यात् तं पर्वतमभिलिखेत् । तदुच्चतुङ्गपर्वतपद्मरागोपल नमेकाङ्कुरवैदूर्यमयशृङ्गाकारमभिलिखेत् ।

तत्रापाश्रितां देवीमार्यावलोकितेश्वरकरुणां आर्यतारां सर्वालङ्कारविभूषितां रत्नपट्टांशुकोत्तरीया विचित्रपट्टनिवसनां स्व्यलङ्कारसर्वाङ्गविभूषितां वामहस्तनीलोत्पलविन्यस्तां कनकवर्णां कृशोदरीं नातिकृशां नातिबालां नातिवृद्धां ध्यानगतचेतनां आज्ञां प्रतीच्छयन्ती दक्षिणहस्तेन वरदादीपिदवनतकायां पर्यङ्कोपनिषण्णां आर्यावलोकितेश्वर ईषदपगतदृष्टि' समन्तज्वालामालपर्येषितां तत्रैव वैदूर्यरत्नशृङ्गे पुन्नाग वृक्षपरिवेष्टित सर्वतः शाखासु समन्तपुष्पोपरचितविकसितसुपुष्पितं भगवतीं तारामभिच्छादयमानां तेनैव चापगतशाखासुचित्र प्रवालाङ्कुरावनद्ध विचित्ररूपरङ्गोज्ज्वलं तारादेवीमुखावलोकनमभिलेख्या ॥

सर्वविघ्नघातकी देवी उत्तमा भयनाशिनी ।
साधकस्य तु रक्षार्थं लिखेद्व वरदां शुभाम् ॥
स्त्रीरूपधारिणी देवी करुणादशबलात्मजा ।
श्रेयसः सर्वभूताना लिखेत वरदायिकाम् ॥
कुमारस्येह माता देवी मञ्जुघोपस्य महामुनेः ।
सर्वविघ्नविनाशार्थं साधकस्य तु समन्ताद् ॥
रक्षार्थं मनुजेशानां श्रेयसार्थं पटे न्यसेत् ।
योऽसौ क्रोधराजेन्द्रः पर्वताग्रे समवस्थितः ॥
सर्वविघ्नविनाशाय कथित जिनवरात्मजैः ।
महाघोरो महावन्द्यो महाचण्डो महाद्युति' ॥

शासने द्विष्टसत्त्वानां निग्रहार्थेन मन्त्रपते ।
साधकस्य तु रक्षार्थं सर्वविघ्नविनाशकः ॥
दारुणो रोषशीलश्च आकृष्टा मन्त्रदेवता ।
मगाना नागन्ी न निनेना गर्वनिर्घणाम ॥
अवशानां न वशगा ोना पापरक्षमचारिणाम् ।
खचरे भूचरे चापि पाताले चापि सम तत ॥
नाशयति सर्वदुष्टानां निरुद्धा ये शासने मुने ।
चतुरश्र सम ताद्वे चतु कोण पट लिखेत् ॥
अधश्चैव पटान्ते तु विस्तीर्णसरितालयम् ।
कुर्यान्नागभोगाङ्कमैकैक च सम ततः ॥
शुक्लेन शुभाङ्गेन मनुजाकारदेहजा ।
उत्तराशिरस स्थाप्य कृताञ्जलिपुटः सदा ॥
सप्तस्फुटो महावीया महेशाख्यो अनन्तो नाम नामतः ।
तथागत निरीक्षन्तो मणिरत्नोपशोभितः ॥
सुशोभना चारुरूपी च रत्नाभरणभूषितः ।
आलिखेज्ज्वालमालिन महानागेन्द्रविश्रुतम् ॥
सर्वलोकहितोद्युक्त प्रवृत्तो शासने मुने ।
सर्वविघ्नविनाशाय आलिखेत् सरिताश्रुतम् ॥
एतत् पटविधान तु उत्तम जिनभाषितम् ।
सक्षिप्तविस्तराख्यात पूर्वमुक्त तथागतैः ॥
आलिखे यो हि निद्रां वै तस्य पुण्यमनन्तकम् ।
यत् कृतं कल्पकोटीभिः पाप कर्म सुदारुणम् ॥
नश्यते तत्क्षणादेव पट दृष्ट्वा तु भूतले ।
पञ्चानन्तर्यकारिण दुःशीलां जुगुप्सिताम् ॥
सर्वपापप्रवृत्तानां ससारान्धारचारिणाम् ।
गतियोनिनिकृष्टाना पट तेषां न वारयेत् ॥

दर्शन सफल तेषां पट मौनी द्रभापितम् ।
दृष्टमात्र प्रमुच्यन्ते तस्मात् पापा ु तत्क्षणात् ॥
किं पुन' शुद्धवृत्तित्वात् सुशुद्धव्रत्तोरूपिण ।
म त्रसिद्धौ सदोद्युक्तो' सिद्धिं लप्सेयुर्मानव' ॥
यत् पुण्य सर्वसत्त्वानां पूजयित्वा कल्पकोाट ये ।
तत् पुण्य प्राप्नुयान्मन्त्री पटमालिखनाद् भुवि ॥
सिकता यानि गङ्गाया। प्रमाण यानि नीाचता ।
तत्प्रमाणा भवेद् बुद्धा। प्रत्येकजिनत्रात्मजा' ॥
खड्गिन' साधका लाके जित्वा नहुधा पुन ।
तत् फल प्राप्नुयान्मर्त्ये पटालिखनदर्शना ॥
वाचनादेव कायेस्य पूजना वाप्यनुमोदना ।
मन्त्रसिद्धिर्ध्रुवा तस्य सर्वकर्मे प्रकाित्पता। ॥
यावन्ति लौकिका मन्त्रा' भापिता य जिनपुङ्गवै' ।
तच्छिष्यखड्गिभिर्दि-ये' ाधिरात्त्वर्गश्ान्मभि ॥
सिद्धयन्ते सर्वमन्त्रा वै पटस्याग्र तु प्रग्रतामाति ॥

बोधिसत्त्वपिटकाद्वतगका महायानभूत्ता
मञ्जुश्रीमूलकल्पाच्चतुर्थ ।

---

प्रथमपटविधानविसर पारेसमाप्त ॥

---

## पञ्चमः पटलविसरः ।

अथ खलु भगवाञ्छाक्यमुनिः सर्वं तत्पर्षन्मण्डलमवलोक्य मञ्जुश्रियं कुमारभूतमामन्त्रयते स्म । अस्ति मञ्जुश्रीः अपरमपि त्वदीयं मध्यमं पटविधानम् । तद् भाषिष्येऽहम् । शृणु, साधु च सुष्ठु च मनसि कुरु ॥

आदौ तावत् पूर्वनिर्दिष्टेनैव सूत्रकेण पूर्वोक्तेनैव विधिना पूर्वं परिकल्पितैः शिल्पिभिः पूर्वप्रमाणेव मध्यमपटः सुशोभनेन शुक्लेन सुव्रतेन सदशेन अश्लेषकैरङ्गैरपगतकेशसङ्कारादिभिर्यथैव प्रथमं तथैव तद् कुर्यात् वर्जयित्वा तु प्रमाणरूपकात् तत्पट पश्चादभिलिखापयितव्यम् ॥

आदौ तावत् शुद्धावासभवनं समन्तशोभनाकारं स्फुटितरत्नमयाकारं सितमुक्ताहारभूषितं तस्मिं मध्ये भगवाञ्छाक्यमुनिः चित्रापयितव्यः रत्नसिंहासनोपनिषण्णः धर्मं देशयमानः सर्वाकारवरोपेतः, दक्षिणपार्श्वे आर्यमञ्जुश्रीः पद्मकिञ्जल्काभ कुङ्कुमादित्यवर्णो वा वामस्कन्धप्रदेशे नीलोत्पलावसक्तः कृताञ्जलिपुटः भगवन्तं शाक्यमुनिं निरीक्षमाणः ईषत्प्रहसितवदनः कुमाररूपी पञ्चचीरकोपशोभितशिरस्कः बालदारकालङ्कारभूषितः दक्षिणजानुमण्डलावनतशिर भगवतश्च शाक्यमुनेर्वामपार्श्वे आर्यावलोकितेश्वरः शरत्काण्डगौरो यथैव पूर्वं तथैवमभिलेख्यम् । किन्तु भगवतश्चामरमुत्क्षिपमानं तस्य पार्श्वे आर्यमैत्रेय समन्तभद्रः वज्रपाणिर्महामतिः शान्तमतिः गगनगञ्जः सर्वनीवरणविष्कम्भिनश्चेति । एतेऽनुपूर्वतोऽभिलेख्याः । यथैव प्रथमं तथैव सर्वालङ्कारभूषिताः चित्रापयितव्याः ॥

तेषां चोपरिष्टा अष्टौ बुद्धा भगवन्तश्चित्रापयितव्याः स्थितका अभयप्रदानदक्षिणकराः पीतचीवरोत्तरासङ्गीकृतदेहाः वामहस्तेन चीवरकर्णकावसक्ता ईषद्रक्तावभासकाषायसुनिवस्ताः समन्तप्रभाः सर्वाकारवरोपेताः । तद्यथा — सङ्कुसुमितराजेन्द्रस्तथागतः रत्नशिखिः शिखिः विश्वभुक् ककुत्सन्दकः कनकमुनिः काश्यपः सुनेत्रश्चेति । इत्येते बुद्धा भगवन्तश्चित्रापयितव्याः ॥

दक्षिणे पार्श्वे भगवत आर्यमञ्जश्रियस्य समीपे महापर्षन्मण्डलं चित्रापयितव्यम् । अष्टौ महाश्रावकाः अष्टौ प्रत्येकबुद्धा' यथैव पूर्व तथैव ते चित्रापयितव्या. । किन्तु आर्यमहामौद्गल्यायनशारिपुत्रौ भगवतः शाक्यमुने चामरमुद्धूयमानौ स्थितकायमभिलेख्यो । एव शुद्धावासकायिका देवपुत्रा अभिलेख्याः । शक्रश्च देवानामिन्द्रः स यामश्च सन्तुषितश्च सुनिर्मितश्च शुद्धश्च निमलश्च सुदृशश्च अतपश्च आभास्वरश्च ब्रह्मा च सहाम्पति. अकनिष्ठश्च एवमादयो देवपुत्रा रूपावचराः कामावचराश्चानुपूर्वतोऽभिलेख्या' आर्यमञ्जुश्रियसमीपस्थाः पर्षन्मण्डलोपरिचितावि यस्ताः स्वरूपवेषधारिणो चित्रापयितव्याः । भगवत' सिंहासनस्याधस्तात्समन्ता महापर्वत महासमुद्राभ्युद्गत यावत् पटान्ते चित्रापयितव्यः । एकस्मिन् पटा तकोणे साधको यथावेषसस्थानाकारः अवनतजानुकोर्परशिर' धूपकटच्छुकव्यग्रहस्तः चित्रापयितव्य' । तस्मिंश्च रत्नपर्वते आर्यमञ्जुश्रियस्याधस्तात् यमान्तकक्रोधराजा यथापूर्वनिर्दिष्टमभिलेख्यम् । वामपार्श्वे भगवतः सिंहासनस्याधस्ताद् आर्यावलोकितेश्वरपादमूलसमीपे तस्मिंश्च रत्नपर्वतोपनिषण्णा तारादेवी अभिलेख्या' । यथा पूर्वनिर्दिष्टा तथा चित्रापयितव्याः । समन्ताश्च तत्पट मुक्तपुष्पावकीर्ण चम्पकनीलोत्पलसौगन्धिकमाल्लतीवार्षिकधानुष्कारीकपुन्नागकेसरादिभि पुष्पैरभ्यवकीर्ण समन्तात् पटम् । उपरिष्टाच्च पटान्तकोणे उभयान्ते द्वौ देवपुत्रौ महापुष्पौघमुत्सृजमानौ विचित्ररूपधारिणौ अन्तरीक्षस्थितौ वारिमेघान्तर्गतनिलीनौ उत्पतमानौ सितवर्णा अभिलेख्याविति ॥

एतन्मध्यमक प्रोक्तं पटः श्रेयार्थमुत्तमम् ।
मध्यसिद्धिस्तदायत्ता मनुजानां तु भूतले ॥

यत्किञ्चित् कृत पापं ससारे ससरतो पुरा ।
नश्यते तत्क्षणादेव पट दर्शनादिह ॥

भूनसत्त्वा न जानन्ति भ्रमन्ता गतिपञ्चके ।
पटस्या दर्शना ये तु मञ्जुघोपस्य मध्यमे ॥

अपि किल्बिषकारी स्यात् पञ्चानन्तर्यकारिणः ।
दु शीलस्यापि सिध्येयुर्मन्त्रा विविधभाषिता' ॥
अपि क्षिप्रतर सिद्धि माप्नुयात् कृतजापिनः ।
रोगी मुच्यते रोगाद् दरिद्रो लभते धनम् ॥
अपुत्रो लभते पुत्र मध्यमे पटदर्शने ।
दृष्टमात्र तदा पुण्य माप्नुयाद् विपुल महत् ॥
नियत देवमनुष्याण सौख्यभागी भवेन्नर ।
बुद्धत्व नियत तस्य ज मान्ते च भविष्यति ॥
लिखना वाचनाच्चैव पूजजलेखना तथा ।
दर्शना स्पर्शनाच्चैव मुच्यते सर्वकिल्बिषात् ॥
प्रार्थनाध्येषणा चैव पटस्यास्य महाद्युते. ।
लभते सफल ज मां क्षिप्र चानुमोदना ॥
न शक्यं वाचया वक्तुमपि कल्पाग्रकोटिभिः ।
यत् पुण्य माप्नुया ज तु सफल पटदर्शनादिति ॥

बोधिसत्त्वपिटकावतसका महायानवैपुल्यसूत्राद्
आर्यमञ्जुश्रियमूलकल्पात् पञ्चम
पटलविसर ।

---

द्वितीय पटविधानविसर समाप्त ॥

---

## षष्ठः पटलविसरः ।

अथ खलु भगवां शाक्यमुनिः पुनरपि मञ्जुश्रियं कुमारभूतमामन्त्रयते स्म । अस्ति मञ्जुश्री अपरमपि पटविधानरहस्य तृतीयं कन्यसं नाम । यः सर्वसत्त्वानामयत्नेनैव सिद्धिं गच्छेयुः । पूर्वनिर्दिष्टेनैव विधिना शिल्पिभिः सुगतवितस्तिप्रमाणं तिर्यक् तथैव समं चतुरश्र पूर्ववत् पटश्चित्रापयितव्यः पूर्वनिर्दिष्टैरङ्गैः ॥

आदौ तावदार्यमञ्जुश्रीः सिंहासनोपनिषण्णः बालदारकरूपी पूर्ववत् धर्मं देशयमानः समन्तप्रभा अर्चिषो निर्गच्छमानश्चारुरूपी चित्रापयितव्यः ॥

वामपार्श्वे आर्यसमन्तभद्रः रत्नोपलस्थितः चमरव्यग्रहस्तः चिन्तामणिवामविन्यस्तकरः प्रियङ्गुश्यामवर्णः पूर्ववच्चित्रापयितव्यः ॥

दक्षिणपार्श्वे आर्यमञ्जुश्रियस्य रत्नोपलस्थित आर्यावलोकितेश्वरः पूर्ववत् । चमरव्यग्रहस्तः वामहस्तारविन्दवि यस्तः सम तद्योतितमूर्तिरभिलेख्यः ॥

अधश्च सिंहासनात् कनकवर्णः पर्वतो यावत् पटान्ते चित्रापयितव्यः । पटान्तकोणस्य आर्यमञ्जुश्रियस्य सिंहासनस्याधस्ताद् दक्षिणपार्श्वे यमान्तकः क्रोधराजा पूर्ववच्चित्रापयितव्य । धूपकटच्छुकव्यग्रहस्तः यथापूर्वं तथैव साधकः । उपरिष्टादार्यमञ्जुश्रियस्य सङ्कुसुमितराजेन्द्रस्तथागतश्चित्रापयितव्यः षोडशाङ्गुलप्रमाणः रत्नपर्वतगुहालीनः । कूटागारसदृशाः प्राग्भारपर्वता दश चित्रापयितव्याः । समन्ताच्च तत्पट पर्वताकारवेष्टितं लिखेत् । उपरिष्टाच्च पटकोणात्र स्थितौ पर्वतप्राग्भारसंश्लिष्टौ उत्पतमानविमानपुष्पोत्ममुत्सृजमानौ शुद्धावासकायिकौ देवपुत्रो शुद्धश्च नाम विशुद्धश्च नाम पूर्ववच्चित्रापयितव्यौ ॥

नानापुष्पाभिकीर्णं च तत् पटमभिलिखापायेतव्यमिति ॥

एतत् कथित सर्वं त्रिविध पटलक्षणम् ।<br>
कन्यसं नामतो ह्येतत् पटः श्रेयो क्षुद्रकर्मसु ॥<br>
यत् कृत कारित चापि पाप कर्म सुदारुणम् ।<br>
कल्पकोटिसहस्राणि दर्शनात् पटमुच्यते ॥

पटं तु दृष्टमात्र वे तत्क्षणादेव मुच्यते ।
बुद्धकोटीसहस्राणि सत्कुर्याद् यो हि बुद्धिमां ॥
कन्यस तु पटं दृष्ट्वा कला नायाति षोडशीम् ।
यत् पुण्य सर्वबुद्धानां पूजा कृत्वा तु तापिनाम् ॥
तत् पुण्य प्राप्नुयाद् विद्वां कन्यसे पटदर्शने ।
शोभनानि च कर्माणि भोगहेतो' इहाचरेत् ॥
यावन्ति केचन मन्त्रा ब्रह्मेन्द्रऋषिभाषिताः ।
वैनतेयेन तु प्रोक्ताः वरुणादित्यकुबेरयोः ॥
धनाद्यैः राक्षसे' सर्वदानवेन्द्रैर्महोरगैः ।
सोमवायुयमाद्यैश्च भाषिता हरिहरादिभि' ॥
सर्वे मन्त्रा इहानीताः सिध्यन्ते पटमग्रत ।
शान्तिकानि सदा कुर्यात् पौष्टिकानि तथा इह ॥
दारुणानि च वर्जीत गर्हिता जिनवरैस्त्विहेति ॥

बोधिसत्त्वपिटकावतंसका महायानवैपुल्यसूत्राद्
मञ्जुश्रीमूलकल्पात् षष्ठ पटलविसर ।

---

तृतीय कन्यसपटविधान परिसमाप्त इति ॥

---

## सप्तमः पटलविसरः ।

अथ खलु मञ्जुश्री कुमारभूत उत्थायासनाद् भगवन्त शाक्य मुनिं त्रि' प्रदक्षिणीकृत्य, भगवतश्चरणयोर्निपत्य, भगव तमेवमाह — "साधु साधु भगवता यस्त ागतेनार्हता सम्यक् सम्बुद्धेन सुभाषि तोऽय धर्मपर्याय. सर्वविद्याव्रतचारिणामर्थाय हिताय सुखाय लोकानु कम्पायै बोधिसत्त्वानामुपायकौशल्यता दर्शिता निर्वाणोपरिगामिनी वर्त्मोपविशेषा नियत बोधिपरायणा सन्ततिबोधिसत्त्वाना सर्वम त्रा र्थचर्यासाधनीयमेतन्मन्त्ररहस्यसर्वजनविस्तारणकरी भविष्यत्यनागते ऽध्वनि निर्वृते लोकगुरो अस्तमिते तथागतादित्य वश ।रोञ्चते सर्व बुद्धक्षेत्रे सर्वबुद्धबोधिसत्त्वार्यश्रावकप्रत्येकबुद्धै' अ धकारीभूत लोकभा जने, विच्छिन्ने आर्यमार्गे, सर्वविद्याम त्रोपधिमणिरत्नोपगते साधुजन परिहीण निरालोके सत्त्वधातौ सत्त्वा भविष्यन्ति कुसीदा नष्टस्मृतया अश्राद्धा खण्डका अकल्याणमित्रपरिगृहीता शठा' मायाविना धूर्तच रिता । ते इम धर्मपर्याय श्रुत्वा च सत्रासमापत्स्य ते । आलस्यकौ सीद्याभिरता न श्रद्धास्यन्ति कामगवेषिणा न पत्तीष्यन्ति मिथ्यादृ ष्टिग्ता' । ते बहु अपुण्य प्रसविष्यन्ति सद्धर्मप्रतिक्षेपका अवीचिपरा यणाः घोराद् घोरतरं गता । तेषा दु खितानामर्थाय अवशाना वश मानेता वश्याना भयप्रदाय उपायकौशल्यसङ्ग्रहया म त्रपटविधान भाषतु भगवां । यस्येदानीं काल म यसे ॥

अथ भगवाञ्छाक्यमुनि' मञ्जुश्रिय कुमारभूत साधुकारम दात् । साधु साध मञ्जुश्री ! यस्त्वं तथागतमर्थ परिप्रष्टव्य म यसे । अस्ति मञ्जुश्री ! त्वदीय परमं गुह्यतम विद्याव्रतसाधनचर्योपटलपट विधानविसर परमहृदयानामर्थ परम गुह्यतम महार्थ निधानभूत सर्व- मन्त्राणा, पठेते पडाक्षरपरमहृदया अविकल्पता ास्म काउ सिद्धिं गच्छन्ति । तेषां सत्त्वानां दमनाय उपायकौशल्यसम्भारसमन्त्रप्रवश नताय नियतं सम्बोधिप्रापणतया पट्सप्ततिबुद्धकोटिभि' पूर्वभाषितम हमप्येतर्हि इदानीं भाषिष्ये । अनागतजनतापेक्षाय त शृणु साधु च सुष्ठु च मनसि कुरु । भाषिष्येऽह ते । कतम च तत् ॥

अथ खलु भगवां शाक्यमुनिर्मन्त्रं भाषते स्म । "ॐ वाक्यार्थं जय । ॐ वाक्यशषे स्व । ॐ वाक्येयनयः । ॐ वाक्यनिष्ठेय । ॐ वाक्येयनम । ॐ वाक्येद्नम" । इत्येते मञ्जुश्री ! त्वदीयगणमन्त्रा' षडक्षराः महाप्रभावा तुल्यसमवीर्या' परमहृदया' परमासिद्धा बुद्धमिवात्पन्ना सर्वसत्त्वानामर्थाय सर्वबुद्धै सम्प्रभाषिता समयशस्ता सम्प्रचलिता' सर्वकर्मिकाः बोधिमार्गानु देशकाः, तथागतकुले मन्त्रवरा। उत्तममध्यमेतरतृधासम्प्रयुक्ता' सुशोभनं कर्मफलविपाकप्रभा शासनान्तर्धानकालसमयसिद्धिं यास्य ति । समवशरण गद्धर्मनेत्रारक्षणार्थं ये साधयिष्यन्ति, तेषा मूलयम योगेणैव महाराज्यमहाभोगैश्वर्यार्थं ते साधयिष्यन्ति । तेषां क्षिप्रतर तास्मि काले तास्म समये सिद्धि यास्यति । अ ततो जिज्ञासनहेतो रपि साधनीया ह्येते परमहृदयाः सक्षेपत यथा यथा प्रयुज्यन्ते, तथा तथा सिद्धि यास्यति समासत' । एषा पटविधान भवति तास्मि काले तास्म समये महाभैरवे पञ्चकषाये सत्त्वा अल्पपुण्या भवि ष्यन्ति । अल्पेशाख्या' अल्पजीविन' अल्पभोगा' मन्दवीर्या न शक्य न्ते अतिविस्तरतरं पटविधानादीनि कर्माणि प्रारभन्तुम् । तेषामर्थाय भाषिष्ये संक्षिप्ततरम् ॥

आदौ तावद विक्रयेण सूत्रक क्रीत्वा, पलमात्रमर्धपलमात्रं वा, हस्तमात्र दीर्घत्वेन अर्धहस्तमात्र तिर्यक्कर्पन सदृश तन्तुवायेन वाययितव्यम् । अपगतकेशमन्य वा नव कर्पटखण्ड भत्यप्रमत ऊर्ध्वं यथेप्सत. द्विहस्तचतुर्हस्त वा षट्पञ्च दश चाष्टं वा सुशुक्लं गृह्य यथेप्सतः चित्रकरेण चित्रापयितव्यम् । अश्लेषकैरङ्गै' चन्दनकर्पूरकुङ्कुमसितै' पट चन्दनकुङ्कुमकर्पूर चैकीकृत्य, निष्प्राणकेनोदके विकलुषेना लोड्य नवे भाण्डे पट प्लावयित्वा, दिवसत्रयं सुपिधान पथि तं स्थापयेत् । कृतरक्षा शुचौ देशे आत्मन' शुचिर्भूत्वा, शुक्लपक्षे पूर्णमास्या पटभा- ण्डस्याग्रत' पूर्वाभिमुख' कुशविण्डकोपविष्टः इमे मन्त्रपदाः अष्टशत वारमुच्चारयितव्या' । तद्यथा — ॐ हे हे भगव ! बहुरूपधर' दि व्यचक्षुषे अवलोकय अवलोकय मां समयमनुस्मर कुमाररूप-

धारिणे महाबोधिसत्त्व ! किं चिरायसि । हू हू फट् फट् स्वाहा । अनेन मन्त्रेण कृतजाप तत्रैव स्वपेत् । स्वप्न कथयति सिद्धिर सिद्धि वा ॥

ततोत्थाय अविलम्बितासिद्धिनिमित्त स्वप्न दृष्ट्वा त पट लिखापयेत्, न चेदसिद्धिनिमित्तानि स्वप्नानि दृश्यन्ते । तत् पट तस्माद् भाण्डादुद्धृत्य आतपे शोषयेत् । शोषयित्वा च भूय अन्ये नवे भाण्डे न्यसेत् । सगुप्तं च कृतरक्ष च स्थापयेत् । ततो भूया तेषा पर महृदयाना अन्यतम मन्त्र गृहीत्वा, यथेष्टत' षडक्षराणां भूयो अक्षरलक्ष जपेत् । ततो आशु तत्पट सिध्यतीति ॥

आदौ तावत् त पट गृह्य प्रातिहारकपक्ष अन्यतरा शुक्लाहनि शुभनक्षत्रसयुक्ते शुभायां तिथौ शुक्लपक्षदिवसे वा सुशोभनै शकुनै' मङ्गलसम्मतायां रात्रौ अर्धरात्रकालसमये उपोषधिकेन चित्रकरेण त पट चित्रापयेत् शुचौ प्रदेशे कर्पूरधूप दहता ॥

आदौ तावदार्यमञ्जुश्रिय बालदारकाकार पञ्चचीरकशिरस्क बालालङ्कारभूषित कनकवर्ण नीलपट्टचलनिकानिवसित नीलपट्ट शुक्लोत्तरीय धर्म देशयमान सिंहासने अर्धपर्यङ्कोपविष्ट दक्षिणचरण रत्नपादपीठस्थ स्थापितासिंहासनोपविष्ट सर्वालङ्कारोपेत बालरूपेण ईषत्स्मितमुख साधकगतदृष्टिं चित्रापयेत् ॥

दक्षिणे पार्श्व आर्यसमन्तभद्र सितचामर गृह्यमाण प्रियङ्गश्याम वामहस्तचिन्तामणिविन्यस्त सर्वाङ्गशोभन सर्वालङ्कारभूषित नीलपट्ट चलनिकानिवस्त मुक्ताहारयज्ञोपवीत स्थित पद्मासनस्थ चित्रापयितव्यम् ॥

आर्यमञ्जुश्रियस्य वामपार्श्वे आर्यावलोकितेश्वर नीलपट्टचलनिकानिवस्त' सर्वाङ्गशोभन, सर्वालङ्कारभूषित मुक्ताहारयज्ञोपवीत वामहस्ते श्वेतपद्मविन्यस्त दक्षिणहस्ते सितोद्यमानचमर, हेमदण्डविन्यस्त' सौम्याकार आर्यमञ्जुश्रियगतदृष्टि तथार्यसमन्तभद्र' श्वेतपद्मासनस्थौ उभावप्यतो अभिलख्या ॥

उन्नपद्मत्रिटपान्वितो त्रीणि पद्मानि । मध्यमे मूलपद्मकर्णिका यामार्यमञ्जुश्रियस्य सिंहासनं रत्नपीठं च । अपरस्मिं पद्मे आर्यसमन्तभद्र, तृतीये पद्मे आर्यावलोकितेश्वर' । शोभनं च तत् पद्मदण्ड मरकतपद्माकार अनेकपद्मपुष्पमुकुलित पत्रोपेत विकासितार्धविकासित पुष्पमहासरोन्नतोत्थित द्वौ नागराजावष्टब्धनाभ नन्दोपनन्दसन्धारित तत् पद्मदण्ड सितवर्णो च तौ नागराजानौ सप्तस्फणावभूषितौ सर्वालङ्कारशोभितशरीरो मनुष्यार्धकायो अहिभोगाङ्कितमूर्तय आर्यमञ्जुश्रिय निरीक्षमाणो जला तार्धनिर्लीनौ मणिरत्नोपशोभितच्छदो लिखापयितव्यो ॥

समन्ताच्च महासर अधस्तात् साधक' दक्षिणपार्श्वे पटान्तकोणे आर्यमञ्जुश्रियस्य वक्त्रमण्डल निरीक्षमाणा धूपकटच्छकव्यग्रहस्त. अवनतशिरकोर्परजानुकाय. यथा वेषवर्णत , तथामभिलेख्यम् ॥

उपरिष्टादार्यमञ्जुश्रियस्य उभौ पटान्तकोणाभ्या द्वौ देवपुत्रो माल्याधारिणो पुष्पमालागृहीतो उत्पतमानो मेघान्तर्निर्लीनौ महापुष्पौघमुत्सृजमानो सुशोभनो अभिलेख्यो ॥

समन्ताच्च तत्पट नागकेसरादिभि' पुष्पं प्रकिरितमभिलिखेत् । यथेष्टतश्च चित्रपटाधिष्ठित वा अभिलिखेत् । आर्यमञ्जुश्री धर्म देशयमान' आर्यसमन्तभद्र आर्यावलोकितेश्वरश्चमरविन्यस्तपाणयो लिखापयितव्याः । यथाभिरुचितक वा साधकस्य त्रीणि रूपकाण्यि अवश्य लिखापयितव्यानि । यथेष्टाकारा वा यथासंस्थानसास्थिता वा साधकस्य यथा यथा रोचते तथा तथा लिखितव्यानि ॥

मध्ये च आर्यमञ्जुश्रीः, उभयान्ते च आर्यावलोकितेश्वर', समन्तभद्रश्च यथेप्सितः अन्य अवश्य लिखापयितव्यानि । यथालब्धे वा कर्पटखण्डे वितस्तिहस्तमात्रे वा आत्मना वा परेण वा चित्रकरेण पोपधिकेन वा अपोपधिकेन वा श्राद्धेन वा अश्राद्धेन वा शुचिना वा अशुचिना वा शीलवतेन वा दु'शीलेन वा चित्रकरेण लिखापयितव्य' ॥

आत्मना साधकेन अवश्य कृतपुरश्चरणेन श्राद्धेन उत्पादितबोधिचित्तेन अवश्यं भवितव्यमिति ॥

एवं सिध्यन्ति म त्रा वै नान्येषा पापकारिणाम् ।
श्राद्धेन तथा भूत्वा साधनीया मन्त्रदेवता ॥
सिध्यन्ते मन्त्रराद् तस्य श्राद्धस्यैवेह नान्यथा ।
श्रद्धा हि परमं यानं येन याति विनायकाः ॥
अश्राद्धस्य मनुष्यस्य शुक्लो धर्मो न रोहते ।
बीजानामग्निदग्धानामङ्कुरो हरितो यथा ॥
श्राद्धे स्थितस्य मर्त्यस्य बोद्धार हि कर्मणा ।
सिध्यन्ते देवतास्तस्य अश्राद्धस्य न सिध्यति ॥
+ + + + + + + सर्वमन्त्रा विशेषत' ।
लौकिका देवता येऽपि येऽपि लोकोत्तरा तथा ॥
सर्वे वै श्रद्धधानस्य सिध्यते विगतकल्मष. ।
आशु सिद्धिर्ध्रुवा तेषां बोधिस्तद्गतमानसाम् ॥
नान्येषां कथ्यते सिद्धिः शासनेऽस्मिन् निवारिताः ।
पन' स्व-पा विशेषो वा मध्यमो वाग्नीनित' ॥
अधुना तु प्रवक्ष्यामि सर्वकर्मसु साधनमिति ॥

बोधिसत्त्वपिटका महायानवैपुल्यसूत्रान्नार्यमञ्जु
श्रियमूलकल्पात् सप्तम पटलविसरात्
चतुर्थ पटविधानपटलविसर
परिसमाप्त इति ॥

## अष्टम पटलविसर ।

अथ खलु भगवाञ्छाक्यमुनिर्मञ्जुश्रियं कुमारभूतमामन्त्रयते स्म । ये ते मञ्जुश्री ! त्वया निर्दिष्टा सत्त्वा तेषामर्थाय इदं पटविधान विसरमाख्यातम् । ते स्वल्पेनोपायेन साधयिष्यन्ते । तेषामर्थाय साधनौपयिकं गणविस्तारप्रभेदविभागशो वर्णविभाग तमनुभाषिष्यामि । तं शृणु साधु च सुष्ठु च मनसि कुरु भाषिष्ये । सर्वसत्त्वानामर्थाय ॥

अथ खलु मञ्जुश्री कुमारभूतो भगवन्तमेतदवोचत् । साधु साधु भगवं ! सुभाषिता तेऽस्मद्विभावनाद्योतनकरा मन्त्रचर्यागुणनिष्पत्तिप्रभावनकरा वाणीम् । तद्वदतु तं भगवां । यस्येदानीं कालं मन्यसे । अस्माकमनुकम्पार्थम् ॥

अथ भगवाञ्छाक्यमुनिः सर्वावन्तं पर्षन्मण्डलमवलोक्य स्मितमकार्षीत् । अथ भगवतः शाक्यमुनेर्मुखद्वारात् नीलपीतस्फटिकवर्णाद्या रश्मयो निश्चरन्ति स्म । भगवन्तवनिश्चारिता च रश्मयो सर्वावन्तं पर्षन्मण्डलं अवभास्य त्रिसाहस्रमहासाहस्रं लोकधातु सर्वमारभवनं जिह्मीकृत्य सर्वनक्षत्रज्योतिशैलगणप्रभां यत्रेमौ चन्द्रसूर्या महर्धिकौ महानुभावौ तया प्रभया तेऽपि जिह्मीकृतो नावभास्यन्ते, निष्प्रभाणि च भवन्ति । न विराजन्ते जिह्मीकृतानि च सन्दृश्यन्ते सर्वमणिमन्त्रौषधिरत्नप्रभां निष्प्रभीकृत्य पुनरेव भगवतः शाक्यमुनेः मुखद्वारान्तर्धीयते स्म ॥

अथ खलु वज्रपाणिर्बोधिसत्त्वो महासत्त्वः तत्रैव पर्षन्मण्डले सन्निपतितोऽभूत् । सन्निषण्णः स उत्थायासनात् सत्त्वरमाणरूपो भगवतश्चरणयोर्निपत्य भगवन्तमेतदवोचत् । नाहेतुकं नाप्रत्ययं बुद्धा भगवन्तः स्मितं प्राविष्कुर्वन्ति को भगवं हेतुः, कः प्रत्ययो स्मितस्य प्राविष्करणाय ॥

एवमुक्ते, भगवां वज्रपाणिं बोधिसत्त्वमामन्त्रयते स्म । एवमेतद् वज्रपाणे ! एवमेतत् । यथा वदसि तत् तथा । नाहेत्वप्रत्ययं तथागतानां क्रियते स्मितम् । अस्ति हेतुः, अस्ति प्रत्ययः । यो इदं

सूत्रेन्द्रराज मञ्जुश्रीमूलकल्पा विद्या यथानुष्ठानकर्मसाधनोपायिकसम वशरणधर्ममेघानि श्रित समनुमत्वेशानुवर्तक करिष्यन्ति धारयिष्यन्ति वाचयिष्यन्ति श्रद्धास्यति पुस्तकलिखितं कृत्वा पूजयिष्यन्ति च दनचूर्णानुलेपनधूपमाल्ये छत्र वजपताकै विविधैर्वा प्रकारैर्वाद्यविशेषैर्वा नानातूर्यतालावचरे । अन्तशः अनुमोदनासहगत वा चित्तसन्त तिर्वा प्रतिलप्स्यन्ते रोमहर्षेण सञ्जन वा कारष्यन्ति विद्याप्रभावशक्ति वा श्रुत्वा सहृष्यन्ते अनुमोदिष्यते चर्या वा प्रतिपत्स्यन्ते । व्याकृतास्ते मया अनुत्तराया सम्यक् सम्बोधौ सर्वे ते भविष्यति । बुद्धा भगवन्तः । अत एव जिना' स्मित कुर्वन्ति नान्यथा इति ॥

आदौ तावद् दृष्टसमय' कृतपुरश्चरण लब्धाभिषेकः अस्मिन् कल्पराजमूलमन्त्रहृदय उपहृदय वा अन्यतर वा मन्त्र गृहीत्वा एकाक्षर वा अन्यं वा यथेप्सित महारण्य गत्वा त्रिशल्लक्षाणि जपे फलोदकाहारः मूलपर्णभक्षो वा कृतपुरश्चरणा भवति ॥

ततो पर्वताग्रमभिरुह्य ज्येष्ठ पट पश्चा मुख प्रतिष्ठाप्य, आत्मना पूर्वाभिमुखो कुशपिण्डकोपविष्ट श्वेतपद्मानां श्वेतकुङ्कुमाभ्यक्तानां लक्षमेक भगवतः शाक्यमुने सर्वबुद्धबोधिसत्त्वप्रत्येकबुद्धार्यश्रावकाणा पटस्याधस्तान्निवेदयेत् । कर्पूरधूप च यथाविभवत दहेत् । देवपुत्रनागानां च पूजा कुर्यात् । यथालब्धे. पुष्प ॥ ततोऽर्धरात्रकालसमये शुक्लपूर्णमास्यां प्रातिहारकप्रतिपूर्णायां पटस्याग्रत अग्नि कुण्डं कृत्वा पद्माकार श्वेतचन्दनकाष्ठैरग्निं प्रज्वाल्य कुङ्कुमकर्पूर चैकाकृत्य, अष्टसहस्राहुति जुहुयात् । यथाविभवत' कृतरक्ष ॥

तत' भगवत शाक्यमुने रश्मयो निश्चरन्ति समन्ताच्च पट' एकज्वालीभूतो भवति । तत' साधकेन सत्वरमाणरूपेण पट त्रि' प्रदक्षिणीकृत्य सर्वबुद्धबोधिसत्त्वप्रत्येकबुद्धार्यश्रावकाणा प्रणम्य पट ग्रहेतव्यम् ॥

अतीतेन पूर्वलिखितसाधकपर्यन्तदेशे ततो गृहीतमात्रोत्पतति । अच्छटामात्रेण ब्रह्मलोकमतिक्रामति । कुसुमावतीं लोकधातु सम्प्रतिष्ठति । यत्रासौ भगवां सङ्कुसुमितराजेन्द्रस्तथागत' तिष्ठति ध्रियते

भुञ्जीत गत्वा देशे तु कल्पिक । + + + + ।
शुचौ देशे तु संस्थाप्य भिक्षाभाजनशुद्धधीः ॥

पादौ प्रक्षाल्य बहिर्गत्वा तस्मादावसथात् पुन' ।
।नं प्राणके तदा अम्भे प्रथमं जड्डमेव तु ॥

द्वितीय वामहस्तेन जड्ड चाश्लिष्य चाघ्रपे ।
अपसव्य पुन कृत्वा हस्त प्रक्षाल्य मृत्तिकैः ॥

पूर्वसंस्थापितैः शुद्धै शुचिभि सप्त एव तु ।
मन्त्रपूत ततो चौक्ष शुचिनिर्मलभाजने ॥

गृह्य गोमयसुध तु कपिलागोपरिश्रुते ।
निष्प्राणकाम्भसयुक्ते कुर्या शास्तुर्मण्डमण्डलम् ॥

प्रथम मुनिवरे कुर्यात् हस्तमात्र विशेपत. ।
द्वितीय सुमन्त्रनाथस्य तृतीय कुलदेवते ॥

य जापिनो यदा म त्री तत् कुर्यात्तु सदा पुन ।
चतुर्त्थ सर्वसत्त्वानामुपभोग तु कीर्त्यते ॥

दक्षिणे लोकनाथस्य मण्डले तु सदा इह ।
रत्नत्रयाय कुर्यात्त मण्डल चतुरश्रकम् ॥

द्वितीय प्रत्येकबुद्धाना तृतीय दशबलात्मजे' ।
इत्येते मण्डला सप्त चतुरश्रा समन्तत ॥

हस्तमात्रार्धहस्त वा कुर्या चापि दिने दिने ।
शुसे देशे तदा जापी प्रत्यह पापनाशना ॥

ततोत्थाय पुनर्मन्त्री हस्तौ प्रक्षाल्य यत्नत ।
उपस्पृश्य जले चौक्षे शुद्धे प्राणकवर्जिते ॥

निर्मले शुचिने यत्नात् शुचिभाण्डे तदाहृते ।
महासरे प्रस्रवणे वापि औज्रवे सरिताहृते ॥
शुचिदेशसमायाते शुचिसत्वकरोद्धृते ।
उपस्पृश्य पुनर्मन्त्री द्वे त्रयो वा सदा पुनः ॥
आमृशेत ततो वक्त्र कर्णश्रोत्रौ तथैव च ।
+ + + + + + + + अक्ष्णौ नासापुटौ शुजौ ॥

## अथ नवमः पटलविसरः ।

अथ खलु भगवाञ्छाक्यमुनिः सर्वावती पर्षन्मण्डलोपनिषण्णां देवसङ्घानामन्त्रयते स्म । शृण्वन्तु भवन्तो मार्षा मञ्जुश्रियस्य कुमारभूतस्य चर्यामण्डलमन्त्रसाधकमोपयिक रक्षार्थं साधकस्य परम गुह्यतम परमगुह्यहृदय सर्वतथागतभाषित महाविद्याराजम् । येन जप्तेन सर्वमन्त्रा जप्ता भवन्ति । अनतिक्रमणीयोऽयं भो देवसङ्घाः ! अयं विद्याराजा । मञ्जुश्रियोऽपि कुमारभूतोऽनेन विद्याराज्ञा आकृष्टो वशमानीतो सम्मतीभूत । कः पुनर्वाद तद् ये बोधिसत्त्वा, लौकिकलोकोत्तराश्च मन्त्राः । सर्वविघ्नाश्च नाशयत्येष महावीर्यः प्रभावतः वीर्यः एक एव सर्वम न्त्राणाम् अग्रमाख्यायते । एष एव एकाक्षराणामक्षरमाख्यायते । कतम च तत् । एकाक्षर सर्वार्थसाधक, सर्वकार्यकरण सर्वमन्त्रच्छेदन दुष्टकर्मिणा सर्वपापप्रनाशन सर्वमन्त्रप्रतिपूरणं शुभकारिण सर्वलौकिकलोकोत्तरमन्त्राणामुपर्युपरि वर्तते अप्रतिहतसर्वतथागतहृदयसर्वाशापारिपूरक कतम च तत् । तद्यथा — कल्लुहीं । एष स मार्षा परमगुह्यतम सर्वकर्मिक एकाक्षर नाम विद्याराजा अनतिक्रमणीय सर्वसत्त्वानाम् । अभ्युदय सर्वभूतानां मङ्गल सर्वबुद्धाना साधक सर्वम न्त्राणां प्रभु सर्वलोकानाम् ईश्वरो सर्ववित्तेशानां मैत्रात्मको सर्वविद्विष्टानां कारुणिको सर्वजन्तूनां नाशक सर्वविघ्नानां सक्षेपत यथा यथा प्रयुज्यते तथा तथा करोति असाधितोऽपि कर्माणि करोति । मन्त्रजपता य स्पृशति स वश्यो भवति वस्त्राण्यभिमन्त्र्य प्रावरेत् सुभगो भवति । दन्तकाष्ठमभिमन्त्र्य भक्षयेद् दन्तशूलमपनयति । श्वेतकरवीरदन्तकाष्ठमभिमन्त्र्य भक्षयेत् अप्रार्थितमन्नमुत्पद्यते । अक्षिशूले सैन्धव चूर्णयित्वा सप्तवारानभिम न्त्र्य अक्षि पूरयेत् अक्षिशूलमपनयति । कर्णशूले गजविष्ठोत्थितागजानिसम्भवां छत्रिकां कटुकपत्रावनद्धां मृद्वग्निना पचेत् । सुकेलायितां सुखोष्ण सैन्धवचूर्णपूतां कृत्वा सप्ताभिमन्त्रितेन कर्णां पूरयेत्, तत्क्षणादुपशमयति । प्रसवनकाले स्त्रिया या वा मूढगर्भायाः शूलाभिभूताया. आटरूषकमूल निष्प्राणकेनोदकेन पीषयित्वा नाभिदेशे लेपयेत् । सुखेनैव प्रसवति नष्टशल्यो वा पुरुषः

पुराणघृत अष्टशतवारानभिमन्त्र्य पाययेल्लेपयेद् वा तत्प्रदेश तत्क्षणा देव नि शल्यो भवति । अजीर्णविशूचिकायातिसारे मूलेषु सौवर्चल सैन्धव वा अ य था लवण सप्तवाराभिम न्त्र्य भक्षये तस्मान्माभेमु च्यत तदह एव स्वस्थो भवति । उभयातिसारे सद्यातिसारे वा मातुलुङ्गफल पीपयित्वा निष्प्राणकेनोदकेन तस्मादाबाधान्मुच्यते । सकृज्जप्तेन तु जप्तेन वा वन्ध्याया स्त्रिया वा अप्रसवधर्मिण्या प्रस वमाकांक्षता अश्वगन्धमूल गव्यघृतेन सह पाचयित्वा गव्यक्षीरेण सह पीपयित्वा गव्यक्षीरेणेवाद्याल्य पञ्चविंशत्परिजप्त ऋतुकाले पाय ये स्नानान्ते च परदारवर्जी गृही कममिथ्याचारवर्जित स्वदारम भिगच्छे । स्वपति वा जनयते सुत त्रिपञ्चवर्षप्रसवनकालातिरेक वा अनेकवर्षविष्टब्धो वा परमन्त्रतन्त्रोषधपरमुद्रितपरदुष्टकृत वा गर्भधारणविघ्नत वा व्याधिसमुत्थित वा अन्य वा यत्किञ्चि व्याधि परविघ्नतस्थावरजङ्गमकृत्रिमाकृत्रिमगरान्निप्रन्त वा सर्वमूल मन्त्रोषधिमन्त्राभिप्रयोगकृत वा सप्तविंशतिवारा पुराणघृतमयूरच न्द्रक चेकीकृत्य पीपयेत् । तत सुपिष्ट कृत्वा शर्करेण सह योज्य ह रीतकीमात्र भक्षयेत् । सप्तदिवसानि च शर्करोपेत शृत क्षीर पाययेद् अभिमन्त्र्य पन पुन । मस्तकशूले काकपक्षेण सप्ताभिमन्त्रितेन उ मार्जयेत स्वस्थो भवति । स्त्रीप्रदरादिषु रोगेषु आलम्बुषमूल क्षीरेण सह पीपयित्वा नीलिकागृलसयुक्तमष्टशताभिमन्त्रित क्षीरेणालोड्य पाययेत् । एव चातुर्थकत्र्याहिकद्व्याहिकैकाहिकसाततिक नित्य ज्वरविषमज्वरादिषु पायस घृतसयुक्त अष्टशताभिमन्त्रित भक्षापयत् । स्वस्थो भवति ॥

एव डाकिनीग्रहगृहीतेषु आत्मनो मुखमष्टशतवारानभिम न्त्र्य निरीक्षयेत् । स्वस्थो भवति । एव मातरबालपूतनवेतालकुमारग्रहादिषु सर्वामानुषदुष्टदारुणगृहीतेषु आत्मनो हस्तमष्टशताभिमन्त्रितं कृत्वा गृहीतक मस्तके स्पृशेत् । स्वस्था भवति ॥

एकजप्तेनात्मरक्षा द्विजप्तेन सहायरक्षा त्रिजप्तेन गृहरक्षा च तुजप्तेन ग्रामरक्षा पञ्चजप्तेन यामगोचरगतरक्षा भवति । एव

यावत्सहस्रजप्तेन कटकचकरक्षा कृता भवति । एतानि चापराणि अन्यानि च क्षुद्रकर्माणि सर्वाणि करोति असाधितेऽपि । अथ साधयितुमिच्छति भद्रकर्माणि कार्याणि । एकान्त गत्वा विविक्तदेशे समुद्रगामिनीं सरित्सङ्गमे समुद्रकूले गङ्गानदीकूले वा अथवा महानदीकूलमाश्रित्य शुचौ प्रदेशे उडय कृत्वा त्रिस्नायी त्रिचैलपरिवर्ती मौनी भिक्षभैक्षाहारसाधकयावकपयो फलाहारो वा त्रिंशल्लक्षाणि जपेत् सिद्धिनिमित्त ततो दृष्ट्वा ततो साधनमारभेत् । ज्येष्ठं पटं तत्रैव देशे तस्मिं स्थाने पटस्य महतीं पूजा कृत्वा सुवर्णरूप्यमयी ताम्रमृत्तिकमयैर्वा प्रदीपकै तुरुष्कतैलपूर्णं गव्यघृतपूर्णैर्वा प्रदीपकै प्रत्यग्रवस्त्रखण्डाभि खण्डाभि कृतवर्तिभि लक्षमेक पटस्य प्रदीपानि निवेदयेत् । सर्वाणि सम समन्तात् समनन्तरप्रदीपितै प्रदीपमालाभि पटस्य रश्मयो निश्चरन्ति । समनन्तरनिश्चरितै रश्मिभि पट समन्तज्वालमालाकुलो भवति । उपरिष्टाच्चान्तरिक्षे दुन्दुभयो नदन्ति । साधुकारश्च श्रूयते ॥

ततो विद्याधरेण सत्त्वरमाणरूपेण साधकपटान्तकोण पूर्वलिखितपट निसृतं अर्घं दत्त्वा प्रदक्षिणीकृत्य सर्वबुद्धां प्रणम्य ग्रहेतव्यम् । ततो गृहीतमात्रेण सर्वप्रदीपगृहीतै सत्त्वै सार्धं समुत्पतति ब्रह्मविमानक्षण वा गच्छन्ति । दिव्यतूर्यप्रतिसयुक्ते मधुरध्वनिगीतवादितनृत्यापेतै विद्याधरीभि समन्तादाकीर्णे त साधक विद्याधरचक्रवर्तिराज्य अभिषेचयन्ति । तान् ते प्रदीपधारिभि अजरामरलीली भवति । महाकल्पस्थायी भवति । उदितादित्यसङ्काश दिव्याङ्गशोभी विचित्राम्बरभूषित । त एवास्य भवन्ति किङ्करा । तै सार्धं विचरति । सर्वविद्याधरराजास्य दासत्वेनोपतिष्ठन्ते । विद्याधरचक्रवर्ती भवति । चिरञ्जीवी अजय्यो भवति । सर्वसिद्धाना परमशुभगो भवति । विद्याधरकन्याना वशेता भवति । सर्वद्रव्यानां बुद्धबोधिसत्त्वांश्च पूजयति । तता भवति क्षणमात्रेण ब्रह्मलोकमपि गच्छति । शक्रस्यापि न गणयति । किं पुनस्तदन्यविद्याधराणाम् । अन्ते चास्य बुद्धत्व भवति । आर्यमञ्जुश्रियश्चास्य + + + + + + + + + + + + साधन भवति । उत्तमतरम् । तत एकान्ते

गत्वा विवेके विगतजने निःसङ्गसङ्गरहिते महारण्यमनुप्रविश्य यत्र स्थानं पद्मसरं सरितोपेतं एकपर्वताश्रितं पर्वताग्रमभिरुह्य षडक्षरं विद्याराजं मञ्जुश्रीरूपभाषितं वा तथागतभाषितं बोधिसत्त्वभाषितं वा अन्यतरं मन्त्रं गृह्य तेषां यथेप्सितं पत्रमूलफलाहारो पयापयोगाहारो वा विद्या षट्त्रिंशल्लक्षाणि जपेत्। जपान्ते च तेनैव विधिना पूर्वनिर्दिष्टेन ज्यपु पटं प्रतिष्ठाप्य पद्मपुष्पाणां श्वेतचन्दनकुङ्कुमाभ्यक्तानां खदिरकाष्ठैरग्निं प्रज्वाल्य पूर्वपरिकल्पितां पद्मां षट्त्रिंशत् सहस्राणि जुहुयात् ॥

ततो होमावसाने भगवतः शाक्यमुनेः पटस्य रश्मयो निश्चरन्ति। ततः साधकमत्रभास्य मूर्धान्तर्धीयन्ते। समनन्तरस्पृष्टश्च साधकः पञ्चाभिज्ञो भवति। बोधिसत्त्वलब्धभूमिः दिव्यरूपी यथेष्टं विचरते। षट्त्रिंशत्कल्पां जीवति। षट्त्रिंशद्बुद्धक्षेत्रानतिक्रामति। तेषां च प्रभाव समनुपश्यति। षट्त्रिंशद्बुद्धानां प्रवचनं धारयति। तेषां च पूजोपस्थानाभिरतो भवति। अन्ते च बोधिपरायणो भवति। आर्यमञ्जुश्रीकल्याणमित्रपरिगृहीतो भवति। यावद् बोधिनिष्ठ निर्वाणपर्यवसानम् इति ॥

बोधिसत्त्वपिटकावतंसकाद् महायानवैपुल्यसूत्राद् आर्य
मञ्जुश्री[illegible]
उत्तमसाधनौपयिककर्मपटलविसर
परिसमाप्त इति ॥

## अथ दशम पटलविसर ।

अथ खलु भगवांश्छाक्यमुनि पुनरपि कर्मसाधनोत्तम भाषते स्म । इह कल्पराजे अ यतम मन्त्र गृहीत्वा गङ्गामहानदीमवतीर्य नौ यानसंस्थित गङ्गाया मध्ये क्षीराहाराहार त्रिशल्लक्षाणि जपेत् यथे ष्टदिवसै ॥

ततो जपान्ते सर्वान् नागा पश्यति । तत साधनमारभे तत्रैव नौमध्ये अग्निकुण्ड कारयेत् पद्माकारम् । ततो नागकेसरपुष्पैः पटस्य महतीं पूजा कृत्वा ज्येष्ठ पट पश्चा मुख प्रतिष्ठाप्य आत्मनश्च पूर्वाभिमुखं कुशविण्डकोपविष्ट नागकेसरपुष्प एकैक सप्ताभिमन्त्रित कृत्वा खदिरकाष्ठ धनाग्निप्रज्वालिते जुहुयात् । यावत् त्रिंशसहस्राणि श्वेतचन्दनकुङ्कुमपूताना नागकेसरपुष्पा नान्येषा नागानां दर्शनम वेक्ष्यं सिद्धद्रव्यैश्च प्रलोभयन्ति । न ग्रहीतव्यानि ॥

ततो होमान्ते नौयानेन सार्द्धमुत्पतति । विद्याधरचक्रवर्त्ती भ वति । सर्वनागे द्रराजाश्चास्यानुचरा भवन्ति । भृत्या इव तिष्ठन्ते । त्रिंशत्यन्तरकल्पा जीवति । स्वच्छ दचारी चास्य भवति । अप्रति हतगति, आर्यमञ्जुश्रिय साक्षात् पश्यति । स मूर्ध्नि स्पृशति स्पृ ष्टमात्रश्च पश्चाभिज्ञो भवति । नियत बुद्धत्वमधिगच्छति । अपरमपि उत्तमकर्मापयिकसाधन भवति । गङ्गामहानदीमवतीर्य एककाष्ठेनैव बिल्ववृक्षमयन नौयान कृत्वा शुक्ल मुक्त तत्र समारोप्य बिल्वका ष्ठकमय वाहन तेनेव ता नौ अनुगाधकनर व्यक्तेन निपुणतरेण वाहये गङ्गामहानदीमपरित्यज्य वाहयेत् समन्तात् । तिर्यक् दीर्घ वा । अतोऽन्यतर मन्त्र गृहीत्वा मूलमन्त्रषडक्षरमकृत् अष्टाक्षर एकाक्षर वा क्रोधदूतीदूत अपरा वा अन्यतर वा मन्त्र गृहीत्वा ज्येष्ठ पटं तत्रैव पश्चान्मुख प्रतिष्ठाप्य आत्मनश्च पूर्वाभिमुख प्रथमत पश्चाद् यथेष्ट भ वति क्षीरयावकफलाहारा वा उदक दमूलफलाहारो वा मौनी त्रि कालस्नायी त्रिचेलपरिवर्ता शयनमैथुनमाचारी सुशुक्लबुद्धि । प्रथम तावत् पटस्याग्रत यथापादप्रपूर्वप्रविधि विद्या षष्टिलक्षाणि जपेत् । ततो जपान्ते नौर्महासमुद्राभिगामिनी भवति ॥

ततः साधकेनोपकरणानि सर्वाणि पूर्वस्थापितकानि कुर्यात् तत्रैव नौयाने। ततः महासमुद्रं गच्छता न भेतव्यम्। नापि निवारयितव्या। न च शक्यन्ते निवर्त्तापयितुं वर्जयित्वा साधकवशात्॥

ततो मुहूर्तमात्रेणैव महासमुद्रं प्रविशति योजनसहस्रस्थितापि, किं पुनः स्वल्पमध्यानम्। तत्र प्रविष्ट सर्वितालये साधनकर्मणारभेत्। खदिरकाष्ठैरग्नि प्रज्वाल्य पूर्वकारिताग्निकुण्डे कुम्भकारकारिते वा मृद्भाण्डे नागकेसरकिञ्जल्काहुतीनां श्वेतचन्दनकर्पूरव्यामिश्राणां स्वल्पतराणां प्रभूततरप्रमाणानां वा षष्टिलक्षाणि जुहुयात्॥

जुह्वतश्च लङ्कापुरिनिवासिनो राक्षसा बहुरूपधारिणः हाहाकारं कुर्वन्तो नागपुरिभोगवतीवासिनाश्च नागराजानः उत्तिष्ठन्ते विविधरूपधारिणो क्रूरतराः सौम्यतराश्च। ते नागराक्षसाश्च एवमाहुः—उत्तिष्ठतु भगवानुत्तिष्ठतु भगवानिति। अस्माकं स्वामी भवन्। एवं असुरा यक्षा देवा महोरगाः सिद्धाः सर्वमानुषाः प्रक्षोभयन्ति। नोत्थातव्यं न भेतव्यं च॥

ततो विद्याधरेण मन्त्रं जपता वामहस्ते तर्जन्या तर्जयितव्या। ततो विद्रवन्ति इतश्चामुतश्च प्रपलाय ते नश्यन्ति च। ततः होमावसाने सा नौत साधकं गृहीत्वा क्षणेनाकनिष्ठभवनं गच्छन्ति। अपराण्यपि लोकधातुं गच्छत्यागच्छति च। नानासत्त्वचित्तविन्नो भवति पञ्चाभिज्ञः महर्द्धिको भवति महानुभावः। आर्यमञ्जुश्रियं चास्य सततं पश्यति। सर्वनागाः सर्वराक्षसाः सर्वदेवाः सर्वासुराः सर्वसत्त्वाश्चास्य वश्या भवन्ति। आज्ञाकराः स्थापयित्वा सर्वबुद्धबोधिसत्त्वप्रत्येकबुद्धार्यश्रावकानामिह मन्त्रसिद्धानां च। ते चास्य मैत्रात्मका भवन्ति अनुमन्तारः यावत्सर्वसत्त्वानामग्र्यो भवति॥

अपरमपि कर्माप्यधिकोत्तमसाधनं भवति। बिल्वकाष्ठैर्महता नौयानं कारापयेत्। एककाष्ठन्दारुसङ्घातैर्वा महतावस्थानं च कुर्यात्। गङ्गामध्यस्थे द्वीपकं तत्रस्थं नौयानं कुर्यात्। तस्मिंश्च नौयाने विशोत्तरशतं पुष्पाणां प्रदीपव्यग्रहस्तानां नौयानमभिरूढानां शुक्लाम्बरवसनानां कृतरक्षाणां ज्येष्ठपन्पूर्वविधिसंस्थापितकस्याग्रतः संस्थाप-

येत्। ततो पटस्य महता पूजां कृत्वा नागकेसरचूर्णानां कुङ्कुमश्वेत च दनकपूरक्षामिश्राणां खदिराग्नौ आहुतीसहस्राणि पट्त्रिंश जुहुयात॥

ततो होमावसाने सा तो क्षणमात्रेण ब्रह्मलोकं गच्छति। आगच्छति च। यथेष्ट विचरत। आर्यमञ्जुश्रियं साक्षात् पश्यति। दृष्टमात्रश्च भूमिप्राप्तो भवति पञ्चाभिज्ञ चिरकालजीवी महाकल्पस्थायी महाविद्याधरचक्रवर्तिराजा भवति। ते चास्य प्रदीपधरा सिद्धविद्याधरा भवन्ति। सहायका ते सार्द्धं यथेष्ट विचरते स्वच्छन्दगामी भवति। बुद्धानां भगवतां पूजाभिरता भवति। अन्ते च बुद्धत्वं नियत भवति। अपरमपि कर्मापयिकसाधनोत्तमो भवति॥

नदीकूले समुद्रकूले वा हिमवन्तगिरौ तथा।
पर्वते विन्ध्यराजेऽस्मिं साधयेत् कर्ममुत्तमम्॥

सह्ये मलये चैव अर्बुदे गन्धमादने।
त्रिकूटे पर्वतराजेऽस्मिं साधयत् कर्ममुत्तमम्॥

महासमुद्रे तथा शैले वृक्षाग्न्ये पुष्पसम्भवे।
एते देशेषु सिध्यन्ते मन्त्रा वै जिनभाषिता।
विविक्तदेशे शुचौ प्रान्ते ग्राम्यधर्मविवर्जिते॥

सिध्यन्ते मन्त्रराट् सर्वे तथैव गिरिगह्वरे।
प्रान्तशय्यासने रम्ये तथैव जिनवर्णिते॥

दुष्टसत्त्वविनिर्मुक्त सिध्यन्ते सर्वमन्त्रराट्।
धार्मिके नृपे देशे शौचाचाररते जने॥

मातपितृभक्ते च द्विजवर्णविवर्जिते।
देवता सिद्धिमायान्ति तस्मिं स्थाने तु नान्यथा॥

भागीरथीतटे रम्ये यमुने चैव सुशोभने।
सिन्धुर्नर्मदवक्षे च चन्द्रभागे शुचौ तटे॥

कावेरी सरस्वती चैव सिता देवमहानदी ।
सिद्धिक्षेत्राण्येतानि उक्ता दशबलात्मजैः ॥
दशबलैः कथिता' क्षेत्रा उत्तरापथपर्वता ।
कश्मीरे चीनदेशे च नेपाले कापिशे तथा ॥
महाचीने तु वै सिद्धि सिद्धिक्षेत्राण्यशेषत ।
उत्तरां दिशिमाश्रित्य पर्वता' सरिताश्च ये ॥
पुण्यदेशाश्च ये प्रोक्ता यवगोधूमभोजिन. ।
सत्त्वा दयालवो यत्र सिद्धिस्तेषु ध्रुवा भवेत् ॥
श्रीपर्वते महाशैले दक्षिणापथसञ्ज्ञिके ।
श्रीधान्यकटके चैत्ये जिनधातुधरे भुवि ॥
सिद्ध्यन्ते तत्र मन्त्रा वै क्षिप्रं सर्वार्थकर्मसु ।
वज्रासने महाचैत्ये धर्मचक्रे तु शोभने ॥
शान्तिं गत मुनि' श्रेष्ठो तत्रापि सिद्धि दृश्यते ।
देवावतारे महाचैत्य सङ्काश्ये महाप्रातिहारिके ॥
कपिलाह्वये महानगरे वरे वने लुम्बिनि पुङ्गवे ।
सिद्ध्यन्ते मन्त्रराट् तत्र प्रशस्तजिनवर्णिते ॥
गृध्रकूटे तथा शैल सदा सीतवने भुवि ।
कुसुमाह्वये पुरवरे रम्ये तथा काशीपुरी सदा ॥
मथुरे कन्यकुब्जे तु उज्जयनी च पुरी भुवि ।
वैशाल्या तथा चैत्ये मिथिलायां च सदा भुवि ॥
पुरीनगरमुख्यास्तु ये चान्ये जनसम्भवा ।
प्रशस्तपुण्यदेशे तु सिद्धिस्तेषु विधीयते ॥
एते चान्ये च देशा वै ग्रामजनपदकर्वटा ।
पत्तना पुरवरा श्रेष्ठा पुण्या या सरिताश्रिता ॥
तत्र भिक्षानुवर्ती च जपहोमरतो भवेत् ।
लपने चाभ्यवकाशे च शून्यगायतने सदा ॥

पूर्वसेवां तु कुर्वीत मन्त्राणां सर्वकर्मसु ।
मध्यदेशे सदा मन्त्री जपेन्मन्त्रं समं ततः ॥

जापमवृत्तो सन्ध्यायुक्त' त्यागाभ्यासात् मन्त्रवित् ।
शीलाचारसुसत्यश्च सर्वभूतहिते रतः ॥

श्राद्धो मन्त्रचर्यायां पूर्वमेव जप व्रतः ।
शुचौ देशे सुक्षेत्रे म्लेच्छतस्करवर्जिते ॥

सरीसृपादिषु सर्वेषु वर्जितं च विशिष्यते ।
फलपुष्पसमोपेते प्रशस्ते निर्मलोदके ॥

सर्वे मन्त्रविन्म न ना यदेशेषु कीर्त्यते ।
देवालये श्मशाने वा एकस्थानस्त्रभिते ॥

एकलिङ्गे तथा प्रान्ते सर्वं मन्त्रं तु म न्त्रवित् ।
आत्मरक्षा सखाया तु कृत्वा वै स पुरश्चरी ॥

मन्त्रयुक्तो सदा मन्त्री सेवे मन्त्रमुत्तमम् ।
महारण्ये महावृक्षे कुसुमाढ्ये फलाढ्यके ॥

। । + । + + । । पर्वताग्रं तु निम्नग ।
उत्कस्थाने शुचौक्षे च महासरित्तटे वरे ॥

सेवेत म न्त्र म न्त्रज्ञः स्थानेष्वेह + + + + ।
प्राग्देशे च लोहित्ये महानद्ये नदीशुभे ॥

कामरूपे तथा देशे वर्धमाने पुरोत्तम ।
यत्रासो निम्नगा श्लिष्टातिपुण्याग्रसरिद्वरा ॥

तस्मिं स्थाने सदाजापी भजेत सुदिशा शचि ।
पूर्वसेव तु तस्माद्वै कुर्यात्सर्वकर्मसु ॥

गङ्गाद्वारे तथा नित्यं गङ्गासागरसङ्गम ।
शुचिर्जपेत मन्त्रं वै प्रयाग चव सन्नत ॥

महाश्मशानान्येतानि जापी तत्र सदा जपेत् ।
विमलोदकानि सरितानि क्रमिभिर्वर्जितानि च ॥

अतएव जपी तत्र जपेत् मन्त्र समाहित ।
न पुण्यं तत्र वै किञ्चिद् दृश्यते लोकचेष्टितम् ॥
किं तु मन्त्रापदेशेन किञ्चित्काल वसेत् वै ।
अन्यत्र वा ततो गच्छेत् समये सामग्रहे व्रजत् ॥
समयप्राप्तो वसेत्तत्र किञ्चित्काल न नान्यथा ।
अन्यत्र वा ततो क्षिप्र गच्छेत् शक्ता तु मन्त्रवित् ॥
सुगतध्युषितचैत्येषु भूतलेषु सदा वसत् ।
लौकतीर्थानि सर्वाणि कुदृष्टिपतितानि च ॥
अन्यानि तीर्थस्थानानि मन्त्रविद् वर्जयेत् सदा ।
न वसत् तत्र मन्त्रज्ञो कुहेतुगतिमुद्भवाम् ॥
आक्रान्त जिनवरैर्यस्तु भूतल प्रत्येकखड्गिभि ।
बोधिसत्त्वैर्महासत्त्वै श्रावकैर्जिनवरात्मजै ॥
तानि सर्वाणि देशानि सेवेत्स वक्तिमन्त्रजापी ।
पूर्वमेव प्रयत्नेन तस्मिन् स्थाने सदाचरे ॥
विधिदृष्टेन मन्त्रज्ञो जपेन्मन्त्र पुनः पुन' ।
पाप क्षेप नाशयति जपहोमैश्च देहिनाम् ॥
तस्मात् सर्वप्रयत्नेन जपेन्मन्त्र सुसमाहितमिति ॥

एतानि स्थाना युक्तानि सर्वकर्मेषु च उत्तमकर्मापयिकसाधनेषु। एषामलाभेन यत्र वा तत्र वा स्थाने शुचौ पूर्वसेवा कार्या श्रद्धा विमुक्तेन साधनापयिकोत्तमकर्म समाचरेत् ॥

आदौ तावज्जयेत् पट पश्चान्मुख प्रतिष्ठाप्य आत्मनश्च पूर्वाभि मुख प्रतिष्ठाप्य वल्मीकाग्रमृत्तिका वा गङ्गानदीकूलमृत्तिकां वा गृह्य उशीरश्वेतच चन्दनकुङ्कुम वा कर्पूरादिभिर्व्यतिमिश्रयित्वा मयूराकार कुर्यात् । त पटस्याग्रत स्थापयित्वा शन्छिन्नाग्रै कुश शुचिदेशस मुद्भवे चक्राकार कृत्वा पटस्याग्रत दक्षिणहस्तेन गृहीत्वा वामहस्तेन मयूर शुक्लपूर्णमास्या रात्रौ पटस्य महतीं पूजा कृत्वा कर्पूरधूपं दहता तावज्जपेद् यावत्प्रभात इति ॥

ततः सूर्योदयकालसमये त मृ गय गगुर महामयूरराजा भ वति । चक्रश्चान्तर्हितः । आत्मना च दिव्यदेही दिव्यमाल्याम्बराभरणविभूषित उदितादित्यसङ्काश कामरूपी । सर्वबुद्धबोधिसत्त्वाना प्रणम्य पट प्रदक्षिणीकृत्य पट गृहीत्वा तस्मि मयूरासन निषण्ण मुहूर्तेन ब्रह्मलोकमतिक्रामति । अनेकविद्याधरकोटीनयुतशतसहस्रपरिवारित विद्याधरचक्रवर्ती भवति । षष्टिमन्व तरकल्पा जीवति । यथेष्टगतिप्रचारो भवति । अप्रतिहतगति दिव्यसम्पत्तिसम वागतो भवति । आर्यमञ्जुश्रिय साक्षात् पश्यति साक्षात् पश्यति । स एवास्य कल्याणमित्रो भवति । अ ते च बुद्धत्व प्राप्नोतीति ॥

एवं दण्डकमण्डलुयज्ञोपवीतमनःशिलागोरोचनरसाञ्जननागचभिण्डिपालपरशुनानाविधाश्च प्रहरणविशेषा मृन्मया द्विपदचतुष्पदा पक्षिवाहनविशेषा सिंहव्याघ्रनक्रादीनाञ्च व मात्रमृत्तिकमया वल्मीकमृत्तिकमया वा सुगन्धगन्धाभिपूर्णा आसनवाहनशयनवाहनसिता तपत्रमकुटाभरणविशेषा सर्वाश्च रत्नविशेषा सर्वाश्च प्रव्रजितोपकरणविशेषा अक्षसूत्रोपानहकाष्ठपादुकपात्रचीवरखक्खरकशूचीशस्त्रप्रभृतयो पुष्पलोहमयानि अन्ये वा यत्किञ्चित् सर्वोपकरणभाण्डप्रभृतयो पुष्पलोहमया वल्मीकमृत्तिकान्तर्क्रियमृत्तिकमया वा ता सर्वा पञ्चगव्येन प्रक्षालयित्वा अभ्युक्षयित्वा वा अष्टशताभिमन्त्रित कृत्वा सशोधनमन्त्रेण रक्षामन्त्रेण वा अ यतरेण वा मन्त्रेणहकल्पराजोक्तेन तर्जयित्वा पुनः सम्पादयित्वा म त्रेण य ष्टव्य यथाभिरुचित आत्मनो कृतरक्ष सहायकाश्च कृतपरित्राण सगुप्तमन्त्रतन्त्रज्ञ पूर्वनिर्दिष्टेषु स्थानेषु पश्चा मुख प्रतिष्ठाप्य आत्मना पूर्ववत् पटस्य महती पूजा कृत्वा ज्यष्टस्य पुरतः रूपं स्थाप्य नत्वा पूर्वनिर्दिष्टानां प्रहरणोपकरणसर्वविशेषा पूर्वनिर्दिष्टक्रियया शुक्लपूर्णमास्यां रात्रौ अ यतर सदृश तेषा रात्रौ तावज्जपेत् यावत् सूर्योदयकालसमयम् ॥

अत्रा तरे महाप्रभामाली पटो गच्छयते । यदि वाहनविशेष साधकेन गृहीतो भवति तत्राभिरुह्य यथेष्ट गच्छति । यत्राभरणविशेषा प्रहरणविशेषो वा त गृह्य वा कन्या वा विद्याधरचक्रवर्ती

भवति । यथेष्ट गच्छति दिव्यरूपी उदितादित्यसङ्काशः महाप्रभामाली
विद्युद्योतितमूर्त्ति सर्वविद्याधरप्रभु दीर्घजीवी महाकल्पस्थ अनेक
विद्याधरकोटीनियुतशतसहस्रपरिवार दिव्यमहामणिरत्नचारी येन वा
वाहनेन पूर्वपरिकल्पितेन दृष्ट येन सिद्धा स एवास्य महाप्रभावो भव
ति । तमेवास्य वाहन स एवास्य सहायक परमन्त्राणुसिद्धि नि
वारयित्वा आत्ममन्त्रसिद्धि सम्प्रयोजितमन्त्रात्मको हितकाम सतता
नुबद्ध य एवास्य प्रहरणाभरणरत्नविशेषा॰ आसनशयनयानसत्त्व
प्रभृतयो त एवास्य महारक्षावरणगुप्तये नित्यानुबद्धा भवन्ति ।
महाप्रभावो महावीर्यो महाकायश्च भवति । आर्यमञ्जुश्रिय साक्षात्
पश्यति । साधुकार च ददाति । मूर्ध्निरपरामृष्टेन कल्याणमित्रतां च
प्रतिलभते । यावद् बोधिमण्डलमनुप्राप्त इति दशबलतां नियतमवा
प्नोति । पूज्यश्च भवति । सर्वसत्त्वानामनभिभवनीय अधृष्यो भवति
सर्वभूतानां भूतकोटीवशानुच्छेदकः भूमिप्राप्तश्च भवति । दशबलानां
बोधिसत्त्वनियामता च समनुगच्छतीति सक्षेपतो उत्तमकर्माणि सर्वा
णि उत्तमस्थानस्थिते उत्तमपदस्याग्रत उत्तमपूजाभिरत उत्तमान्येव
कर्माणि कुर्यात । विद्याधरत्वमाकाशगम । बोधिसत्त्वमनुप्रवेश पञ्चा
भिज्ञतां भूमिमनुप्रापणता अनन्त देहन लोकधातुसङ्क्रमणता दश
बलवशपारिपूरणाये आर्यमञ्जुश्रिय साक्षाद्दर्शनताये अवन्ध्य दर्शन
[illegible]
प्रापणताय धर्ममेघाक्षरनरामनुप्रवेशनताये क्लेशानुच्छोपण अमृतवृष्टि
धारिभि प्रशमनताये लोकानुग्रहप्रवृत्तिरनुष्ठानताये तथागतधर्मनेत्रार
क्षणताये तथागतवंशानुच्छेदकरणताये मन्त्रचर्यासाधनोपयिकविधि
प्रभावनताये सबुद्धबोधिसत्त्वप्रत्येकबुद्धार्यश्रावकमाहात्म्यधर्ममुद्भाव
नताये साधनीयमिम कल्पराजविसर मन्त्रप्रतिभापयुक्तज्येष्ठपदाग्रस
मीपस्थसर्वलौकिकलोकोत्तरमन्त्रकल्पसर्वतन्त्रेषु विधिमार्गेण सक्षेपतो
इहान्यकल्पभाषितैरपि कर्मभि' साधनीयोऽयं पटराजा । आशुस्तेषां
मन्त्राणा सिद्धिर्भवतीति यन्मया कथित तदवश्यं सिध्यतीति ॥

बोधिसत्त्वपिटकावतसकाद् महायानवैपुल्यसूत्राद् आर्यमञ्जु
श्रियमूलकल्पाद् दशम उत्तमपटविधान
पटलविसर परिसमाप्त ॥

---

अथैकादशः पटलविसरः।

अथ खलु भगवा शाक्यमुनिः पुनरपि शुद्धावासभवनमवलोक्य मञ्जुश्रियं कुमारभूतमामन्त्रयते स्म। अस्ति मञ्जुश्री! त्वदीयं मध्यम पटविधान मध्यमकर्मापरिकर्मा परितः समासतः। तां भाषिष्ये। तं शृणु। साधु च सुष्ठु च मनसि कुरु। भाषिष्य॥

अथ खलु मञ्जुश्री कुमारभूतो भगवन्तमेवमाहु—'तद् वदतु भगवां लोकानुकम्पको शास्ता सर्वसत्त्वहिते रत। यस्येदानीं कालं मन्यसे। अस्माकमनुकम्पार्थमनागताना च जनतामवेक्ष्य॥

एवमुक्ते भगवा मञ्जुश्रिया कुमारभूतेन भगवानतन्त्वोचत्। शृणु मञ्जुश्री! आदौ तावत् शीलव्रतशौचाचारनियमजपहोमध्यानविधि यत्र प्रतिष्ठिता सर्वमन्त्रचर्यासाधनकर्माण्यवन्ध्यानि भवन्ति सफलानि। आशु च सर्वमन्त्रचर्यासाधनकर्मा यत्र ध्यानि भवन्ति सफलानि। आशु च सर्वमन्त्रप्रयोगानि सिद्धिं गच्छन्ति। कतम च तत्। भाषिष्येऽहं शृणु कुमार!॥

आदौ तावद् विद्याव्रतशीलचर्यासमाधान प्रथमत एव समाददेत। प्रथम तावन्मण्डलाचार्यापदेशनसमयमनुप्रविशेत। तत्रीय [illegible]
कुशलं व्यक्त धार्मिक सत्यवादिन महोत्साह कृतज्ञ दृढसौहृद नातिवृद्ध नातिबाल निस्पृह सर्वलाभसत्कारेषु ब्रह्मचारिणं कारुणिक न लाभमात्रेण भोगहेतोर्वा अनुनयहेतोर्वा न मृषां वन्ते क पुनर्वादा स्वल्पमात्रेणैव लाभमोहप्रकार दृढप्रतिज्ञा समना सर्वभूतेषु दयावां दानशाल कृतपरश्चरण त्वदीयगुह्यमन्त्रानुजापी पूर्वसेवकृतविधि' त्वदीयमण्डलसमनुपूर्वप्रविष्ट' लोकज्ञ विधिज्ञ समनुग्राहक कार्यो वां विचक्षण श्रेयसप्रवृत्त अभीरु अच्छम्भिनममङ्कुभूत दृढवीर्य अव्याधित यन व्याधिना अकर्मशीली महाकुलप्रसूत श्चेति। एभिर्गुणैर्युक्तो मण्डलाचार्यो भवति॥

साधकश्च तत्सम न्यूनो वा किञ्चिदङ्गैः तादृशं मण्डलाचार्यं मभ्यर्थ्य प्रार्थयेत्। इच्छाम्याचार्येण महाबोधिसत्त्वस्य कुमारभूत

स्यार्यमञ्जुश्रियम्य समयमनुप्रावणम् । तत्र तन्त्राचार्योऽस्माक मनुकम्पार्थ नित्तो दयात्रा ।

ततस्तेन मण्डलाचार्येण पूर्वनिर्दिष्टेन विधिना शिष्या यथा पूर्व परीक्ष्य प्रवेशयत् । पूर्ववदभिषेक दत्त्वा, म त्र दद्यात् । यथावत् क्रमशो समय दर्शयेत् । रहस्यानमुद्रामनुकर्माणि च प्रभूतकालेनैव सुपरीक्ष्य आशय ज्ञात्वा दर्शयत् । सर्वत्र म त्रान्तिपु कर्माणि ना न्येषामिति विविरेषा प्रकीर्तिता ॥

तत शिष्येण मण्डलाचार्यस्य यथाशक्ति आचार्या या यत तुष्येत, आ मार भागाश्च प्रतिपादयेत् ॥

ततस्तेन मण्डलाचार्येण पुत्रसज्ञा उपस्थापयितव्या । पुत्रवत् प्रतिपत्तव्यम् । मातुश्च भोगा उपसहर्तव्या इति ॥

ततस्तेन साधकेन अ य ाम म त्र ग्री वा गत्वा पूर्व निर्दिष्टे स्थाने पयाल तेरे म त्र आहारा विसर्जनमन्दीपग धूप बलिनिवेद्य मण्डलाकृत विधिना त्रिस्तरेण कर्तव्यम् । आदृय अ र्घासन दत्त्वा विस या विसर्जनी विद्यापारवर्ती जाप कुर्यात् प्रत्यह तत्र स ध्याकाल नाम ाद्यन्त प्रभात यावद् युगमात्रादि त्योदयम् । अन्ततरे प्रथम स ध्याच्यते । मध्याह्न च आदित्ये उभयान्ते युगमात्र प्रमाण ज्योति सानात्र रविमण्डल म ध्य स ध्यमुच्यते । अस्तमनकाले च युगमात्रप द्वितीय स ध्यमुच्यत इति ॥

शीलव्रतसमायुक्तमाचार्य दक्षपण्डितम् ।
महाकुलाच्चप्रसूत च मन्त्रीय तु सर्वत ॥
मन्त्र ताभियुक्त च सर्वकार्येषु दक्षरी ।
सूक्ष्मो निपुणमन्त्रज्ञ धर्मशातु रग सदा ॥
महात्साही त तेजस्वो ला रमानुपश्यिण ।
श्राद्धो मुनिवरधर्मोऽस्मि लौकिकाना तु वर्जिता ॥
कृतजापी विवेकज्ञो पूर्वसेवानुसेवित ।
अज्ञो मञ्जुघापस्य दृष्टप्रत्ययतत्पर ॥

लौकिकानां मयाग्ज्ञा मन्त्राणां बद्धभाषितानाम् ।
कृतरक्षो दृढस्थामा शोचाचाररत सदा ॥

बुद्धोपदेशित मार्गमनुरक्ता च सर्वत ।
उत्युक्तो मन्त्रजापऽस्मि प्रशस्ते जिनवाणने ॥

दृष्टकर्मफले नित्य परलोके तथैव च ॥
भीरु स्यात् सर्वपापानामणुमात्र तथत्र च ॥

शुचिर्दक्षोऽप्यनलस मेधावी प्रियदर्शन ।
दशवलै कथिता य त्राम्नायत्र जिनसूनुभि ॥

लौकिका ये च मन्त्रा वै वज्रान्तकुलयोरपि ।
तयां कृतश्रमा नित्य ग्रन्थशास्त्रार्थ गाग्रा ॥

अव्याधितो नशक्तिष्ठो जराबाल्यादिवर्जित ।
सिद्धमन्त्रो तथारम्भो आशुकारी तु सर्वत ॥

अदीर्घसूत्री तथा गानी इङ्गितज्ञो विशेषत ।
ब्रह्मचारि महाप्राज्ञो एकाकीचरसङ्गकृत् ॥

लब्धाभिषेको शूरश्च तन्त्रेऽस्मिन् मञ्जुभाषिते ।
कृतजापा तकृद्युक्तो कृतविद्यो तथैव च ॥

महानुभावा लोकज्ञो गतितत्त्वानुचि तन' ।
श्रेयसायैव प्रयुक्तश्च दाता भूतहिते रत ॥

तथा विशिष्टो आचार्यो प्रार्थनीयो सदा तु वै ।
लिखितं तेन मन्त्राणा मण्डल सिद्धिमर्छेति ॥

अभिषेकं तु तेनैव दत्त भवति महत् फलम् ।
सिद्धिकामस्तु शिष्यैर्वा पूज्याऽसौ मुनिवत् सदा ॥

अलङ्घ्य तस्य वचन शिष्ये कर्तव्य यत्नत ।
भोगास्तस्य दातव्या यथाशक्त्यागतस्तदा ॥

स्वल्पमात्रा प्रभूता वा येन वा तुष्टि गच्छति ।
कायजीवितहेत्वर्थं चित्त नेह यथा पित ॥

तथैव शिष्यो धर्मज्ञा आचार्याय ?? ?रम् ।
प्राप्नुयाद् यश रिद्धि आयुरारोग्यमेव तु ॥
पुष्कल गतिमाप्नोति शिष्यो पूज्यस्तु त गुरुम् ।
म त्रास्तस्य च सिध्यति त्रिविमागापन्शनात् ॥
सेवनाद भजनाद् तेषां मानना पूजनादपि ।
तुष्यन्त सर्वबुद्धास्त तथैव जिनवरात्मजा ॥
सर्व देवास्तु तुष्यन्ते सत्क्रिया तु गुरो सदा ।
एतत् कथित सर्व गुरूणा म त्रदर्शिनाम् ॥
समयानुप्रवेशिनां पूर्व प्रथम वा सावकेन तु ।
जनो वा तत्समा वापि उत्कृष्टो वा भवेद् यदि ॥
?ारमन्यो गुरुनित्य मेवाद्वा अधिकोऽपि वा ।
तेनापि तस्य त देवोऽस्मि उपदेश सदा तु वै ॥
कर्तव्यो मन्त्रेसिद्धस्म यथामत्त्वानुदर्शिते ।
न मत्सरा भवत् तत्र शिष्येऽस्मि पूर्वेनिर्मिते ॥
?ागानुवर्तिनी ?भु गुर्वीताप्रान्हितानाम् ।
तमेव कुर्यान्छिष्यत्व आचार्या शिष्येतर ॥
अ यान्यानुवर्तिनी यत्र स्नेहसन्ततिमानिनी ।
स्निग्धसन्तानानुवरा नु मन्त्र दद्यात्तु तत्र वे ॥
आचार्या शिष्यमेव तु शिष्यो वा गुरुदर्शने ।
उत्सुको भवत नित्या साध्वमयागत उभौ ॥
तया नित्य तु मार्गे वे मन्त्रचर्यानुदर्शने ।
सफलानुवर्तनो मन्त्रज्ञो उभया विपुलगो ॥
धृतिं तुष्टिं च लेभे तो तथा शिष्य गुरु' सदा ।
रक्षणीया प्रयत्नेन पुत्रा धर्मवत्सलः सदा ॥
अव्यवच्छेदनुद्धाना धर्मता भवति तेषु वै ।
तदभावे ह्यनाथानां दद्यान्मन्त्रं यथोदितम् ॥

लक्ष जपेत् । पत्रमुत्रिक यन्त्र कर्त्तव्यम् । त वज्रमध्ये सिद्धार्थकमध्ये स्थाप्य न द्रष्टव्ये न स्पृष्टे स्थाप्यम् । [illegible] चिराया [illegible] , भवति । त [illegible] यन्त्रेण गृहीतेन सर्वकर्माणि करोति । पर्वतशिखराणि चूर्णयति । नागहृदं शोषयति । नदीं प्रतिस्रोतं यति । नागां विद्रापयति । विषाणि निर्विषीकरोति । सर्वे प्राणिन स्तम्भयति । पातयति । पातयति । यन्त्राणि चूर्णयति । शकटप्रभृ तीनि च स्तम्भयति । चूर्णयति । एवमादीनि सर्वकर्माणि करोति । एष पञ्चमुत्रिकस्य यन्त्रस्य साधनम् ॥

उष्णीषचक्रवर्त्तिन साधयतो न कश्चिच्छक्नोति विघ्न कर्तुम् । साक्षात् [illegible] पि हि विधिना नाविधिना । अस्य च जापकाले सतत बुद्धलोचनां पूर्वं पश्चात् जप्तव्यम् । एव सौम्य [illegible] भवति । सिद्धिस्या भिमुखीभवति ॥

अथ समुद्रगामिना नदीमवतीर्य पद्मानां लक्ष निवेदयेत् । श्री आगत्य वर प्रयच्छति । राज्य ददाति । अथ त्रीणि लक्षाणि निवेद येत् । सार्वभौमिको राजा भवति । जम्बूद्वीपाधिपतिर्भवति । विवरस्या ग्रतः पट प्रतिष्ठाप्य लक्षाणि त्रीणि जपेत् । सर्वयन्त्राणि पतन्ति । निर्विशङ्केन प्रवेष्टव्यम् । प्रविश्य रसरसायन नि [illegible] ाशयति । अथ त त्रैव तिष्ठति वैष्णवचक्रभयमुत्पद्यते । अथ प्रविशति अनुस्मरितमात्रे ण भस्मीभवति । मनमेव उत्थापयति । न कदाचिदपि प्रविशति तस्मिन् ॥

शुक्लप्रतिपदमारभ्य त्रि काल जातीकुसुमे' सकृज्जप्तेन भगवता पादाङ्गुष्ठे ताडयितव्यम् । यावत् पादाङ्गुष्ठाद् रश्मिर्निश्चरति । साधक शरीरेऽन्तर्द्धीयति । तत्क्षणादेवाकुञ्चितकुण्डलकेशो भवति । सपरि वार उत्पतति । विद्याधरराजा भवति कल्पस्थायी ॥

अथ समुद्रतटे पश्चान्मुख पट प्रतिष्ठाप्य नागकाष्ठै' अग्नि प्रज्वाल्य समुद्रस्योद्दिश्य नागपुष्पाणां लक्ष जुहुयात् । समुद्रे ऊर्मय आगच्छ न्ति । सिद्धिनिमित्त न भेतव्यम् । तावद् यावत् समुद्रो ब्राह्मणवेषे णागच्छति । ब्रवीति किं मया कर्त्तव्यम् । वक्तव्यम । वश्यो मे भव । ततो यदुच्यते तत सर्वं करोति ॥

पर्श भूम्यां [illegible] पेत् । भूमि भित्त्वा उत्तिष्ठते । सहस्रपरिवार उत्पाते महाकल्पस्थायी विद्याधरराजा भवति । अपरिप श्वासी नेजेन पञ्च याजनानि अव भासयति ॥

प्रातिहारकपक्षे जातीपुष्पाणां भगवा उष्णीषराजस्याेपरि लक्ष निवेदयेत् । एकैक जप्तव्यम् । तादृ गात्रहुष्णापाद रश्मि निश्च रति । साधकस्य शरीरेऽन्तर्धीयते । तत्क्षणादेव पञ्चाभिज्ञा भवति । दशलक्षजप्त यथा यथा प्रयुज्यति तथा तथा अनेनैव भगवता सार्द्धं यदि विद्या जप्यते सा नियतमागच्छति । सान्निध्य जप्यमाना यदि न वागच्छति स मूर्द्धा स्फुटति । [illegible] ॥

अयं च एकाक्षर उष्णीषचक्रवर्ती तथागत एव साक्षात् काऽ य सदेवके लोके सर्वमन्त्रविद्यानां राजा तथागत एव । सितातपत्रतेजो राशिप्रमुखानि अस्य परिवार । सर्वेषामुष्णीषराजानाम् । साधन विधान सर्वं अत्रैव याज्यम् । सर्वे च उष्णीषराजा अनेन साध्या । उत्तमसाधन इच्छता अस्थानेन योज्यम् । यदि युज्यति उत्तमा सि द्धिर्न भवति । सक्षेपत सर्वे देवा अनेनाकृष्य त । अथ निधानमु द्घाटयति । यत्र निधान तिष्ठति तत्र गत्वा अकालकलश गृह्य सर्व गन्धैर्लिप्य श्वेतच न्दनोदक कुम्भे प्रक्षिप्य अष्टसहस्राभिमन्त्रित कृत्वा निधान स्थापयत् । यावद् निधानं तिष्ठति तदा स भूमि स्फुटति । यदि निधान पुरुषमात्रे तिष्ठति उदकेन स्प्रष्टव्यम् । हस्तमात्रं खत्वा ग्रहेतव्य ॥

अथ सिंह साधयितुकाम वल्मीकमृत्तिकया कृत्वा गोरोच नया समालभ्य पिण्डिकायां प्रतिष्ठाप्य उदारां पूजा कृत्वा ताव ज्जपेद् यावज्ज्वलति । ज्वलितेन सिद्धा भवति । पृष्ठमारुह्य आकुञ्चितकु ण्डलकेशः आत्मपञ्चमा पतति । ब्रह्मायुषा नवनवतिसहस्राणि जीवति । सर्वविद्याधराणामागम्य ॥

एवं हस्त्यश्वमहिषश्च साधयितव्या । यदा सिंहनाद नदति तदा देवा आसनभ्यश्चरति ॥

पगगर गत्वा पगानां ज । निवेदयत । गागन्यगाग्य गनिल भत । गकरगगागरविरानां लक्ष जुहुयात् । गगोकग्या जग । । जातीपुष्पाणां लक्ष समुद्रगामि यां नद्या प्रवाहयेत् कन्या लभत यामिच्छति । सर्वे ते उत्तमसाधनानि सिद्ध्यन्ति ॥

अननारणीपगनवर्तिना स यत्र गच्छति इन्द्रोऽप्यस्यासन द दाति । म । । देवराजान दूरादेव दृष्ट्वा भीता त्रस्ता भवन्ति । सर्वेषां च देवराजानां प्रभा प्रभा व्यामीकरोति । योजनशताभ्य तरेण करोति ॥

अथ चक्रवर्ती तथागत एष त्रैलोके सर्वं च कल्पस्य भग वत' स्वर्णीपचक्रवर्तिन एकाक्षरस्य वशे वर्तन्ति । तन्निम्नाश्च सर्वे म त्रत त्रा सकल्पका सविस्तरा इत्याह भगवा शाक्यमुनि' सिंहो नरोत्तम इति ॥

ार्यम ञ्जुश्रियमूलक पाद् बोधिसत्त्वपिटकावतस

का द् महायानवैपुल्यसूत्रात् चतुर्विंशतिम

एका ।र ।वर्तिकर्मविधान

निर्देशपटलविसर

परिसमाप्त इति ॥

---

मसप्तत्रिंशतितम पटलविसरः ।

अथ भगवां शाक्यमुनि' पुनरपि शुद्धावासभवनमवलोक्य तत्रस्थांश्च देवसङ्घां सर्वांश्च बुद्धान्महसत्त्वा श्च येस्तत्रद्भासयश्चावर्क्रा पुनरपि मञ्जुश्रिय कुमारभूतमाम त्रयते स्म । निर्दिष्टास्य मञ्जुश्री ! सर्वतथागतानां सर्वस्वभूत अमेकोश चिन्तामणिप्रतिप्रभस्य लोकानामा शयसफलीकरणार्थं तस्मिं काले युगान्ते च ये बुद्धक्षेत्रे परिनिर्वृतानां तथागतानां सद्धर्मनेत्री अ तद्धनिकालसमय तस्मि काले तस्मि समये सर्वतथागतानां मन्त्रकोशसरक्षणार्थं त्वन्नीयकुमारमन्त्रत त्राणां कल्प राजेऽस्मि निधानभूतो भविष्यति । जप्यमाना विधिना सारभू तोऽय मञ्जुश्रीः ! सर्वतथागतमन्त्राणां त्वन्नीये च कुमारकल्प राजेऽग्रभूतो भविष्यत्यय एकाक्षरचक्रवर्ती । अनेन जप्यमानेन सर्वे ताथागता विद्याराजान जप्ता भवति ॥

अपरमपि मञ्जुश्री ! त्वन्नीयकल्पराजे निधानभूत सारभूत अ ग्रभूत ज्येष्ठभूतमेकाक्षर पूर्वमाख्यात् । अतीते काले अतीते समये द्वाष ष्टिगङ्गानदीसिकतप्रख्ये कल्पे अमितायुज्ञानविनिश्चयराज द्रो नाम तथागतोऽर्हन् सम्यक सम्बुद्ध विद्याचरणसम्पन्न सुगतो लोकविदनु त्तर पुरुषदम्यसारथि शास्ता देवमनुष्याणां बुद्धो भगवा । यस्य स्म रणादेव नामग्रहणमात्रेण पञ्चानन्तर्याणि क्षय गच्छति । नियत बोधिपरायणा बहव सत्त्वा ये नाममात्र श्रावयन्ते । क पुनर्वादो ये मन्त्रसिद्धये । अवश्य च सर्वमन्त्रजापिभि अय भगवानमितायुज्ञान विनि श्चयराजा तथागत नमस्का पूजा मानस्य कर्तव्य । वाचा च वक्तव्या 'नमस्तस्मे भगवत अमितायुज्ञानविनिश्चयराजेन्द्राय तथाग तायार्हते सम्यक् सम्बुद्धाय' ॥

ततोऽमिताभ रत्नकेतु नत सर्वबुद्धानां प्रणाम कृत्वा यथे प्सित म त्रा जप्तव्या । आशु सिद्धि प्रयच्छन्ति । यत् कारण महापु ण्याभिवृद्धये मन्त्राणां तथागतानां सञ्ज्ञापरिकीर्तन नमस्कार च सर्वत थागतानां च प्रमाण नियत बोधिपरायणोऽय कुशलसम्भारपरिपूरितो भवति । बोधिसत्त्वसहृद्य गच्छति । मन्त्रा च तस्य आशु सिद्धिं प्रय

न्छन्ति । अमितायुर्ज्ञानविनिश्चयराजेन्द्रेण तथागतेनार्हता सम्यक् सम्बुद्धेन अयमकाक्षरमन्त्र सर्वतथागतहृदय सर्वमन्त्रतन्त्राभिमत सर्वकर्मार्थसाधक मञ्जुघोष! त्वदीये कल्पराजे परमरहस्य परमगु ह्यतमं लोकहितार्थाय मयाख्यातम् ।

अशिष्ये चापि अधार्मिके
अप्रसन्ने तथा शास्तु शासनेऽस्मिन् जिनोदिते ।
दुष्ट मानिने चापि शास्तु शासनच्छिद्रिणे ॥

न कथञ्चित् प्रयोक्तव्य अप्रसन्ने जिनसूनुनाम् ।
आचार्ये खड्गिणाश्चापि पूजानुग्रहमक्षमे ॥

न तस्य दद्य मन्त्र वै सिद्धिस्तस्य न दृश्यते ।
श्राद्ध सौम्यचित्तश्च प्रसन्नो जिनशासने ॥

बोधिसत्त्वो तथा नित्य पूजानुग्रहतत्पर' ।
तस्य सिद्धिर्भवेन्मन्त्रे इह कल्प मयोदिते ॥

एकाक्षरे महामन्त्रे मञ्जुघोषनियोजिते ।
तेनासील्लोकनाथेन मन्त्र दत्त सुखावहम् ॥

हृदय सर्वबुद्धानां सर्वमन्त्राणां च उत्तम ।
पद्मसम्भव तथा कोश्च पुरा गीत स्वयम्भुना ॥

मन्त्राणां श्रेयसार्थाय देहिनां पापमोहिनाम् ।
सर्वेऽस्त गता मन्त्रा शास्तुबिम्ब समाश्रिता ॥

तेषु सारभूतोऽय विद्याराजा महर्द्धिक' ।
एक अक्षरविन्यस्ता शाश्वतोऽय प्रवर्त्तते ॥

स्थितैषा धर्मकोटिस्थ बुद्धानां तु जगद्धिताम् ।
धर्मनेत्र्या समाश्रित्य स्थितोऽयमेकमक्षर ॥

सर्वार्थसाधको मन्त्र दुष्टराज्ञां निवारक' ।
करोति कर्मवैचित्र्य सर्वकर्मप्रसाधक ॥

साष्टं कर्मसहस्र च कुरुते च ध्रुव तथा ।
विचित्रां सम्पद दद्याद् विधिदृष्टेन कर्मणा ॥

मञ्जुश्रियस्य हृदयोऽयं मकारो मन्त्रमयुत ।
उकारगतिर्नित्यश्च आशीलोके प्रवर्ति ॥
अमितायुर्ज्ञानराजेन विनिश्चितार्थं प्रकाशित ।
मञ्जुघोषस्य पुत्रेन मद्रताज्य यशहतु ॥ ॥
त इम युगा तके लोके शास्तरि परिनिर्वृते ।
सिद्धिं च यास्यते क्षिप्र विधिन्प्रेन कर्मणा ॥
अमितायुर्नाम आसीत् बुद्धक्षेत्रविकल्पितम् ।
तत्रासौ भगवा बुद्ध धर्मचक्रप्रवर्तक ॥
तिष्ठत्यपरिमिता कल्पा आयुर्वमितगाधष्ठित ।
अत एव तस्य सञ्ज्ञाभूत्मितायुर्ज्ञानविनिश्चय ॥
राजेन्द्र सर्वलोकानां महर्द्धिकाऽय तथागत ।
स दष्टु मन्त्रवर मुख्य बुद्धपुत्रस्य धीमते ॥
ज्येष्ठ तनयमुख्यस्य महास्थाने महर्द्धिके ।
ततस्तेन सुतेनैतत् सम भद्रस्य यान्तिम् ॥
ततस्त बुद्धपुत्र वै मञ्जुघोषस्य दत्तवा ।
अधुनाह तथागता लगकल्पमस्य मुनीरयेत् ॥
इद तन्मन्त्रमुख्य वै भगवानेर भाषितम् ।
श्रेयसार्थं तु भूतानां गाणा म नमनोन ॥

नमोऽमितायुर्ज्ञानविनिश्चयराजेन्द्राय तथागतायार्हते सम्यक्सम्बुद्धा नम सर्वबुद्धानां शान्द्रराजगमनायुरमितायुरत्नकेतुप्रभृतीनाम् । एभ्यो नमस्कृत्वा इमाय मन्त्रा जगान्यमेकाक्षरम् । कतम च तत् । ॐ ॥

एष स मापो! अमितायुर्ज्ञानविनिश्चयराजेन्द्रेण तथागतेनार्हता सम्यक् सम्बुद्धेन भाषितम् । अमितब्युहवत्यां लोकधातौ स्थितेन सर्वसत्त्वानामर्थाय हिताय सुखाय लोकानुकम्पाये महतो जनस्यार्थाय अनागतानां च जनतामवेक्ष्य शासनान्तर्द्धानकालसमय विदित्वा अन्ते युगाधमे रत्नत्रयापकारिणां दुष्टराज्ञां निवारणार्थं ज्येष्ठमौरस पुत्र

सर्वतथागतानां महास्थामप्राप्ताय बोधिसत्त्वाय महासत्त्वाय दत्तवां। बुद्धाधिष्ठानेन समन्तभद्रस्य दत्तवां । समन्तभद्रो बोधिसत्त्वो महासत्त्व मञ्जुश्रियस्य कुमारभूतस्य दत्तवां। ततो मञ्जुश्रियेण कुमारभूतेन सर्वसत्त्वानामनुग्रहार्थं महाकरुणावशेन हृदयस्थः स्वमूर्त्तौ स्थापितवां। अनागतकालमपेक्ष्य युगाधमे शासनान्तर्द्धानकालसमये अहमपश्चिमकस्तथागतः दुष्टे काले कलौ युगे मम शासनसंरक्षणार्थं करिष्यत्यय मन्त्रवर ॥

अस्य कल्प वक्ष्ये समागत । शृणु कुमार! मञ्जुस्वर! सुस्वर! तवैतन्माहात्म्य कल्पविस्तरम् । अस्य कल्पराजेन्द्रस्य सविस्तरतरं वक्ष्ये॥

आदौ तावत् पर्वताग्रमारुह्य त्रिशल्लक्षाणि जपेत् । पूर्वसेवा कृता भवति । क्षीराहारेण मौनिना नान्यत्र मन्त्रगतचित्तेन त्रिशरणपरिगृहीतेन उत्पादितबोधिचित्तेन च मोपधशीलसंवरसमादापनाबोधिसत्त्वसंवरसंवरपरिगृहीतेन जप्तव्यम्। तत कर्माणि भवन्ति। आदौ तावत् पटं लिखापयितव्यम्। उपोपधिकेन चित्रकरेण अश्लपकैर्णै अन्यतरेण शुचिना चेलखण्डेन पट्टके वा चन्दनकर्पूरकुङ्कुमपर्युषितेन शुचौ देशे शुचिना चित्रकरेण त्रिशुक्लभोजिना शुचिवस्त्रप्रावृतेन आदित्योदयकालपरिपूर्णपञ्चदश्यां विशुद्धनक्षत्रेण लिखापयितव्य यावन्मध्याह्नम्। परतो वर्जयेत्। एव दितमे दिवसे यावत् परिसमाप्त इति॥

आदौ तावत् पटस्य अमितायुर्वर्तीं लोकधातुमालिखेत्। हस्तमात्रे पटे सुगतवितस्तिचतुरश्रे पट्टके वा समन्तादमितायुर्वर्तीं लोकधातु समन्तात् पद्मरागेन्द्रनीलस्फटिकमरकतपर्वतैरधस्तात् उपशोभित उपरिष्टाच्च तेषां महारत्नविमानोपशोभिताकार ध्वजपताकोपशोभितोच्छ्रिताकार तत्र मध्ये रत्नसिंहासनोपविष्टममितायुर्विनिश्चयराजेन्द्रं तथागत धर्म देशयमानं समन्तप्रभाज्वालामालिन ईषद्रक्तावदातं वा सपार्श्वेरत्नोपलनिषण्ण महास्थामप्राप्त बोधिसत्त्व महासत्त्व चामरव्यग्रहस्तं तथागतदृष्टिं वामहस्तबीजपूर्णकफलन्यस्त प्रियङ्गुश्यामावदातं

सर्वालङ्कारालङ्कृतशरीर सम तज्वाल दक्षिणपार्श्वे भगवन्तं समन्तभद्र बोधिसत्त्व महासत्त्वं रत्नोपलस्थित चामरव्यग्रहस्त उद्धूयमानसित विन्यस्तपाणिं वामहस्तेन रत्नपाणिसर्वालङ्काररत्नमकुटविच्छुरितमि यङ्गुश्यामावदात नीलपट्टचलनिकानिवस्त मुक्ताहाररत्नयज्ञो पवीत समन्तज्वालामालावबद्ध, तस्य दक्षिणपार्श्वे आर्यमञ्जुश्रियं रत्नोपलस्थितकं कुमारभूत पञ्चचीरकोपशोभित शिर बालदारकाल ङ्कारालङ्कृत कनकवर्ण नीलपट्टचलनिकानिवस्त मुक्तावलीरत्नव्य तिमिश्र यज्ञोपवीत तथागतदृष्टिं ईषत्प्रहसितवदन सौम्याकार चारु- रूप कृताञ्जलिपुट सर्वाकारवरोपेतं लिखापयितव्यम् । तस्याधस्ताद् यथा चे लिङ्ग वेषी सस्थानधारी साधक: पद्ममालां गृह्य जानुकोर्प रसस्थित: अवनतशिर: पटकोणा तन्देशे लिखापयितव्य: । भगवत उपरिष्टाच्चत्वारो बुद्धा, भगवन्त लिखापयितव्य । दक्षिणोद्देशे द्वौ अ मिताभ: पुण्याभश्च । वामपार्श्वे उपरिष्टाद् द्वौ तथागतौ अभिलिखापयि तव्यौ सालेन्द्रराजा रत्नकेतुश्च । सम तप्रभा सम तज्वाला कनकवर्णा: सर्वाकारवरोपेता सर्वपुष्पाभिकीर्णा निषण्णा पद्मासनेष्वेव ना यासनेषु धर्म देशयमाना: पर्यङ्कोपविष्टा' सौम्याकारा भगवत' उपरिष्टात् पुष्प वर्षं प्रवर्षयमान मेघा तर्गतलीन तथागतविग्रहमुत्पतमान मुनेन्द्रनामा अभिलिखापयितव्य: । सर्वाकारवरापेतं समन्तप्रभाज्वालामालिन द क्षिणहस्तेन वरप्रद वामहस्तेन चीवरकर्णगाग्रसक्तम् ॥

एतद् भगवत अमितायुर्ज्ञानविनिश्चयराज द्रस्य तथागतस्या र्हत: सम्यक्सम्बुद्धस्य पटविधानम् । एतस्यैव भगवत अयमेकाक्षरो मन्त्र । उष्णीषराजाऽय उष्णीषचक्रवर्ती प्रतिस्पर्द्धी समतुल्यवीर्य: तुल्यप्रभाव' । अचिन्त्यमस्य गुणविस्तारप्रभाव महर्द्धिकोऽय महानु भाव । सक्षेपत सर्वतथागतोष्णीषराजान महाचक्रवर्तिनमेकाक्षरस्य च यानि कल्पविस्तराणि उक्तानि तानि सर्वाणि करोति । असाधि तोऽपि जप्तमात्र कर्माणि कुरुते । न पुनर्याद साधित: । यथष्टफल- सम्पदां ददाति । ईप्सित भवति । मनसा यदभिरुचित अस्य पटस्य दर्शनादेव नियत बोधिपरायणो भवति ॥

तस्यैव भगवत अमितायुर्ज्ञानविनि रयराजे द्रष्याधिष्ठानेन सर्वतथागतहृदय इत्युच्यते सर्वतथागत उष्णीषराजमित्युच्यते । च क्रवर्ति इत्युच्यते । महाचक्रवर्तिराज इत्युच्यते । मञ्जुश्रिय कुमार भूतस्य हृदय इ युच्यते । एकाक्षर इ यु-यते । सक्षेपत अचि त्यमस्य प्रभाव' । अचिन्त्या हि बुद्धानामधिष्ठान । अचि त्य बुद्धविकुर्वितम् । असाधितोऽपि अकृतपुरश्चरणोऽपि सर्वगृहारम्भप्रतिष्ठितोऽपि सर्वभ क्षमन्त्रमांसग्राम्यधर्मप्रतिषेविणोऽपि वर्जयित्वा अश्राद्धस्य अनुत्पादित बोधिचित्तस्य । एतेषां नास्ति सिद्धि । रत्नत्रयोपकारिणां तत्प्रति यत्नोपघातिनां च । एतेषां क्षुद्रकर्मापि न सिद्ध्यन्ति । क पुनर्वादो मध्यमोत्तमा सिद्धि । सर्वकामप्रचारभक्ताचारप्रचारस्य साधिकाष्ट कर्मसहस्र क्षुद्रकर्मप्रयुक्तस्य सिद्ध्यन्ते । कतमे च ते ॥

आदौ तावदेकजप्त आत्मरक्षा । द्विजप्त' पररक्षा । त्रिजप्ता म हारक्षा भवति । महाबोधिसत्त्वेनापि दशभूमिप्रतिष्ठितेन न शक्यते सक्षोभयितुम् । क' पुनर्वाद तदन्यै सत्त्वै । पञ्चरङ्गिकेण सूत्रेण चतुर्जप्तेन कट्यां वेष्टयेत् । शुक्रबन्ध कृतो भवति । स्वप्नोपघात चास्य न भवेत् । वर्जयित्वा तु स्वेच्छया तदह एव रात्र्यामेको यदि रोचते दिने दिने कर्त-य. । अथ न रोचते शरम सप्ताभिम न्त्रित कृत्वा नाभिदेश स्पृशेत् । त्रिसप्ताह शुक्रबन्ध' कृतो भवति । पञ्चजप्तो बुद्ध भगवन्त ध्यात्वा य स्पृशेत् स वश्यो भवति । च न्द्रग्रहे शशिग्रहे शशिमण्डले अर्ककाष्ठैरग्निं प्रज्वाल्य विनापि पटेन पूर्वाभिमुखः आज्याहुतीनां दशसहस्राणि जुहुयात् । राजकुलसमीपे निम्नगानान्तरिते देवायतने वा नान्तरित यस्मि देशे राजा ति ष्ठति तत्र समीपे होमकर्म प्रयोक्तव्य । प्रभाते राजा वश्यो भवति । यदुच्यते तत् सर्व करोति । यदा न पश्यते तदा तस्य चित्त न्यस्त वति । मान्द्यो वा भवति । चित्तविक्षेपतां प्रतिपद्यते । भूयो प्रत्या यन कर्तव्यम् । क्षीराहुतीनामष्टसहस्र जुहुयात् । यत्र वा तत्र वा काले । ततः प्रभृति स्वस्थो भवति । एतत् कर्म श्राद्धानां रत्नत्रयप्रसन्नानां उत्पादितबोधिचित्तानां न कर्तव्यम् । यदि करोति महान्ततर अपु

व्यस्कन्धं प्रसन्नुयात् । अन्येषामपकारिण कर्तव्यम् । दुष्टचित्तानां रौद्रचित्तानां दिनेदिने दर्शन च दातव्यम् । सौम्यचित्ता भवन्ति । यदि न भवन्ति महता भयेन वियुज्यन्ते । प्राणान्तिका भवन्ति ॥

पुनरपि कर्म भवति । चन्द्रग्रहे पलाशसमिद्भिरग्निं प्रज्वाल्य घृताहुतीनामष्टसहस्रं जुहुयात् । प्रभाते देशस्वामी राजा भवति मन्त्रापयति मन्त्रितव्यम् । सद्भावमुपदर्शयते । उपदष्टव्य षण्मासाभ्यन्तरेण सहस्रपिण्ड ग्रामं ददाति । यद्यर्द्धरात्रं जुहोति त्रिभिर्मासै । यदि सर्वयामिक रात्रिं जुहोति मासेनैकेन लभते । यदि मास जुहोति राज्या राज्यां विषय प्रतिलभते । विषयप्रतितुल्य वा ग्राम अन्य वा यत् किञ्चिद् वित्तम् । अरयो न प्रभवन्ति । यदि सम्प्रभवन्ति पुनरपि कर्म भवति ॥

चन्द्रग्रहे अपामार्गकाष्ठैरग्निं प्रज्वाल्य पलाशसमिधानां ब्राह्मणारे दधिमधुघृताक्तानां अष्टसहस्रं जुहुयात् । अन्ते पिचुमन्दपत्राणां कटुतैलाक्तानां आहुतिमष्टसहस्रं जुहुयात् । प्रभाते सौम्या ब्राह्मणा राजा विद्विष्टो भवति ॥

अपरमपि कर्म भवति । चन्द्रग्रहे यथोपपन्नकाष्ठैरग्निं प्रज्वाल्य घृताहुतीनामष्टसहस्रं जुहुयात् । होमान्ते च यस्यां दिशि प्रभुस्तिष्ठति तस्यां दिशि तद् भस्म क्षिपेत् । स वश्या भवति । य वा त वा यस्मिं वा तस्मिं वा काले रोचते भोगां विस्तरते साहाय्यतां च प्रतिपद्यते । स्वल्पमल्प वा महान्तं वा ग्राममनुप्रयच्छति विषयं वा । अमोघा च सिद्धिर्भवति षड्भिर्मासै नियतम् ॥

अथ क्रुद्धचित्तश्चतुर्वर्ण्या अन्यतर विकृतस्थाने वा यातो विकृष्टप्रधानलिङ्गेन वा अन्यदेवताभक्तं लौकिकेषु यस्मिं दिशि ते तिष्ठन्ति तदेव वेश्म सोऽस्य देशान्तरं प्रक्रमते । उद्विग्नश्च भवति । रात्रौ प्रपलायते वा । कुटुम्ब वास्य भिद्यते । प्रत्यायन क्षीराष्टसहस्राहुतयो होतव्य । स्वस्थो भवति ॥

अपरमपि कर्म भवति । चन्द्रग्रहे तेनैव विधिना बुद्धबोधिसत्त्वप्रतिमापटस्य वा सद्धर्मपुस्तके वा सधातुकगर्भचैत्ये वा शुचिना

शुचिवस्त्रप्रावृतेन अहोरात्रोषितेन निष्प्राणकेनोदकेन कर्म कर्त्तव्यम्। शुक्लपुष्पैः सुगन्धैः च दनकुङ्कुमपरिपूर्ण कर्पूरधूपधूपितान्शतं कुर्यात्। यत्र कर्म प्रयुज्यते ब्राह्मणार्थे पलाशकाष्ठे क्षत्रियार्थे च अश्वत्थकाष्ठ वैश्यार्थे खदिरकाष्ठ शूद्रार्थेऽपामार्ग ये काष्ठे अग्निं प्रज्वाल्य तदेव कर्म कुर्यात्। ब्राह्मणस्य पलाशसमिध क्षत्रियस्याश्वत्थसमिध वैश्यस्य खादिरसमिध शूद्रस्य अपामार्गसमिध तद यैर्वा यथालब्धे राज्यहोमान्ते कुर्यात्। कर्म तथैव महाराज्ञा अपराजितमूलसमिध जुहुयात्। अष्टसहस्र घृताहुतीना अष्टसहस्र अन्ते च तस्यां तदेव भस्म क्षिपेत्। यस्या दिशि महाराजा तिष्ठति। दुष्टचित्त आगच्छति वा उष्णीषचक्रवर्त्ती एकाक्षरमुद्रा बध्वा क्षिपेत्। उत्पलमुद्र वा स वित्रस्तो निवर्त्तति। भग्नचक्रा वा भवति। अन्यद् वा यत्किञ्चिन्महोत्पात भवति। महोपसर्गे चित्तदोस्थित्य येन वाचास्य निवर्त्तते॥

एतानि वा पराणि च यथेष्टानि कर्माणि भवन्ति। वस्त्रमभिमन्त्र्य प्रावरेत्। सुभगो भवति। अक्षिण्यभिमन्त्र्य अञ्जयेत्। सर्वजनप्रियो भवति। सप्ताभिमन्त्रित कुर्यात्। अक्षिणी मुख च सर्वत कृत्वा क्रुद्धस्य मुख निरीक्षयेत्। स वश्या भवति। साम्यश्च पुष्पफल अन्य वा यत्किञ्च सगन्ध सप्ताभिमन्त्रि कृत्वा राज्ञो निवेदयेत्। स चिप्रीतमात्रेण वश्यो भवति। अन्यो वा य कश्चित् सत्त्व स दर्शनमात्रेणैव वश्यो भवति। सर्वाङ्गशूलेषु अष्टशतमभिमन्त्रित कृत्वा उष्णवारिणा स्नायीत। स्वस्थो भवति॥

एतानि कर्माणि कुर्यात् दुःखितेभ्य सत्त्वेभ्य।
अनाथे पतिते क्षीणे व्रतिने चह शासने॥
रत्नत्रयप्रसन्नेन कुर्यात् तत् कर्म ईदृशम्।
स्त्रीषु कर्म न कुर्याद् वै बालवृद्धे तथातुरे॥
दरिद्रे दुःखित चापि अल्पसत्त्वे वियोनिजे।
न कुर्यात् कर्ममन्त्र तु महासत्त्व प्रयोजयेत्॥
शूरे साहसिके लुब्धे महापक्षे महाधने।
अतिमानिने प्रचण्डे च कुर्यात् कर्म ईदृशम्॥

शासनद्वेषिणे क्षुद्रे परद्रव्यापहारिणे ।
अश्राद्धे सर्वमन्त्राणां ओषधीनां च योगिनाम् ॥
प्रगल्भे दुष्टचित्ते च नृपे लोककुत्सिते ।
एतेषु कर्म प्रयुञ्जीत धार्मिकेषु विवर्जितम् ॥
अपर कर्ममित्याहु बुद्धैस्तत् परिवर्जितम् ।
तदेव भस्म क्रुद्धा वै या दिश क्षिपते जपी ॥
तत्रस्था अरय क्रुद्धा नृपतिश्चापि नश्यते ।
दीर्घग्ला यतां याति तेऽपि जना ध्रुवम् ॥
महामार्योपसर्गं च तस्मि देशे तु दृश्यत ।
न कुर्यात् कर्म एव तु स कृच्छ्रपतिताऽपि हि ॥
त्रिसप्ताहाद् विनश्य ते सर्वे तत्र जनाधिपाः ।
यावत् तत्कर्मणा पूर्ण द्विसप्ताहा तु सद्गेत् ॥
प्रथमे चित्तविक्षेप द्विसप्ताहे तु ग्ला यताम् ।
तृसप्ताहे तथा मृत्यु तस्मात् त परिवर्जयेत् ॥
प्रथमे विद्रव ते ते द्वितीये देशविभ्रमम् ।
त्रिसप्ताहे तथा नाश न कुर्यात् कर्म ईदृशम् ॥
केवल सत्त्ववेनया निर्दिष्ट लोकनायकै ।
न भृश सम्पद ह्येते बुद्धा ते शुद्धमानसा ॥
प्राणापरोधिन कर्म सर्वबुद्धैस्तु गर्हितम् ।
न कुर्यात्तजपी कर्म उत्तम सिद्धिमिच्छता ॥
नरकोपपत्ति कामेषु यतोऽनेव प्रदृश्यते ।
केवलं तु इद प्रोक्त कारणशुभकर्मफलोदयम् ॥
कर्मवैचित्र्यमाहात्म्य यथा दृष्ट द्विपदोत्तमे ।
शक्त शुभोदय नित्य कारण चास्य शुभप्रदम् ॥
व्यतिमिश्र तथा कर्म व्यतिमिश्रं तु पठ्यते ।
तथर्द्ध कर्मवैचित्र्य दर्शित तत्त्वदर्शिभि ॥

तां जापी वर्जयेत् क्रूरं व्यतिमिश्रं कर्म एव वा ।
शान्तं भजेत कल्याणं शुभकर्मफलोदयम् ॥
प्राणोपरोधान्नरकं तु जापी याति पुनः पुनः ।
तन्निवृत्तेस्तथा धर्मं अहिंसः कर्ममुत्तमम् ॥
स्वर्गं तथा सिद्धिः मन्त्राणां च शुभा गतिः ।
प्राप्यते सुकृतं कर्म विरुद्धैर्विरुद्धमुच्यते ॥
धर्माधर्मं मया प्रोक्तं सर्वज्ञत्वं विचेष्टितम् ।
शुभकर्मसदाजापी आरभेत् सिद्धिलिप्सया ॥
मन्त्रा तस्य सिद्ध्यन्ते जापिनस्य शुभे स्थिते ।
[illegible] सुकर्मपरायणे ॥
मन्त्रिणे श्रेयसा सिद्धिः प्रवदन्ति तथागताः ।
विनयार्थं तु सत्त्वानां कर्मवैचित्र्यमुच्यते ॥
यथेष्टं महत्कर्म तु साधिकाष्ट च सिद्ध्यते ।
क्षुद्रकर्म प्रकुर्वीत उत्तमं तु न लभ्यते ॥
मध्यमं सिद्ध्यते किञ्चिद् यत्नाज्जापहोमितम् ।
अधमं सिद्ध्यते क्षिप्रं विधिदृष्टेन कर्मणा ॥
त्रिविधं कर्म निर्दिष्टं उत्तमाधममध्यमाः ।
उत्कृष्टरूपी तपस्वी च लभते उत्तमं तथा ॥
मध्यजापी तथा मध्यं कर्मसिद्धिमवाप्नुयात् ।
स्वल्पजापी तथा नित्यं स्वल्पकर्मसमावृत ॥
लभते क्षुद्रसिद्धिं तु नान्यसिद्धिमवाप्नुयात् ।
कालप्रमाणजापस्तु होमे दृष्टस्तथा पुनः ॥
अधिकादधिकं सिद्धिं मध्यमध्येषु दृश्यते ।
स्तोकं स्तोकतरं कर्म लभ्यते क्षुद्रसिद्धिरिति ॥

आर्यमञ्जुश्रियमूलकल्पाद् बोधिसत्त्वपिटकावतंसकात्
महायानवैपुल्यसूत्रात् पञ्चत्रिंशतिमः
एकाक्षरमूलमन्त्र आर्यमञ्जुश्री
हृदयकल्पपटविधाननिरारः
परिसमाप्त इति ॥

## अथ अष्टाविंशतितम पटलविसर ।

अथ भगवां शाक्यमुनि' पुनरपि शुद्धावासभवनमवलोक्य मञ्जुश्रिय कुमारभूतमामन्त्रयते स्म । अस्ति मञ्जुश्री'! अपरमपि त्वदीयपटविधान साधनौपयिक सर्वकर्मार्थसाधकम् । एतेनैव तु एकाक्षरेण हृदयमन्त्रेण षडाक्षरेण वामकरान्तेन त्वदीयेन मूलमन्त्रेण वा षडक्षरहृदयेन ॐकाराद्येन एकाक्षरेण वा पटस्याग्रत अस्यैव कल्प भवति । पश्चिम काले पश्चिमे समये मयि तथागते परिनिर्वृते शून्ये बुद्धक्षेत्रे युगाधमे प्राप्ते अत्राणे लोके अशरणे अपरायणे इदमेव कल्पराजा त्राणभूत भविष्यति । शरणभूत लयनभूत परायणभूतम् । कतम च तत् ॥

आदौ तावत् पूर्वमेवानाहते पटे केशापगते सप्तहस्तायते वृहस्तपृथुके सदशे कुङ्कुमचन्दनरसपर्युषिते बुद्ध भगवन्त शाक्यमुनिं लिखयेत । पद्मासनोपविष्ट धर्म देशयमान मञ्जुश्रिय कुमारभूतमवलोकयन्तम् । दक्षिणे पार्श्वे सुधन सुभूमिं आर्याभयमतिं मञ्जुश्रिय च भगवतो नमस्कार कुर्वन्त कुमाररूपिण सर्वालङ्कारविभूषिताङ्गं वामपार्श्वे समन्तभद्र आर्यावलोकितेश्वर भद्रपाल सुशोभन च लेखयेत् । भगवत्प्रतिमा ह्रस्वतरा च लेखयितव्या । आर्यावलोकिते श्वरसुधनौ चमरव्यग्रहस्तौ कार्या । वसुधा चाधस्तात् । रत्नकरण्डकव्यग्रहस्ता पूर्वकायविनिर्गता लेखयितव्या । उपरिष्टाच्च विद्याधरकुमारौ मालाधारिणौ मेघाश्च वर्षमाणाः सविद्युता लेखयितव्या । सर्वे च बोधिसत्त्वा पुष्पमाणा या भगवता मुख व्यवलोकय त कर्तव्या' । सालङ्कारा प्रसन्नदृष्टय पूर्वकाये निषादिवनतेन लेखयितव्या ॥

तमीदृश पट सधातुके चैत्ये स्थाप्य पश्चा मुखमक्षरलक्ष जपत् । अस्य मञ्जुश्रिय काष्ठमौनी त्रि कालस्नायी तचेलपरिवर्त्ता सततपोपभिक शाक्यावस्यथाभैक्षभैक्षाहारश्चतुर्भागमन कृत्वा रत्नत्रयस्य भागमेक अ य मञ्जुश्रिय अन्यत् सर्वसत्त्वानां शेषमात्मनो पयुञ्जीत । अक्षान्तरायो मनसि भगवा न कृत्वा सर्वसत्त्वावालम्बनेन मनसा नात्मार्थमह किञ्चित् करोमि करिष्याम्य यत्र सर्वे

सत्त्वानामर्थायेति ध्यात्वा जाप कुर्यात् । स्नान गन्ध पुष्प धूप बलि प्रदीपांश्च दद्यात् । स्नापन पटच्छायाया' गन्धानधस्तात् पुष्पाणि च बलिं च सतत दद्यात् । तत्र तेषा पूर्व दद्यात् । रत्नत्रयस्य पश्चा मैत्रेयस्य तदनन्तरमवलोकितेश्वरस्य आर्यसमन्तभद्रस्य आर्याकाशगर्भस्य आर्यक्षयमते' कुमारभूतस्य च द्रुमभस्य सर्वनीवरणविष्कम्भिण' आर्यवज्रधरस्य आर्यताराया: आर्यमहामायूर्या आर्यपराजिताया भगवत्या प्रज्ञापारमितायाश्च गन्ध पुष्प धूप बलिं च सर्वमेतषा पूर्व दत्वा पश्चात् पटस्य दद्यात् ॥

पश्चाद् बहिरेकस्मिन् प्रदेशे सर्वाणि गर्दभश्वहस्तिरूपाणि विनायकानि वल्मीकमृत्तिकया कृत्वा तेषा चाशेष दद्यात् । अविस्मृत्य पिण्याकपिष्टकतिलकृतकुलत्थमत्स्यमांसमूलकवार्त्ताकपद्मपत्रकाम राजनानि च वर्जयेत् । कुशविण्डकोपविष्ट तत्रैव श्रान्त सर्वबुद्धानुस्मृतिं भावयेत् । मनसा जाप कुर्यात् । अन्यत्र विविक्ते कुशसस्तरे शय्या कल्पयेत् । अतिपानमतिभोजन अतिपर्यटन अतिदर्शनमतिशय्यां च वर्जयेत् । त्रि॰ काल बुद्धानुस्मृति भावयेत् । शुक्लव॰ च कुर्यात् । शोभनानि च स्वप्नानि नान्यस्य प्रकाशयेत् । भगवतो निवेदयेत् ॥

एवमनुपूर्वेण त्वरमाण अक्षरलक्ष जपेत् । अन्ते च भगवतीं प्रज्ञापारमिता वाचयेत् । जपकाले भगवतोऽथ मञ्जुश्रिय कुमारभूतस्य मुखमवलोकय जाप कुर्यात् । अनाकुलावस्थान । अभयुक्ता त च नमस्कार कृत्वा निवेदयेत् ॥

अनेन विधिना पूर्वसेवा कृत्वा पट क्वचित् स्वस्थे स्थाने स्थ य कर्म कुर्यात् । यत्र मनस परितुष्टिरस्ति ॥

पटविधान समाप्तम् ॥

---

पश्चाद् भगवन्त मञ्जुश्रिय श्वेतचन्दनमयं पद्मासनस्थ भगवतीं प्रज्ञापारमितां वामहस्ते दक्षिणेन फल स्थान कारयेत् । तमेकस्मिन् शुचौ प्रदेशे पश्चान्मुख स्थापयित्वा तस्याग्रतोऽग्निकुण्ड कुर्यात । सर्वकर्म सचतुरश्र द्विवितस्तिप्रमाण अधश्च गन्धां सर्वधान्यानि च क्षिपत् । तस्योपरि कुर्यात् ॥

अनेन विधिना नवमग्निमुत्पाद्य अश्वत्थसमिद्भिरग्नि अथवा शोकस्य वा घृततन्दुलोऽन क्षारन्धि मधु च सर्वमुपहृत्य ताम्रभाजने स्थापयित्वा अष्टसहस्र परिजप्य पूर्णाहुतिं दद्यात् । पश्चाद् यस्मिं दिने शुक्लप्रतिपदमारभ्य कर्म कुर्यात् अश्वत्थसमिद्भिरग्नि प्रज्वाल्य विगतधूम दृष्ट्वा अग्निमावाहयेत् । "आगच्छ हारिपिङ्गल ! दीप्तजिह्व ! लोहिताक्ष ! हरिपिङ्गल ! देहि न्दापय स्वाहा ॥"

अनेन मन्त्रेणाहुतित्रय दद्यात् । पश्चाद् भगवन्तमावाहयेत् । "आगच्छगच्छ कुमारभूत ! सर्वसत्त्वार्थमुद्यतोऽहं साहाय्य मे कल्पय गन्धपुष्पधूप च प्रतिगृह्ण स्वाहा ॥"

यद् ददाति तदनेन दातव्यम् । आगतस्य चार्घो देय' सुगन्धपुष्पपानीयेन पश्चाद्धोम कुर्यात् । सप्तवारानुच्चार्य एकैकाहुतिं क्षिपेत् । एव सप्तदिवसानि घृततन्दुलानि निलयावकेन चाप्यायन कुर्यात् ॥

अत्रान्तराद्वश्यमार्यमञ्जुश्रिय कुमाररूपिण पश्यति । द्व्यङ्गुलप्रमाणानां चन्दनसमिधानामष्टसहस्र जुहुयात् । दिनेदिने शत पृथिवीपतीनां वशमानयति । जातीकुसुमाना लक्ष जुहुयात् । राजा वश्यो भवति । पद्मानां दधिमधुघृताक्ताना सहस्र जुहुयात् । द्रव्य लभते । शमीसमिद्भिरग्नि प्रज्वाल्य तिला जुहुयात् । धनपतिर्भवति । सततमुदकमुदक जुहुयात् । प्रातरुत्थित सर्वजनप्रियो भवति । अर्कसमिधाना दधिमधुघृताक्तानां लक्ष जुहुयात् । सहस्रपिण्ड ग्राम लभते । बहुपुत्रिकां जुहुयात् । कन्यां यामिच्छति तां लभते । अपामार्ग जुहुयात् व्याधि प्रशमयति । क्षीरवृक्षकाष्ठैरग्नि प्रज्वाल्य तिला हस्तीना लक्ष जुहुयात् । यां चिन्तयित्वा करोति तां लभते । विषयार्थी पद्मानां लक्ष जुहुयात् । विषय लभते । यवाना लक्षहोमेनाक्षयमन्नमुत्पद्यते । गुग्गुलुप्रयङ्गु च घृतेन सह होमयत् । पुत्र लभते । अर्धरात्रीने जातीकुसुमानां पानीय जुहुयात् । सप्ताहेन ग्राम लभते । जातीकुसुमानां जले एकैक पुष्प गृहीत्वा जुहुयात् । अनेन ख यस्य नामाय दीयते स प्राणमात्रेण वश्यो भवति । कुङ्कुम

कस्तूरिकालवङ्गपुष्प च मुखे प्रक्षिप्य जपेत् । येन सह मन्त्रयते स वश्यो भवति। मरीचमण्सख्याभिमन्त्रित कृत्वा मुखे प्रक्षिप्य क्रुद्धोऽपि वचनेन प्रियो भवति । शिखामनेनैव बध्नीयात् । अदृश्यो भवति । शत्रु दृष्ट्वा मनसानुस्मरेद् विगतक्रोधो भवति । नित्यजापेन सर्वजन प्रियो भवति । महति प्रत्यूषेऽभ्युत्थाय जातीकुसुमसहित पानीय शुचौ प्रदेशे भूमौ जुहुयात् । मन्त्री भवति । अनतिक्रमणीयवचन' । भये समुत्पन्ने मनसि कुर्यात् । भय न भवति । परस्य क्रुद्धस्यापि मैत्रीं भाव यित्वा अनुस्मृत्य मुख व्यवलोकयेत् । विगतक्रोधो भवति । सर्वेसु गन्धपुष्पै होम कुर्याद् यमुद्दिश्य करोति स वश्यो भवति । सप्ताभि मन्त्रित उदकं प्रत्युषसि पिबेत् । नियतवेदनीय कर्म क्षपयति । स प्तजप्तेनोदकेन मुख प्रक्षालयेत् सर्वजनप्रिया भवति । पुष्पाण्यभिमन्त्र्य यस्य ददाति स वश्यो भवति । आचार्यत्वमेनेन लक्षहोमेन त ण्डु लानाम् । विषयपतित्व तिलाना । पद्माना सहस्र जुहुयात् । दीनार सहस्र लभते । वीरक्रयक्रीता गुग्गुलुसर्जरस गन्धरस श्रीवासक चैकत' कृत्वा जुहुयात् । पञ्चम्यां पञ्चम्यां षण्मासम् । पूर्णे सहस्रगुण लभते । स र्वेग धे प्रतिकृति कृत्वा तीक्ष्णशस्त्रेणैकधारेण छित्वा छित्वा जुहुया त् । दक्षिणेन पादा पुरुषस्य वामपादे स्त्रिय यमिच्छति स वश्यो भवति। सप्ताहं त्रिसन्ध्यं धुत्तरकपुष्पाणि जुहुयात् । गावो लभते । अर्ककाष्ठे र्धान्य शिरीषपुष्पैरश्वां अशोकपुष्पै' सुवर्णं व्याधिघातकपुष्पैर्वस्त्राणि लभते । यद यदिच्छति तत् सर्व जातीकुसुमहोमेन करोति । यद्वर्णानि पुष्पाणि पानीये जुहोति सरितुरुदये । तद्वर्णानि वस्त्राणि लभते । सप्तजप्त भाजन कृत्वा भिक्षामटति भिक्षामक्षयां लभते । रात्र्यामुत्थाय परिजप्यात्मान स्वय शोभनानि स्वप्नानि पश्यति ॥

अथ राजान वशीकर्तुकामः तस्य पादपांसु गृहीत्वा सर्षपैस्तै लैश्च मिश्रयित्वा जुहुयात् । सप्ताह त्रिसन्ध्य वश्यो भवति ॥

राज्ञी वशीकर्तुकामः मौवर्चेलां शतपुष्पा वाराहीं चैकत' कृत्वा जुहुयात् । सप्तरात्र त्रिसन्ध्य वश्या भवति । राजमात्यं वशीकर्तुकाम भल्लातकाना तिला वचा च प्रतिकृति कृ वा जुहुयात् । सप्ताह सप्तरात्र च वश्यो भवति ॥

पुरोहित वशीकर्तुकाम' ब्रह्मदण्डीं शतपुष्पां चैकत कृत्वा जुहुयात् । सप्तरात्रं निसन्ध्य वश्यो भवति ॥

ब्राह्मणानां वशीकर्तुकाम , पायस घृतसहित जुहुयात् । सर्वे वश्या भवन्ति ॥

अथ क्षत्रिय वशीकर्तुकाम , शाल्योदन घृतसहित जुहुयात् । सप्ताहम् ॥

वैश्याना वशीकरणे यावकां गुडसहितां जुहुयात् । वश्यो भवति ॥

पिण्याक जुहुयात् । शूद्रा वश्या भवन्ति ॥

सर्वानेकत कृत्वा जुहुयात् सर्वे वश्या भवन्ति ॥

चतुःपथे एकशून्ये गृहे वा बालिं निवेद्य योऽस्य ग्लान स तस्माद् विनिर्मुक्तो भवति ॥

मुख स्पृशं जपे ज्वरमपगच्छति । अष्टशतजप्तेन शिखाबन्धेन सर्वव्याधिभ्य परिमुच्यते । सर्वरोगेभ्य सूत्रक बध्वा शिखा बन्ध कृत्वा स्वप्तव्य । सर्वरोगा अपगच्छन्ति । व्याधिना ग्रस्त' जपमात्रेण मुच्यते । गलग्रहे वल्मीकमृत्तिकां जप्त्वा लेप कार्य । व्याधिरपगच्छति । अक्षिरोगे नीलीकलिकानि जुहुयात् । व्युपशाम्यति ॥

पटावेशाभ्यान्तरिकर्म्म ॥

---

पूर्वोक्तेन विधानेन अनाहते पटे केशापगते आर्यमञ्जुश्री कुमारभूतः आभिलेख्य' सर्वालङ्कारविभूषित' । रक्तवर्ण कुमाररूपी पद्मासनस्थः । दक्षिणपार्श्वे आर्यावलोकितेश्वर वामपार्श्वे समन्तभद्र. । आर्यमञ्जुश्रियस्य किञ्चिदूनौ । त पट स्थापयित्वा कोटिं जपेत् । राजा भवति ॥

चन्दनसमिधानां कुङ्कमाभ्यक्तानां लक्ष जुहुयात् । राजा भवति । अगरुसमिधानां दधिमधुघृताक्तानां लक्ष जुहुयात् । राजा भवति । जातीकुसुमानां घृताक्तानां कोटिं जुहुयात् । राजा भवति ॥

यत्प्रमाणानां पद्मानां राशिं जुहोति तत्प्रमाणानां दीनाराणां राशीं लभते । यावद् यावत् तावज्जप्यमाना न गृह्णाति तावद् विद्याधरचक्रवर्ती भवति । भल्लातकाना लक्षं जुहुयात् दीनारसहस्रं ददाति । व्याधिघातकफलानां लक्षं जुहुयात् महाधनपतिर्भवति । अष्टसहस्रहोमेन गुग्गुलुसमिधानां धान्यं लभते । सतततिलहोमेनाच्छिन्नं धान्यं लभते । गोतण्डुलानां लक्षं जुहुयात् । सहस्रेण गोसहस्रं लभते । बहुपुत्रिकाफलानि शमीफलानि चैकत्र कृत्वा जुहुयात् । यामिच्छति कन्यां तां लभते । शमीपत्राणि जुहुयात् । सर्वकामदो भवति । अगस्तिपुष्पाणि क्षीराक्तानि जुहुयात् । ब्राह्मणवशीकरणा । करवीरपुष्पाणि शुक्लानि जुहुयात् । क्षत्रियवशीकरणे । कर्णिकारपुष्पाणि जुहुयाद्राजा वशीकरणे । धुत्तूरकपुष्पाणि जुहुयात् । शूद्रवशीकरणे । अर्कपुष्पाणां दधिमधुघृताक्तानां लक्षं जुहुयात् । सर्वव्याधिभ्यः परिमुच्यते ॥

अनेनैव विधिना पुष्पाणां सुगन्धानां लक्षं पादमूले निवेदयेत् । नित्यसुखी भवति । अश्वत्थसमिद्भिरग्निं प्रज्वाल्य शमीपुष्पाणां सहस्रं जुहुयात् । नक्षत्रपीडा व्युपशाम्यति । गोरोचनया मन्त्रमभिलिख्य शिरसि बध्वा सङ्ग्रामेऽवतरेत् । शस्त्रैर्न स्पृश्यते । हस्तिस्कन्धे मञ्जुश्रियमग्रतो बलस्य दत्त्वा दर्शनमात्रेणैव परबलस्य भङ्गो भवति । ध्वजाग्रे कुमाररूपिणं सौवर्णमयूरासनस्थं कृत्वा सङ्ग्राममवतरेत् । दर्शनादेव परबलस्य भङ्गो भवति । जातीकुसुमानां पादमूले लक्षं निवेदयेत् । तत्रैव कुशसंस्तरे शय्यां कुर्वीत । स्वप्ने यथाभिलषितं कथयति । प्रदीपानां सहस्रं दत्त्वा एकमन्त्रीय पञ्चसूत्रवर्त्तिं कृत्वा मधुयष्टिं वेष्टयित्वा प्रज्वाल्य पश्येद् यथाभूतं मञ्जुश्रियं कुमारभूतं पश्यति ॥

द्वितीयपटविधानं समाप्तम् ।

---

सौवर्णं रजतं वा कुमारं कृत्वा वरदं दक्षिणेन पाणिना । वामेन भगवतीं प्रज्ञापारमितां दधानं तमीदृशं सधातुककरण्डकं पुरतः स्थाप्याक्षरलक्षं जपेत् । ५ वामारिणा कुर्यात् । बालदारकदारिका

जुहुयात् धान्यमक्षय लभते। शालिपुष्पाणि जुहुयात् सुवर्ण लभते। वचा दधिमधुघृताक्तां जुहुयात् सर्वोत्तरवादी भवति। ब्राह्मी रसघृताक्ता तामभाजने स्थापयित्वा तावज्जपेद् यावद् दशसहस्राणि पश्चात् पिबेत् सर्ववादिनां विजयते। यस्य क्रुद्धस्याष्टसहस्राभिमन्त्रितं कृत्वा लाजविधा पतति स क्रोधं मुञ्चति॥

अपरं विधानम्।

अनाहतं पटं केशापगतं उपोषधिकेन चित्रकरेण अश्लेषकैर्वर्णकैः आर्यमञ्जुश्रियश्चित्रापयितव्यः। पद्मासनोपविष्टः धर्मं देशयमानः दक्षिणपार्श्वे आर्यसमन्तभद्रः वामपार्श्वे चार्यप्रज्ञापारमिता जापवती सर्वालङ्कारविभूषिता शुक्लवस्त्रनिवसना। तस्याधस्तात् पद्मसर, बहुविधपुष्पसङ्कीर्णं नागराजानौ अकायविनिर्गतौ पद्मदण्डधृतहस्तौ आर्यापराजिता चैत्यस्मि विघ्नविनायकां नाशयन्ती अग्निज्वाला मुखी भृकुटीकृतललाटा अग्न्यायतनं पाशं आर्यपर्णशबरी पाशपरशुव्यग्रहस्ता कृष्णवस्त्रनिवासा मयूरपृष्ठाभिरूढा साधक परिरक्षन्ती। साधकश्च पद्ममालाग्रहस्तः भगवता मञ्जुश्रियमुखं व्यवलोकयमानः उपरिष्टाकाशगतपुष्पमालादु दुन्दुभिधारिणौ देवपुत्रौ लेखयितव्यौ॥

तं पटं पश्चाद् मुखं स्थाप्य सधातुकं चैत्ये कोटिं जपेत्। जपान्ते च महता पूजां कृत्वा भगवतो प्रज्ञापारमितां वाचयित्वा दश सहस्राणि जपेत्। मञ्जुश्रिया मुखं व्यवलोकयमानः। पश्चात् पटः कम्पते। राज्यं लभते। वसुधा लभते। विद्याधरो भवति। हसते चक्रवर्ती भवति। ज्वलते बोधिसत्त्वः प्रथमभूमिप्रतिलब्धो भवति। धर्मदेशनां चास्य शृणोति॥

तस्यैव पटस्याग्रत कपिलायाः समानवत्सायाः गोघृतं शुक्लताम्रभाजने स्थाप्य तावज्जपेद् यावदूष्मायति। धूमायति। प्रज्वलति। ऊष्मायमानं पीत्वा परमेधावी भवति। श्रुतिधरः धूमायमानेऽ तद्धानम् ज्वलमाने आकाशगमनम्। आमशरावसम्पुटे स्थाप्य

वर्ती जातीकुसुमैर्वेष्टयित्वा तावज्जपेद् यावत्स्फुरीभवति । तां भक्षयित्वा श्रुतिधरो भवति । अथ यां रात्रिं जपति मञ्जुश्रियं साक्षात् पश्यति । धर्मदेशनां च शृणोति । तां नातिक्रमते ॥

सौवर्णपद्म शतपत्रं कारयित्वा तं गृहीत्वा जानुमण्डलं पृथिव्यां प्रतिष्ठाप्य तावज्जपेद् यावज्ज्वलितो । सह गृहीतमात्रेण विद्याधराणां चक्रवर्ती भवति परैरधर्षणीय । एवं शिलां हरितालमञ्जनं वा श्रीपर्णीसमुद्गके प्रक्षिप्य तावज्जपेद् यावत् धूमायति ज्वलति । गृहीतमात्रेण भूमिचराणां राजा भवति अजरामरणो भवति । खड्ग गृह्य सल्लक्षणसङ्कीर्णं तेन तावज्जपेद् यावत्प्रज्वलितं कृत्वा तिष्ठति । तं गृह्य विद्याधरचक्रवर्ती भवति । मनःशिलां तल्लोहपरिवेष्टितां कृत्वा मुखे प्रक्षिप्य तावज्जपेद् यावच्चुलुचुलायतीति । अदृश्यो भवति । खड्गहस्तो अदृश्य सत्त्वाणि कुशलानि हितानि करोति । वर्जयित्वा कामोपसंहितम् । शमीवृक्षस्याश्वत्थस्य सार गृह्य तल्लोहपरिवेष्टितं कृत्वा मुखे प्रक्षिप्य तावज्जपेद् यावच्चुलुचुलायति । अदृश्यो भवति वर्षसहस्रं जीवति ॥ रजत चक्र कृत्वा असुरविवरस्याग्रतः तावज्जपेद् यावच्चक्र असुरकन्याणि भित्त्वा प्रविशति । तत्क्षणमेवासुरयुवत्यः निर्गच्छन्ति । ताभिः सह प्रविश्य कल्पस्थायी भवति । लोहमयं त्रिशूलं कृत्वा तमसि विवरद्वारे जापं करोति तत्र सर्वेय द्वाणि स्फुटन्ति । यावत्प्र सहस्राणि तावद्भि सह प्रविशति । कल्पस्थायी भवति । मैत्रेयं च भगवन्तं पश्यति ॥

पञ्चमः साधनविधिः ।

श्वेतार्कमय अङ्गुष्ठमात्रं भगवन्तं मञ्जुश्रियं कारयित्वा अर्कपुष्पाणां लक्षं निवेदयेत् । महापण्डितो भवति । श्वेतचन्दनमयं कृत्वा अङ्गुष्ठमात्रमेव च पुष्पाणामेतां सहस्रं निवेदयेत् मन्त्री भवति । रक्तचन्दनमय वितस्तिप्रमाणमात्रं कारयित्वा च पुष्पाणां लक्षं निवेदयेत् । सेनापत्यं लभते । श्वेत चन्दनमय वितस्तिप्रमाणमात्र भगवन्तं मञ्जुश्रियं कृत्वा जातीकुसुमानां लक्षं निवेदयेत् । पुरोहित्यं लभते । अश्वत्थवृक्षमय अङ्गुष्ठमात्रप्रमाणं भगवन्तं मञ्जुश्रियं कार

अष्टाविंशतितम पटलविसर ।

कथित्वा मन्त्रतन्त्राणां बलं वीर्यं सविस्तरम् ।
अमोघ दर्शयेत् सिद्धि तस्मि काले युगाधमे ॥

शुद्धावास तदा वक्रे देवसङ्घा जिनोत्तमा ।
यमेत भाषी भाक्त कल्पराज सविस्तरम् ॥
सर्वलोकहितार्थाय मञ्जुघोषस्य शासनामिति ॥

आर्यमञ्जुश्रियमूलकल्पाद् बोधिसत्त्वपिटकावतसकात्
महायानवैपुल्यसूत्रात् षड्विंशतिम कर्म
विधानार्यमञ्जुश्रीयपरिवर्तपटल
विसर परिसमाप्त इति ।

---

## अथैकोनत्रिंश पटलविसर ।

अथ भगवां शाक्यमुनि' पुनरपि शुद्धावासभवनमवलोक्य मञ्जुश्रियं कुमारभूतमामन्त्रयते स्म । अस्ति मञ्जुश्रीं' ! त्वदीये कल्पविधानपरिवर्त सप्तम परकर्मविधान यो तस्मिं काले तस्मिं समये युगान्ते साधयिष्यन्ति अमोघा तस्य सिद्धिर्भविष्यति । सफला' सुखादया सुखविपाका, दृष्टधर्मवेदनीया सर्वदुर्गतिनिवारणीया नियत तस्य बोधिपरायणीया सिद्धिर्भविष्यति ॥

अथ भगवां शाक्यमुनि मञ्जुश्रियस्य कुमारभूतस्य हृदयं भाषते स्म ॥

षडक्षर षडगतिमोचनात्मक अचिन्त्यतुल्याप्रतिम महर्द्धिकम् ।
निर्मोचक सर्वभवार्णवार्णव तुदु खदु खा भवबन्धबन्धनात् ॥

असक्त सर्वभूतानां सर्वलोकानुलिप्तकम् ।
अधृष्य सर्वभूतानां भवमार्गविशोधकम् ॥

प्रापक बुद्धधर्माणां सर्वदुष्टनिवारणम् ।
अनुमोदितं सर्वबुद्धैस्तु सर्वसम्पत्तिकारकम् ॥

उत्कृष्टः सर्वमन्त्राणां मञ्जुघोषस्य शासने ।
कतम च तत् । ॐ वाक्येद नम' ॥

अस्य कल्प भवति । शाकयावकभिक्षभैक्षाहारो वा त्रिःकाल स्नायी त्रिचेलपरिवर्त्ती अक्षरलक्ष जपेत् । पूर्वसेवा कृता भवति ॥

ततः अच्छिन्नाग्रदशके पटे पोपधिकेन चित्रकरेण अश्लेपकै र्वर्णकै आर्यमञ्जुश्रीश्चित्रापयितव्य पद्मासनस्थो धर्म देशयमान' सर्वालङ्कारविभूषितः कुमाररूपी मुक्ताम्बराम्ब तस्य वामेन आर्यावलोकितेश्वर' पद्महस्तः चामरव्यग्रहस्त दक्षिणेन आर्यसमन्तभद्र, उपरि मेघगर्भविनिर्गतौ विद्याधरौ मालाधारिणौ लिखापयितव्यौ अधस्तात् साधको धूपकटच्छकव्यग्रहस्त, समन्तात् पर्वतशिखरा लिखापयितव्या । अधस्तात् पद्मसरः ॥

सधातुके चैत्ये पट पश्चा मुख प्रतिष्ठाप्य उदारां पूजां कृत्वा घृतप्रदीपांश्च प्रज्वाल्य जातीपुष्पाणां अष्टसहस्रेण एकैकमभिम न्त्र्य मञ्जुश्रीमुखे ताडयेत् । ततो महागम्भीरहुङ्कारशब्द श्रूयते । पटो वा प्रकम्पते । हुङ्कारशब्देन सार्वभौमो राजा भवति । पटप्रकम्पने सर्व वादिपूत्तरवादी भवति । सर्वलोकैकशास्त्रज्ञः । अथ न सिद्धयति सर्व कर्मसमर्थो भवति ॥

अथ प्रथम रूप ।

---

अगरुसमिधानामभ्यङ्गमङ्गुलप्रमाणानां निर्धूमपु खदिराङ्गारेषु कृत्स्नां रात्रिं तुरुष्कतैलाक्तानां जुहुयात् । अरुणोदये आर्यमञ्जुश्रिय पश्यति । सोऽस्य यथेप्सित वर ददाति । वर्जयित्वा कामोपमहितम् ॥

तस्यैव पटस्याग्रत च न्दनधूपमव्यवच्छिन्न दह कृत्स्नां रात्रिं जपेत् । तत आर्यमञ्जुश्री साक्षामागच्छति गम्भीरां धर्मां देशयति । तामधिमुच्यति । अधिमुच्य सर्वव्याधिविनिर्मुक्त वशिता प्राप्तो भवति ॥

रक्तच न्दनमय पद्म कृत्वा षडङ्गुलपरिणाह सनाल रक्तच न्दनेन म्रक्षयित्वा सहस्र सम्पाताहुत सहस्राभिमन्त्रितं कृत्वा पूर्ण मास्यां पटस्याग्रत पद्मपो स्थाप्य हस्तेनावष्टभ्य तावज्जपेद् यावत् प्रज्वलित इति । तेन गृहीतेन द्विरष्टवर्षाकृति तप्तकाञ्चनप्रभ भास्क रस्योपरिकेतेजा देवकुमार सर्वविद्याधरनमस्कृत महाकल्पं जीवति । भिन्ने देहे भिरत्यामुपपद्यते ॥

च द्रग्रहे श्वेतवचां गृह्य पञ्चगव्येन प्रक्षाल्य अश्वत्थपत्रैरव ष्टम्भयित्वा तावज्जपेद् यावदूष्मायति धूमायति ज्वलति । सर्वज नवशीकरणः सर्ववादिविजयी धूमायमाने अन्तर्द्धान त्रिशद्वर्षसहस्रा णि जीवति । ज्वलिते आकाशगमन महाकल्प जीवति ॥

कपिलाया, समानवत्साया घृत गृह्य ताम्रभाजन प्रक्षभिरश्व त्थपत्रैः स्थाप्य तावज्जपेद् यावत् त्रिविधा सिद्धिरिति । त पीत्वा श्रुतिधरमन्तर्धानाकाशगमनामिति ॥

पुष्करबीज मुखे प्रक्षिप्य चन्द्रग्रहे तावज्जपेद् यावच्चुलुचुला यति । त्रिलौहपरिवेष्टित कृत्वा मुखे प्रक्षिप्यान्तर्हितो भवति । उद्गी र्णाया दृश्यति ॥

लाङ्गलाग्र मुखे प्रक्षिप्य पद्लक्षं जपेत् । यमालपति स वश्यो भवति । क्षीरयावकाहारः लक्ष जपेद् विद्याधरो भवति । भिक्षा हारः काष्ठमौनी लक्ष जपे अ तर्हितो भवति । कोटिं जपेदार्यमञ्जुश्री स्तथा धर्म देशयति यथा चरमभविको बोधिसत्त्वः भवति । सतत जापेन सर्वार्थवृद्धिर्भवति ॥

सर्वगन्धैर्यस्य प्रतिकृतिं कृत्वा च्छित्वा जुहोति स सप्तरात्रेण वश्यो भवति । गुग्गुलुगुलिकानां बदरास्थिप्रमाणानां घृताक्तानां श तसहस्र जुहुयाद् दीनारलक्ष लभति ॥

समुद्रगामिनीं नदीमवतीर्य पद्मानां शतसहस्र निवेदयेत् । प द्मराशितुल्य महानिधान पश्यति । क्षयं न गच्छति । गौरसर्षपाणां कुङ्कुमाभ्यक्तानां अष्टसहस्र जुहुयात् । राजा वश्यो भवति । तिलानां दधिमधुघृताक्तानां शतसहस्रं जुहुयात् । सर्वेन्द्दो महागृहपतिर्भवति । अपतितगोमयेन मण्डलक कृत्वा मुक्तपुष्पैरभ्यवकीर्याष्टशतं जपेत् । ततः सद्धर्मपुस्तकं वाचयेत् । मासेन परममेधावी भवति । रोचनाष्ट शतं कृत्वा तिलक कुर्यात् । सर्वजनप्रियो भवति । शिखां सप्तजप्तां कृत्वा सर्वसत्वानामावध्यो भवति । किरिमाक्ष दशसहस्राणि जुहु यात् । सर्वव्याधिर्मुच्यते । दिनेदिने सप्तवारां जपेत् । नियतवेदनीय कर्म क्षपयति अथाष्टशतजपेन मरणकालसमये समस्त सम्मुख आर्य मञ्जुश्रिय पश्यतीति ॥

आर्यमञ्जुश्रियमूलकल्पाद् बोधिसत्त्वपिटकावतसकात
महायानवैपुल्यसूत्रात् सप्तविंशतिम
मञ्जुश्रीपटविधानपरिवर्तकर्म
विधि सप्तमकपटलविसर
परिसमाप्तमिति ।

## अथ त्रिंशः पटलविसरः ।

अथ खलु भगवां शाक्यमुनिः पुनरपि शुद्धावासभवनमवलोक्य मञ्जुश्रियं कुमारभूतमामन्त्रयते स्म । अस्ति मञ्जुश्रीः त्वदीयमन्त्रतन्त्रे विद्याराज्ञां चक्रवर्तिप्रभृतीनां सर्वतथागतोष्णीषप्रमुखानां सर्वमन्त्राणां सिद्धिस्थानानि भवन्ति । तत्रान्तरापथे सर्वत्र ताथागती विद्याराज्ञः सिद्धिं गच्छन्ति सक्षेपतः ॥

चीने चैव महाचीने मञ्जुघोषोऽस्य त्रस्यति ।
ये च तस्य मन्त्रा वै सिद्धिं यास्यन्ति तत्र वै ॥

उष्णीषराज्ञां सर्वत्र सिद्धिर्दृश्येयु तत्र वै ।
कापिशे वखले चैव उड्डियाने समन्ततः ॥

कश्मीरे सिन्धुदेशे च हिमवत्पर्वतसन्धिषु ।
उत्तरां दिशि नि सृत्य मन्त्रा सिद्ध्यन्ति श्रेयसाः ॥

ये च गीता पुरा बुद्धैः अधुना च प्रवर्तिता ।
अनागता च सम्बुद्धैः उद्गीर्णा शान्तिहेतवः ॥

सर्वे वै तत्र सिद्ध्यन्ति हिमाद्रिकुक्षिसम्भवे ।
जनपदे श्रेयसे भद्रे शान्तिं कर्तुं समारभे ॥

मध्यदेशे तथा मन्त्राः सिध्यन्त्येते पद्मसम्भवा ।
गजोमानिकुले चापि सिद्धिस्तत्र प्रदृश्यते ॥

पञ्चिकस्य च यक्षस्य हारीत्या यक्षयोनिजा ।
गान्धर्वा ये तु मन्त्रा वै सिद्धिस्तेषां समोदिता ॥

काशिपुर्यां ततो नित्यं मगधेषु समन्ततः ।
अङ्गदेशे तथा प्राच्यां कामरूपे समन्ततः ॥

लौहित्यां तु तटे रम्ये वङ्गदेशेषु सर्वतः ।
जम्भलस्य भवेत् सिद्धि तथा मणिकुलोदिते ॥

समुद्रतीरे द्वीपेषु सर्वतत्र जलाश्रये ।
सिंहलानां पुरी रम्या सिद्ध्यन्ते मन्त्रदेवता ॥

भृकुटी चैव महाश्रिया यशस्विनी ।
सिताख्या' रात्रेय तारस्तु नतु'कुमार्या महोदधौ ॥
सिध्यन्ते तत्र ने स्थाने पूर्वदेशे राम तत' ।
विन्ध्यकुक्षिनिविष्टाश्च अग्ने द्रे च राम-तत' ॥
कार्तिकेयोऽथ मञ्जुश्री' सिद्ध्य ते च मम-तत ।
शृङ्गारगह्वर' कुक्षाद्रे' व दरे च सकानने ॥
सिद्धिर्विनायकां तत्र विघ्नकर्ता सजापिनाम् ।
हस्ताकारगमायुक्तानेकद-ता महौजराम् ॥
अश्वरूपा तथानेका नारशालिनाम् ।
ईशानस्य सुतां दि-यां विविधां विघ्नकारकाम् ॥
तस्मात्का म त्रयुक्तांश्च सिद्धिक्षेत्र प्रदृश्यते ।
मातरा विविधाकारां ग्रहांश्चैव सुदारुणाम् ॥
प्रेतायोनिसमादिष्टा मानुषाहारनेन्द्रताम् ।
प्रेतराज्ञ' समादिष्टं सिद्धिक्षेत्र ततोदितम् ॥
तदाद्यान् सर्वभूतानां सिद्धिक्षेत्र समादिशेत् ।
वज्रक्रोधो महावीर्य' सिद्ध्य-ते तत्र वै दिशे ॥
आसुरा म त्रमुख्यास्तु ये चान्ये लौकिकास्तथा ।
सिद्ध्यन्ते तत्र म त्रा वै दक्षिणां दिशिमाश्रिताः ॥
प्रेतराज्ञस्तथा नित्यं यमस्यैव विनिर्दिशेत ।
सिद्ध्यन्ते जालमन्त्रास्तु राशैवा च सवैष्णवा ॥
क्रूराश्च क्रूरकर्मेषु प्रेत्रसादिग्जन्भणम् ।
वज्रपाणिसमादिष्टा म-त्रा' क्रूरकर्मिण ॥
दक्षिणापथमाश्रित्य सिध्य-ते पापकर्मिणाम् ।
अशुभ फलनिष्फत्तिं दृश्यते तत्र वै दिशे ॥
आदित्यभाषिता ये म-त्रा सौम्याश्चैव प्रकीर्तिताः ।
ऐन्द्रा म त्राः प्रसिध्य-ते पश्चिमे दिशि शोभने ॥

उत्पत्तेः सर्वबुद्धानां मन्त्रसिद्धि जिनोदिताम् ।
मध्यकाले तु बुद्धानां अन्तरान्तरामुत्तमाम् ॥
मन्त्राणाम यकालेऽस्मिन् तदन्येषां मन्त्रशालिनाम् ।
सिद्धिश्च कालत' प्रोक्ता नान्यकाले प्रकीर्तिता ॥
तपसादुत्तमा सिद्धिस्त्रिभिर्जन्यैरवाप्नुयात् ।
सातत्यजापिनां मन्त्र तद्भक्तां गतमानसाम् ॥
प्रसन्नानां जिनपुत्राणां इह जन्मेऽपि सिध्यति ।
रत्नत्रये च भक्तानां बोधिचित्तविभूषिताम् ॥
सवररथां महाप्राज्ञ तन्त्रमन्त्रविशारदाम् ।
मन्त्राः सिद्ध्यन्त्ययत्नेन बोधिसत्त्वरतस्थिताम् ॥
सत्त्वानां कर्मसिद्धिस्तु आत्मसिद्धिमुदाहृता ।
सिद्धा एव सदा मन्त्रा असिद्धा सत्त्वमोहिता ॥
अत एव जिनेन्द्रैस्तु कल्पराज उदाहृतः ।
सविस्तरकथा मन्त्रं बुद्धश्रेष्ठो हि सप्तमः ॥
स वत्रे मुनिमुख्यस्तु बुद्धचन्द्रो महर्द्धिक' ।
ज्येष्ठ च बुद्धपुत्रं त मञ्जुघोषो महौजसम् ॥
शृणु त्व कुमार! मन्त्राणा प्रभावगतिनैष्ठिकम् ।
यस्मि काले सदा बुद्धः ध्रियन्ते लोकनायकाः ॥
तस्मि काले तदा सिद्धि' उष्णीषाद्यां प्रकीर्तिता ।
चक्रवर्तिस्तथा राजा तेजोराशिः प्रकीर्तित' ॥
सितातपत्रजयोष्णीष बहव' वर्णिता जिनै' ।
एवमाद्यास्तथोष्णीषा सिद्ध्यन्ते तस्मि काले ॥
चक्रवर्तिर्यदा काले जम्बूद्वीपे भविष्यति ।
धर्मराजा च सम्बुद्ध' तिष्ठते द्विपदोत्तम' ॥
तस्मि काले भवेत् सिद्धि मन्त्राणां सर्वभाषितामिति ।

आर्यमञ्जुश्रियमूलकल्पाद् बोधिसत्त्वपिटकावतंसका
महायानवैपुल्यसूत्रादष्टाविंशतिम क्षेत्र
कालविधिनियमपटलविसर
परिसमाप्तमिति ॥

---

## अथैकत्रिंश पटलाविसर ।

अथ खलु भगवां शाक्यमुनि पुनरपि शुद्धावासभवननमत्र मञ्जुश्रियं कुमारभूतमामन्त्रयते स्म । शृणु मञ्जुश्री कुमार निर्दिष्टं पद सत्त्वाविष्टानां चरितं शुभाशुभं निमित्त च वक्ष्ये ॥

अथ खलु मञ्जुश्री कुमारभूत उत्थायासनाद् भगवतश्चरणयो त्य मूर्ध्निमञ्जलिं कृत्वा भगवन्तमेतदवोचत् । तत् साधु भग वदतु सत्त्वानां परसत्त्वदेहाङ्क्रान्तानामार्येन्द्रिय एतिसिद्धग यक्षराक्षसपिशाचमहोरगप्रभृतीना विचित्रकर्मकृतशरीराणा वि गतिनिश्रितानां विविधाकारानेकचिह्नानां मनुष्यामनुष्यभूतानां चरितानि समयो भगवां समय सुगतः । यस्येदानी काल म से । एवमुक्तो मञ्जुश्रिय कुमारभूतो तूष्णीम्भावेन स्वके आसने पु' अध्येष्य जिनवर लोकनायक जिनसत्तम गौतममिति ॥

अथ भगवां शाक्यमुनि' सत्त्वानां चित्तचरितनिमित्तज्ञान चिह्न ं च भाषते स्म ॥

परदेहगतः सत्त्व' आकृष्टो मन्त्रयुक्तिभि' ।
केचिदाहारलोभेन गृह्णन्ते मानुष भुवि ॥

अपरे क्रुद्धचित्ता वै पूर्ववैरात्र चापरे ।
गृह्णन्ते मानुषां लोके भूतलेऽस्मिं ु ारुणा ॥

वीतरागा तथा नित्यं कारुण्यात् समया पुन ।
अवतार मर्त्यलोकेऽस्मिं गृह्णते मानुषा शुभाम् ॥

प्रशस्तां शुभमव्यङ्गां नराणां वर्णसाधिकाम् ।
उदयन्त तथा भानो तेषामावेशमुच्यते ॥

अवताराास्तेषु कालेऽस्मिं भानोरस्तमने निशा ।
रात्र्यां च प्रथमे यामे सितपक्षेषु दृश्यते ॥

प्रशस्ता शुभकर्माणां ये नरा धार्मिकाः सदा ।
शुचिदक्षसमायुक्ता अवतारास्तेषु दृश्यते ॥

आविष्टास्तु ततो मर्त्यो वीतरागैर्महर्द्धिकैः ।

शुनिर्देशे ज्जने तत्र शुभे नक्षत्रतारके ।
प्रशस्ते दिवसे वारे शुक्लपक्षे शुभेऽहनि ॥
शुक्लग्रहरायुक्ते तिथौ पूर्णसमायुते ।
परिपूर्णे तथा चन्द्रे अवतार तेषु भगवान ॥
अवतीर्णस्य भवे चिह्न वीतरागस्य महर्द्धिक ।
आकाशे तालमात्र तु पृथिव्यामुल्लङ्घ्य तिष्ठते ॥
पर्यङ्कोपविष्टोऽसौ दृश्यते नियताश्रये ।
नानादिव्यमतुल्याना ध्याणाकर्णमुखास्तथा ॥
वदतेऽसौ महासत्त्वो यत्रासौ पीदधियोस्थित ।
उष्णीषमुद्रेराकृष्ट' पततेऽसौ महीतले ॥
महीमस्पृश्यतस्तिष्ठेदर्घ दद्यात्तु तत्क्षणात् ।
जातीकुसुमसन्मिश्र श्वेतच न्दनकुङ्कुमम् ॥
मिस्रत उदक दद्यादर्घ पात्र तु तत्क्षणम् ।
प्रणिपत्य महीं मन्त्री अध्येष्ये हितकाम्यया ॥
अध्येषो हि स, सत्त्वो वीतमत्सरचेतस' ।
वाच प्रभापते दिव्यां अनेलां कर्णसुखांस्तथा ॥
यथेप्स तु तत' पृच्छे मन्त्रज्ञे हि विशारद ।
न भेतव्यं तत्र काले तु मञ्जुघोष तु संस्मरेत् ॥
मुद्रां पञ्चशिखां बद्ध्वा अन्य वोष्णीषसम्भवम् ।
दिशाबन्धं ततः कृत्वा दिव्यगर्भमथ एव तु ॥
ततोऽसौ सर्ववृत्तान्तमध्यान्त च प्रवक्ष्यते ।
आदिमध्य तथा काल भूत तत्र यथागतम् ॥
वर्तमान यथाभूतं आचष्टेऽसौ महाद्युति' ।
अनिमिषाक्षास्तथा स्तब्ध' प्रेक्षतेऽसौ भीतविद्विषः ॥
यस्तेनोदिता वाचा सत्य त नान्यथा भवेत् ।
सिद्धिसाध्य तथा द्रव्य योग स निश्चय गतिम् ॥

तथा वङ्गे समा जाता या वाचा तु प्रवर्तते ।
किन्नराणां तथा वाचा सा वाचा परिकल्पिता ॥
यौङ्गी वाचा भवेन्नित्य सिद्धविद्या सखड्गिणाम् ।
विद्याधराणां तु सा वाचा + + + + + + + + ॥
ऋषीणां तु कामरूपी तु वाचा विश्वरूपिणाम् ।
पञ्चाभिज्ञ तु सा वाचा ऋषीणां परिकल्पिता ॥
या तु सामा तटी वाचा या च वाचा हरिकेलिका ।
अव्यक्तां स्फुटां चैव डकारपरिनिश्रिता ॥
लकारबहुला या वाचा पैशाचीवाचमुच्यते ।
कर्मरङ्गाख्यद्वीपेषु नाडिकेसरमुद्भवे ॥
द्वीपवारुषके चैव नग्नालिसमुद्भवे ।
यवद्वीपिवा सत्त्वेषु तदन्यद्वीपसमुद्भवा ॥
वाचा रकारबहुला तु वाचा अस्फुटतां गता ।
अव्यक्ता निष्ठुरा चैव सक्रोधा प्रेतयोनिषु ॥
दक्षिणापथिका वाचा अन्ध्रकर्णाटद्राविडा ।
कोसलाडविसत्त्वेषु सैहले द्वीपमुद्भवा ॥
डकारे रेफसंयुक्ता सा वाचा राक्षसी स्मृता ।
तदन्यद्वीपवास्तव्यै, मानुष्यैश्चापि भाषितम् ॥
स एष वचनमित्युक्त्वा मातराणां महौजसाम् ।
पाश्चमी वाच निर्दिष्टा वैदिशीश्चापि मालवी ॥
वत्समत्सार्णवी वाचा शूरसेनी विकल्पिता ।
दशार्णवी चापि पारेत्या श्रीकण्ठी चापि गौर्जरी ॥
वाचा निर्दिष्टा भाक्तिर्याणां ग्रहोत्तमाम् ।
तदन्यां ग्रहमुख्यां तु पारियात्री विकल्पिता ॥
अर्बुदे राष्ट्रदेशे च मलये पर्वतवासिनाम् ।
खषद्रोण्यां तु सम्भूते जने वाचा तु यादृशी ॥

ता॰शी वाच निर्दिष्टा कुष्माण्डादियोनिजम् ।
शरपस सम्भूता यरलावकमुद्भवा ॥

प्रकारमथिता या वाचा ॰ानयानां विनिर्दिशेत् ।
कश्मीरे देशसमुद्भूता कापिशे च जनालये ॥

सर्वे कुलोद्भूता वज्रपाणिकुलोद्भिता ।
तेषां मन्त्रमुख्यानां सर्वेषां वाचमिष्यते ॥

तथाब्जमध्यन्देशस्था कुलयोनिसमाभृता ।
वाचा गतिचिह्नाश्च दृश्यन्ते अब्जसम्भवा ॥

पूर्वनिर्दिष्टमेवं स्यात् जिनमन्त्रा विकल्पिता ।
वीतरागां तु ये चिह्ना ते चिह्ना जिनसम्भवा ॥

यत्र देशे भवेद् वाचा तत्स्था गतिचेष्टिता ।
तदेव निर्दिशेत् सत्त्व तच्चिह्न तु सर्वत ॥

हिमाद्रे कुक्षिसन्निष्टा गङ्गातीरे तु चोत्तरे ।
यक्षगन्धर्वऋषयो जने वाचा प्रदृश्यते ॥

विन्ध्यकुक्ष्यद्रिसम्भूता गङ्गातारे तु दक्षिणे ।
श्रीपर्वते तथा शैले सम्भूता ये च ज तत्र ॥

राक्षसोऽसुरारम्भेता विकृता मानरामा॰ ।
घोररूपा महाविघ्ना ग्रहाश्चैव सुदारुणाम् ॥

परप्राणहरा लुब्धा तज्जनाद्वाचसम्भवा ।
तत्र देशे तु ये चिह्ना तद्देशे गतिचेष्टिता ॥

तद्वाचवाचिनो दृष्टा आविष्टाना विनिर्दिशेत् ।
गत ॰ान्ये च ॰॰ा ॰॰ष्टागति॰ष्टि

विचित्राकाररूपाश्च विचित्राकारचिह्निता ।
विचित्रमन्त्रमुख्या॰ा वि॰ि॰ा॰ा॰ि॰ा॰यते ॥

एतदादिष्टचिह्न तु ल॰॰ण ग॰ि॰ि॰ि॰म् ।
सर्वेषां त प्रकृति मानुषाणा मुख्यानाम् ॥

रक्षार्थं प्रयोक्तव्या कुमारो विश्वसम्भव' ।
षडक्षरेणैव कुर्वीत मन्त्रेणैव जापिन' ॥
महामुद्रासमायुक्तं । । । । । । । । ।
पञ्चचीरासु विन्यस्त महारक्षा कृता भविष्यति ॥

आर्यमञ्जुश्रियमूलकल्पाद् बोधिसत्त्वपिटकावतंसकात्
महायानवैपुल्यसूत्रात् एकूनत्रिंशतिम आवि
ष्टचेष्टाविधिपरिवर्तपटविसर
परिसमाप्त इति ॥

---

## अथ द्वात्रिंश पटलविसर ।

अथ खलु भगवां शाक्यमुनि' पुनरपि शुद्धावासभवनमव-लोक्य मञ्जुश्रियं कुमारभूतमाम न्त्रयते स्म । अस्ति मञ्जुश्रीः त्व दीयमन्त्राणां सर्वतन्त्रेषु समनुप्रवेशसर्वविन्यारहस्यमनेककालगुणश-कलफलोदयमप्यनुबन्धनिमित्तं प्रमाणतो वक्ष्ये सिद्धिकारणानि । तद्यथा —

जन्मान्तरिता सिद्धिः न सिद्धि' कालहेतुत' ।
तत्प्रमाणप्रयोगस्तु पूर्वसम्बद्धमुद्भवा ॥
अहितावहितो सिद्धि' भवेद्‌ युक्तिविचारणम् ।
त्वत्कुमाराश्रययुक्तिः दृश्यते सर्वदेहिनाम् ॥
अत्र पूर्वकृतं कर्म युक्तिरित्यभिधीयते ।
तद्योगे युक्तित' धीरो प्राप्नुयात् सिद्धिमुत्तमाम् ॥
असिद्ध सिद्ध्यते कर्म न सिद्धि. कर्मणा विना ।
कर्मकर्तृसमायुक्त सयुक्त सिद्धि कल्प्यते ॥
लिलेभ परम स्थान विधियुक्तेन हेतुना ।
न वत्रे मन्त्रिणा मन्त्र अमन्त्रो मन्त्रिणो भवेत् ॥
मोनकर्मसमाचारे सिद्धिमाप्नोति पुष्कलाम् ।
जापी बीजसमाहार आजहार श्रियोत्तमम् ॥
वियत' श्रेष्ठतम स्थान प्रथमं गतिमाप्नुयात् ।
वियताभावतः स्वस्थो प्राप्नुया निर्जरसम्पदम् ॥
निमित्ता कालतो यस्य अकाले सिद्धिकांक्षिण' ।
न सिद्धिस्तस्य म त्राणा शक्रस्यापि समा[illegible] ॥
अहितो भूतजन्तूनां अकालाक्रमण पुन' ।
न सिद्धिस्तस्य दृश्यते ब्रह्मणस्यापि महात्मन ॥
तन्द्रीतृष्णासमायुक्तो मदामानसमन्वित' ।
शैथिल्योद्वीर्यमुद्वेक्षी नित्य प्राण्यजने रतः ॥

आत्रस्या मिथुनमयोगी अस्य सिद्धि कुतो भवेत् ।
सुराणां गुरवो यत्र असुराणा च येरतदा ॥

तेऽपि साधयितु मन्त्र न शक्तो विविवजितम् ।
विधिहीन तथा कर्म चित्तविभ्रमकारकम् ॥

तस्मात् त जपे मन्त्र अयुक्त विविना विना ।
बालानां दृष्टिसम्मोह जनयन्ति तथाविधा ॥

समूढास्तु ततो बाला पतन्ते ऽधमा गतिम् ।
ततस्ते मन्त्रधरास्तस्मादुज्जहार तत' पुन ॥

अनुपूर्व्या तत सिद्धि प्रयच्छन्ति शुभां गतिम् ।
ततो त जपिन मन्त्रा स्थापयन्ति शिवाचले ॥

एवममोघ मन्त्राणां जपमुक्त तथागतै ।
दृष्टिभ्रान्तेऽपि चित्तस्य अनुग्रहायैव युज्यते ॥

एते कल्याणमित्रा वै एते सत्त्ववत्सला ।
एतेषां सिद्धिनिर्दिष्टा वियानमगता शिवा ॥

तस्मात् सर्वप्रयत्नेन जपेन्मन्त्र समाहित. ।
अविधिप्रयोगा मन्त्रा हि प्रयुक्ता म वजापिभि ॥

चिरकाल तु ससारात् कथञ्चि मुक्तिरिष्यते ।
सुचिरात् कालतर गत्वा मन्त्राणां सिद्धि दृश्यते ॥

विधियुक्ता हि मन्त्रा वै क्षिप्र सिद्धिमवाप्नुयात् ।
पश्यते फलनिष्पत्तिं नाफल मन्त्रमुच्यते ॥

इहैव जन्मे सिद्ध्यन्ति मन्त्रा फलममादिता ।
न निष्पत्ति' फलकर्मणां नाफलं कर्ममिष्यते ॥

फलं कर्मसमायोगात् सफल कर्म उच्यते ।
तज्जापी जन्मजनिता वियत्याभावसम्भव ॥

शिवं लोकनिर्दिष्ट शान्तभावा विमुच्यते ।
तद्गतं गतिमाहात्म्यं बुद्धवर्माद्नुसेविन ॥

विपरीतकलौ काले सिद्धिस्तस्यापि दृश्यते ।
इहैव जन्मे भवेत् सिद्धि जन्मान्ते न प्रवर्त्तते ॥

यावन्निष्ठा भवेच्छान्ति निर्वर्णगमनन्तरम् ।
यत्तु लोकविनिर्दिष्ट शिव स्थान सुनिर्मलम् ॥

बुद्धत्वं सप्रकाशं तु जन सर्वप्रशासिनम् ।
तदन्त तस्य अन्त वै मन्त्रसिद्धिरुदाहृता ॥

अप्रकाश्यमभावं तु जिनाना मन्त्रा गगनमव्ययम् ।
मन्त्रा तु कथित लोके मुनिभिः द्वेर्महार्द्धिके ॥

साक्षात् सिद्धि समादिष्टा इह जन्मेऽपि देहिनाम् ।
शू ये तत्वविदे क्षेत्रे मन्त्रा बुद्धत्वमादिशेन ॥

अन्ते कलियुगे काले शान्ति तत्त्वान्ते गते ।
मन्त्रा सिद्धिं न गच्छेयु' क्षिप्रमर्त्थाभिकांक्षिणाम् ॥

तस्मिं काले प्रयोगेन विधिदृष्टेन कर्मणा ।
साधयेन्मन्त्रतन्त्रज्ञ शासनेऽस्मि मुनिर्वरे ॥

ध्रियते तथागते सिद्धि उत्तमा क्षिप्रसिध्यते ।
मध्यकाले तथा सिद्धि म यमा त उदाहृता ॥

युगान्त कालमासाद्य अधमा सिद्धिरुच्यते ।
युगे शोभने काले वियत्योत्पतन तथा ॥

सिद्धिश्च सर्वमन्त्राणां निर्दिष्टा लोकनायके ।
तदा काले जिनेन्द्राणां कुलाद्य तत प्रसिध्यति ॥

मध्ये पद्मकुले सिद्धि युगान्ते वज्रकस्य तु ।
प्रणिधानवशात् केचित् मन्त्रा सिद्धया त सर्वदा ॥

अवलोकितेशो मञ्जुश्री तारा भकुटी च यथवान् ।
सर्व माणिचरा यक्षा सिद्धयन्ते सर्वकालत ॥

रागिणो ये च मन्त्राद्या प्रयुक्ता सर्वदैवतै ।
सिद्धयन्ते कलियुगे काले लोकेश ये मुनिभिर्दिना' ॥

मोक्ता ऽैरमनुजै दानवै र्दैर्यक्षराक्षसै' ।
ऋषिभिर्गरुडैश्चापि पिशाचैर्भूतगणैर्ग्रहैः ॥
मानुषामानुषाश्चैव कामधातुसमाश्रितै. ।
महर्द्धिकै पुण्यवद्भिश्च क्रूरकर्म सुदारुणैः ॥
शक्रब्रह्मतथारुद्रै ईशानेन तथापरै ।
विष्णुना सर्वभूतैस्तु मन्त्र मोक्ता महर्द्धिका' ॥
तेऽपि तस्मि युगान्ते वै सिद्धि गच्छन्ति जापिनाम् ।
क्रूरकर्मै तथा सिद्धि तस्मि काले महद्भये ॥
वश्याकर्षणभूतानां क्रव्यादानां महीतले ।
दृश्यते नि फला सिद्धि परलोकान्तगर्हिता ॥
अत एव जिनेन्द्रेण तस्मि काले महद्भये ।
मञ्जुघोषसमादिष्टः सत्त्वानुग्रहतत्परः ॥
विनश्यन्ति तदा सत्त्वा मन्त्ररूपेण जापिनाम् ।
शासनेऽस्मिन् प्रसन्नानां त्रिरत्नेष्वेव पूजकामिति ॥

आर्यमञ्जुश्रियमूलकल्पाद् बोधिसत्त्वपिटकावतंस-
कात् महायानवैपुल्यसूत्रात् त्रिंशतिम
विधिनियमकालपटलविसर
परिसमाप्त इति ॥

---

अथ त्रयस्त्रिंश पटलविसर ।

अथ खलु भगवां शाक्यमुनि मर्वावत शुद्धावासभवनमव लोक्य, मञ्जुश्रियं कुमारभूतमामन्त्रयते स्म । त्वदीये मञ्जुश्री कल्पराजे निर्दिशसमाख्याते धर्मधातरवाशतथागतगर्भधर्मधातुनिष्प-न्दानुचरिते महासूत्रवररत्नपटलविसरे तथागतगुह्यवरमनुज्ञाते मन्त्र वधसाध्यमाने निमित्तज्ञानचिह्नकप्रमाणा तन्त्रिसाधनोपयिकानि सर्वभूतरुतविताानि असाधारणमन्त्रसंज्ञानिर्माणानि भवन्ति ॥

शाब्दिक ज्ञान इत्युक्त अशाब्दिक चैव कीर्त्यते ।
व्यतिमिश्रं तथा युक्तिम न्त्राणा त्रिविधा क्रिया ॥

दिव्यशब्दसमायुक्ता अनित्या थेप्रयोजिता ।
अपशब्दापगता नित्य सस्कारार्थार्थभूषिता ॥

अवहि: सर्वसिद्धा ते आर्यमन्त्रा' प्रकीर्त्तिता ।
नित्य पदार्थहीन तु तत् त्रिधा परिभिद्यते ॥

गुरुलघु तथा म यैः वर्णैश्चापि विभूषिता ।
सा भवेन्मन्त्रदेवी तु स्वरच्छन्दविभूषिता ॥

सस्कृतासस्कृतं वाक्य अर्थानर्थं तथा पर ।
धात्वर्थो तथा युक्ति' गतिम न्त्रार्थभूषिता ॥

विकल्पबहुला वाचा म न्त्राणां सर्वलौकिका ।
एकद्विकवर्ण तु न्त्रं साधयितव्य ॥

त्रिचतुःपञ्चषष्ठ वा सप्तमं चाष्टम तथा ।
नवम दशमं चैव वर्णाना सिद्धिरिष्यते ॥

दशाक्षरसमायुक्ता वर्णानां हेतुनाम् ।
यावद्दशगुणा ह्येते वर्णा दृश्यन्ति महीतले ॥

शताक्षर विंशतिकं यावदेकाक्षर भवेत ।
एतत्प्रमाणैर्वर्णैस्तु ग्रथिता मन्त्रसम्पदा ॥

पदैश्चतुर्भि सयुक्ता मन्त्राः सर्वार्थसाधका: ।
ज्येष्ठा प्रवरा ह्यायो मन्त्रा ये जिनभाषिता: ॥

स तु मध्यमा अधमा + + तथा ।
तथात्मजैर्जिनपुत्रैस्तु भाषिता ते तु मध्यमा ॥
अधमा ये तु ये मन्त्रा भाषिता गरुडादिभिः ।
निकृष्टा कथिता मन्त्रा भाषिता नैरृतैस्तु ये ॥
दशाष्टसप्तविंश वा यावदभ्यधिकं शतम् ।
तत्प्रमाणं तु मन्त्राणां आर्याणां जिनभाषिताम् ॥
एकद्वित्रिवर्णं तु सहस्रार्द्धं वर्णतो भवेत् ।
यावत्प्रमाणं तु मन्त्राणां बोधिसत्त्वैः प्रकाशिता ॥
तदक्षरे पदविन्यस्त मन्त्रयुक्तिमुदाहृता ।
छन्दांसि स्वरयुक्ताना शास्त्रार्थार्थभूषिता ॥
वचनं सुप्रयुक्तं वै तन्त्रयुक्तिसमन्वितम् ।
भवेत् कदाचित्कालात् सिद्धिः शब्दस्वरवियोजिता ॥
मुद्रायुक्तं तु शब्दैस्तु मूर्धनाकूष्मान्तताल्वकैः ।
दन्तोष्ठकण्ठतः शब्द विसृत साधनं क्रिया ॥
अव्यक्तनिनिवृत्तं तु सुप्रयुक्तमुदाहृतम् ।
सम्पूर्णं वाक्यतः शब्दं सम्प्रयुक्तं साधयिष्यति ॥
विधिभ्रष्टं क्रियाहीनं शब्दार्थश्च वियोजितम् ।
मन्त्रं न सिद्ध्यते क्षिप्रं दीर्घकालमपेक्षते ॥
अवन्ध्य तस्य सिद्धिस्तु न वृथा कारयो जपी ।
अन्यजन्मेऽपि दृश्यन्ते मन्त्रसिद्धिरनुत्तमा ॥
तस्य मन्त्रप्रभावेन चिरकालाच्च जापिनाम् ।
अन्यैर्ये कुरुते कर्म समन्त्रा मन्त्रविनो जनाम् ॥
निकृष्टा सर्वमन्त्राणां लौकिका ये समानुषा ।
सर्वभूतैस्तु ये प्रोक्ता मन्त्रा ये च समत्सरा ॥
तेषां त्र्यक्षरा प्रोक्ता एकद्विकत्रिसङ्ख्यकम् ।
त्रिविधैः म्लेच्छभाषैस्तु देवभाषप्रकीर्तितैः ॥
ग्रथिता पद्भियुक्ताश्च व्यतिमिश्रा शब्दतः सदा ।
सहस्रं चाष्टशतं अष्ट च यावदेकं तु वर्णतः ॥

हकारबहुला ये च मन्त्रा फट्कारार्थहुङ्कृता ।
एते मन्त्रा महारौद्रा तेजवन्ता महाजसा ॥
प्राणापरोधिना सत्त्व क्रूरमन्त्रसुयोजिता ।
तस्मान्न कुर्यात् कर्माणि पापकानि विशेषत ॥
न जापी वर्जयेद् यस्मात् मुनीभिर्वर्जिता सदा ।
उभयार्थेऽपि सिद्ध्यन्ते मन्त्रा शान्तिकपौष्टिका ॥
क्षणेन कुर्वते सर्वे कर्मा सावन्ति भाषिता ।
सुजप्ता मन्त्रा तेने तेजवन्ता महर्द्धिका ॥
शान्तिकानि च कर्माणि कुर्यात्तां जिनभाषितैः ।
पौष्टिकानि तु सर्वाणि कुर्यात् कौमुदे कले ॥
कर्मा पापका सर्वे आभिचारे प्रयुज्यते ।
आभिचारकसर्वाणि कुर्याद् रक्तकल्लेन तु ॥
निर्दिष्टा कारणार्थस्तु यथै द्रेण प्रकाशिता ।
सत्त्वानां हितार्थाय मन्त्रमाहात्म्यमुद्भवम् ॥
कथित त्रिप्रकार तु त्रिकल्पेनैव सर्वत ।
ये तु अष्ट समास याना कुमारेण मुनिना स्वयम् ॥
तेषु सिद्धस्त्रिधा यान त्रिप्रकारा समोदिता ।
उत्तमा मध्यमा नीचा तत् त्रिधा परिभिद्यते ॥
शान्तिक पौष्टिक चापि आभिचारुकमिष्यते ।
नैवत्र मन्त्रसिद्धिस्तु नायुक्तैकल्पहता ॥
मन्त्राणां सिद्धिमाहात्म्य आभिचारुक यज्यते ।
एतत् कर्म निकृष्ट तु सर्वज्ञैस्तु गर्हितम् ॥
न कुर्यात् कल्पमानोऽपि कर्म प्राणोपरोधिकम् ।
केवल तु समास्यात कर्ममाहात्म्यवर्णित ॥
तन्त्रयुक्तविधिर्मन्त्रैः कर्मविस्तरविस्तर ।
कर्मराजे इहाक्त त अन्यतन्त्रेषु दृश्यते ॥

अशेषा महाशेष विशार्द्धेन गुणीकृतम् ।
तदसङ्ख्य प्रमाण तु कथित लोकनायकै ॥
सङ्ख्यो दश सङ्ख्यामित्याहु तदसङ्ख्य गुणीकृतमिति ।
तत परेणापि तथा + + + + + + + + ॥

अमितात् सहस्रगुणित त लोकं परिकीर्त्यते ।
लोकात् परेण महालोक महालोकाद्‌ गुणीकृतम् ॥
ततत्सस्तमगमित्युक्त तमसा ज्योतिरुच्यते ।
ज्योतिषो महाज्योत्स्ना गुणीकृत्य महाराशिस्तदुच्यते ॥
महाराश्या महाराशिरित्युक्ता राश्ये गम्भीरमुच्यते ।
गम्भीरा स्थिरमित्याहु स्थिरात् स्थिरतरं व्रजेत् ॥
ततः परेण बहुमत्या बहुमत स्थानमुच्यते ।
स्थान स्थानतर त्याहु, गणितज्ञानसूरताः ॥
महास्थान ततो गच्छेन्महास्थानमितमिष्यते ।
मिताच्मितसमं कृत्वा महार्थ तत् परिकीर्त्यते ॥
महार्था सुतुतस्थान ततो गच्छेन्महार्णवम् ।
महार्णवात् प्रथममित्याहु प्रथमात् प्रथमतर हि तत् ॥
प्रथमे श्रेष्ठमित्याहु श्रेष्ठाज्ज्येष्ठा तमुच्यते ।
ज्येष्ठान्मन्नरसा नाम तदचिन्त्य परिकीर्त्यते ॥
अचिन्त्य भचि त्याथिन्यतम घार घोरात् राप्तमिष्यते ।
राद्यात् परेण निम्यस्ता निम्यस्तपरत, शुभम् ॥
शुभात् परेण महाचेत महाचेता चेतमिष्यते ।
चेतो चित्तविक्षेप अभिलाप्य तदुच्यते ॥

अभिलाप्या अनभिलाप्यास्तु विश्वर च मुदाहृतम् ।
विश्वात् परेण महाविश्व, अस्वर तु तदुच्यते ॥

अस्वरान्महास्वरस्थान यवनोऽधिगावतस्तथा ।
श्रेयस शान्तिमित्युक्त स्थान गणितपारगैः ॥

अनेन विधियोगेन कल्पराजेन सिद्धिताम् ।
वाराता सर्वमन्त्राणा सर्वकल्पमुदाहृतम् ॥
सम्मताऽस्य तु मञ्जुश्री कल्पराजे इहोत्तमे ।
ये केचान्यकल्पविज्ञाना लौकिका लोकसम्मता ॥
निमित्तज्ञानचरिता ज्योतिषज्ञानचिह्निता ।
निमित्तज्ञानचरिता ग्तावैव शुभाशुभा ॥
सर्वभूतरुतश्चैव चरित चित्तचिह्नितम् ।
धातुवायतम द्रव्य + + + + + + + + ॥
इङ्गित शकुनमित्याहु रव यथातुकेया तथा ।
गणित व्याकरण शास्त्रं शस्त्र चैव क्रमो विधि' ॥
अध्यात्मा च चिकित्स्य सर्वसत्त्वहित सुखम् ।
हेतुनीति तथा चा य शब्दशास्त्र प्रवर्त्तितम् ॥
छन्दभेदाऽथ गा र्व गन्धयुक्तिमुदाहृता ।
ते मया बोधिसत्त्वेन सत्त्वानामर्थाय भाषिता ॥
पुराह बोधिसत्त्वाऽस्मि सत्त्वानां हितकारणा ।
भाषिता ते मया पूर्व ससाराणववासिनाम् ॥
ससारगहने का ता चिरकाल उषितो ह्यहम् ।
यथा वैनयसत्त्वाना तथा तत्र करोम्यहम् ॥
यथा यथा च सत्त्वा वे हित कर्म समादधः ।
तथा तथा करोम्येषां हितार्थ कर्म शुभाल्यम् ॥
विचित्रधर्मोऽन्यथा सत्त्वाना हितयोनय ।
विचित्र कथने तेषा विचित्रार्थयानिदूषिता ॥
विचित्रकामसयुक्ता नानार्था शास्त्रवर्णिताम् ।
तं तथैव करोम्येषा विचित्रां रूपसम्पदाम् ॥
अह तथा वेषधारी स्या विचित्राङ्ग निजानिजाम् ।
हिताय च सत्त्वाना विचित्र रूप विर्षिपे ॥

मयेव कथित पूर्वं तस्माद् ग्राह्या तु जापिभि' ।
यावन्ति केचिल्लोकेऽस्मि ज्योतिषज्ञानकौशला. ॥

अन्ये वा तत्र कौशल्या नीतिहेतुमहेतुना ।
न्यायशास्त्रसुसम्बद्धा सत्त्वानां हितकारया ॥

मयेव कथित तत् सर्वं ग्राह्यते मन्त्रजापिभिः ।
सिद्धिहेतुस्य मार्गं दर्शित तत्त्वदर्शिभि' ॥

सर्व ह्यशेषसिद्धान्त यथोक्त मोक्षकारणम् ।
तेनैव कुर्यान्म त्राणा मार्गं सिद्धिकारणा ॥

न वृथा कारयेज्जापी मन्त्रयुक्ति ह्यशेषत' ।
सर्वे लौकिका मन्त्रा उत्तमाश्च प्रकीर्तिता ॥

लोकोत्तरास्तथा दिव्या सर्वेष्वेव प्रयोजयेत् ।
न मिथ्य कारये चित्त न दूष्ये तत्र मन कदा ॥

सर्वे पूज्यास्तु मन्त्रा वै समयज्ञ प्रकीर्तिता ।
शासनेऽस्मि तथा सास्तु बुद्धानां समताहिते ॥
निर्दिष्टा जिनपुत्राणामाकृष्टाश्च प्रवेशिता ।
मण्डले मुनिचन्द्राणा समयज्ञ इहोदिता ॥

अनन्यास्ते सदा मन्त्रैरानीता त्रिशनागया ।
न नये परमन्त्राणां नापि मात्रज्ञमाचरेत् ॥

अनार्या य तु मन्त्रा वै अनन्यास्ते परिकीर्तिता ।
यावन्ति लौकिका मन्त्रा अभव्या जापसम्भवा ॥

सक्लेशा ह्यमार्गान्ता अनन्यास्त तु जापिभिः ।
न वृथा कारये चित्त कोपने रोपसंयुतम् ॥

शोचन न चाभक्ति न कुर्यात् कर्म वृथाफलम् ।
तदायत्त हि चित्तस्य न दद्यात् सन्तति कश्चित् ॥

एकम वस्तु युक्तिस्थ जप नित्य समाहित. ।
लभते फलमशेष तु यथोक्त विधिना विधेः ॥

अथ चतुस्त्रिंशः पटलविसरः ।

अथ खलु भगवान् शाक्यमुनिः पुनरपि तं शुद्धावासभवनोपरि
लोकस्य मञ्जुश्रियं कुमारभूतमामन्त्रयते स्म । शृणु मञ्जुश्री ! त्वं
यमुद्रां च सरहस्यं परमगुह्यतमं अपराऽप्रश्राद्धसत्त्वेन गतशासने
ऽनभिप्रसन्ने असमयानुज्ञातविर नवशानुबन्धनकरे अकल्याणमित्रप
रिगृहीते पुण्यकामे दुष्टजनसम्पर्कव्यतिमिश्रिते पापमित्रपरिगृहीते दूरी
भूते बुद्धधर्माणां निष्फलीभूते कल्पेऽस्मिन्नाचार्यानुपदेशे अनभिषिक्त
तत्र कुमार ! परमगुह्यतमे मण्डले अल्पसत्त्वे तथागतकुले असमन्ते जने
अप्रकाश्य सर्वधनानां अनुवर्त्तिनां अश्राद्धानां बुद्धधर्माणां दूरी
भूता हि बोधये ॥

न तस्य दापयेन्मुद्रां तन्त्रं चैव न दर्शयेत् ।
प्रमादान्मोहसम्मूढः लोभाद्वा यदि दापयेत् ॥
न सिद्ध्यन्ते तन्त्रमन्त्रा वै विपरीतस्य जापिनः ।
असाक्षि यस्तु दापयेन्मुद्रां स तत्रैवमन्यथा ॥
सिद्धिं न लभते क्षिप्रं शरीरेणापि हीयते ।
सौम्यानां श्राद्धचित्तानां समये तत्त्वदर्शिनाम् ॥
तन्त्रम् उपवृत्तानां मुद्रां तु प्रकाशयेत् ।
त्रिरत्नपूजका ये च प्रसन्ना जिनशासने ॥
विधिसंयोगस्थानां तेषां मुद्रां प्रकाशयेत् ।
बोधिचित्तविधिज्ञानां बोधिचित्तविभूषिताम् ॥
नित्यं बोधिमार्गस्थां तेषां मुद्रां प्रकाशयेत् ।
तन्त्रमन्त्रप्रयुक्तानां समये स्वपरापराम् ॥
महाबोधौ प्रतिष्ठानां तेषां मुद्रां प्रकाशयेत् ।
प्रसन्नानां जिनपुत्रेषु तेषु श्रावकखड्गिणाम् ॥
दृष्टधर्मफलं येषां तेषां मुद्रां प्रकाशयेत् ।
अविकल्पितधर्माणां श्राद्धानां गतिमत्तराम् ॥

न सा विद्यति तत् स्थान यत्राकृष्टा न सिद्ध्यति ।
भवाग्र्या वीचिपर्यन्त लोके वा वशति तत्त्रम् ॥
यत्रातिष्ठा न चाकृष्ट असा या या न विद्यते ।
न सा सविद्यते कश्चित् सत्त्वा यो निवर्तितुम् ॥
महर्द्धिका बोधिसत्त्वापि आकृष्य ते विधिवादिना ।
असम शा बोधिसत्त्वापि दशभूमिसमाश्रिता ॥
रक्षाविधानमेतु वा कर्मसिद्धि निवारितुम् ।
अभ्य' सर्वभूतानां मन्त्रमुद्रसमाश्रुता' ॥
सर्वभूतानां या हि मन्त्रे समाश्रित ।
मुद्रा प्रयोगयुक्ता वे ह्येते रक्षासमुद्भवा ॥
उक्ति सर्वमन्त्राणा सर्वमन्त्रेषु दृश्यते ।
मन्त्रान सर्वमन्त्राणा अन्योन्यसमाश्रिता' ॥
रूपजापविविमार्ग होमकर्म प्रयुज्यते ।
अतो जात तथासिद्धि' मुद्रा मन्त्रेषु दृश्यते ॥
जापिना नियमयुक्त सन्ना तेषु प्रतिष्ठित ।
सिद्ध्य न सर्वमन्त्रा वै अत्र यं मुनिनां वचः ॥
वचनं सर्वबुद्धाना अन्य तथागत हिते' ।
। । । । । । । । मन्त्रतन्त्रेषु युक्तित' ॥
कारित बोधिसत्त्वता अशेष स त्वमद्य्या ।
एतत् कुमार! मञ्जुश्री ! कथयामि पुन' पुन ॥
अशेषमन्त्रमक्तिस्तु मद्रा तत्र हितोन्यम् ।
तां व दे कल्पराजेऽस्मिन् नरतारिक फलसम्भवम् ॥
हित गुह्यतम लोके मद्रातन्त्र समुद्धितम् ।
ततोऽसौ यतिर्मां श्रोमा सद्दिण्णुर्वालरूपिण ॥
रूपसिमामुखो भूत्वा कुमारो विश्वसम्भव' ।
बोधिसत्त्वा महावीर्य दशभूमिसमा त. ॥

अथ पञ्चत्रिंश पटलविसरः ।

अथ खलु भगवां शाक्यमुनिः पुनरपि बुद्धावलोकनं नाम तथागतमहामुद्राकोशसङ्ग्रहणी नाम समाधिं समापद्यते स्म । समनन्तरसमापन्नस्य भगवतः शाक्यमुनेः ऊर्णाकोशात् महारश्मिर्निश्चचार । अनेकरश्मिकोटीनियुतशतसहस्रसङ्ख्येयपरिवारा सा रश्मिजाला अनेकां बुद्धक्षेत्रनियुतशतसहस्रां सर्वबुद्धां सञ्चोद्य पुनरपि भगवतः शाक्यमुनेः ऊर्णाकोशेऽन्तर्हिता ॥

समनन्तरसञ्चोदिताश्च सर्वबुद्धा भगवन्तः गगनस्वभावात् समाधिं समापद्य शुद्धावासोपरि गगनतले प्रत्यष्ठात् ॥

अथ भगवां शाक्यमुनिः सर्वबुद्धावलोकने मञ्जुश्रियं कुमारभूतमामन्त्रयते स्म । शृणु मञ्जुश्रीः मुद्राकोशपटलविधानं भविष्यं सर्वबुद्धैरधिष्ठितम् ॥

अथ मञ्जुश्रीः कुमारभूतः भगवतश्चरणयोर्निपत्य सर्वबुद्धां प्रणम्य भगवन्तं शाक्यमुनिं तथागतमेतदवोचत् । तत् साधु भगवां निर्दिशतु सर्वतथागतमुद्राकोशपटलं परमगुह्यतमं यस्येदानीं कालः समयो तस्य भविष्यति । बहुजनहिताय बहुजनसुखाय लोकानुकम्पायै महतो जनकायस्यार्थाय हिताय सुखाय देवानां च मनुष्याणां च सर्वसत्त्वानां समासतः भविष्यति सुखविपाकम् ॥

अथ भगवां शाक्यमुनिः एवमुक्तो भगवता मञ्जुश्रिया कुमारभूतेन सर्वबुद्धावलोकनं समयमुद्रा नाम तां सर्वाभिसत्त्वां समाहूय सर्वमन्त्रोपेतं मुद्रां समयसमाधि च सर्वमन्त्राणां तथा सर्वकर्माणां समुच्चय सर्वदुर्गतिनिवारणं सर्वभावात् समाश्वास्य सर्वेषु समग्रता एवं सर्वे निर्वाणं प्रतिष्ठाप्य सर्वदुर्गतीनां भगवां अथ मुद्रापटलविधानं भाषते स्म ॥

शृणु कुमार ! मञ्जुघोष ! कथ्यमानं पटलमादृताम् ।
गात्रं पञ्चशिरा भाति महामन्त्रा च या मता ॥

त्रिशिख द्विशिखा एकशिखा तथा च एकाक्षरम् ।
सर्वे च पञ्चशिखा मया प्रोक्ता जिनेन तु ॥

पञ्चम स्वास्तिका ख्य पष्ठ भद्र उच्यते ।
सप्तम पूर्णमि याह स वज्राङ्कुशोभना ॥

अष्टम मणिनिर्दिष्टा ख्याता नाथैर्जितारिभि ।
नवम छत्रनिर्दिष्ट दशम शक्तिरुच्यते ॥

एकादश तु सत्कुद्रा सम्पुट तु समादिशेत् ।
द्वादश कमगि युक्तो त्रयोदश तु गदस्तथा ॥

चतुर्दश खड्गमित्याख्या घटा पञ्चादशस्तथा ।
षोडश पाशाम युक्त अङ्कुश सप्तदश स्मृत ॥

अष्टादश भद्रपीठ तु ऊनविंशतिपीठकम् ।
विंशन्मयूरासन प्रोक्तो एकविंशस्तु पट्टिशम् ॥

एकलिङ्ग द्विविंश तु द्विलिङ्गो विंशसत्रिकम् ।
चतुर्विंशस्तथा माला पञ्चविंश धनुस्तथा ॥

विंशत्षडधिक प्रोक्त नाराचे तु प्रकल्पिता ।
सप्तविंशतिमित्याहु समलिङ्गे प्रवर्तिता ॥

अष्टाविंशस्तथा शल्य ऊनत्रिंशश्च मुद्गर ।
तोमर त्रिंशमित्याहु एकत्रिंश त दक्षिणम् ॥

द्वात्रिंशत तथा चक्र त्रयस्त्रिंशत् पद्ममुच्यते ।
चतुस्त्रिंशस्तथा स्तम्भ पञ्चत्रिंशे तु सागरम् ॥

कलश षड्त्रिंशति प्रोक्ता सप्तत्रिंशे तु मौशलम् ।
अष्टत्रिंशे त पर्यङ्क ऊन चत्वारिंशत पद्मम् ॥

चत्वारिंशतिमि याह धर्मशङ्खमनाहतम् ।
चत्वारिंश स एक च शङ्खा परिकीर्तिता ॥

द्वितीया बहुमता प्रोक्ता तृतीया समनोरथा ।
चतु र्थी जननी ख्या प्रज्ञापारमिता मिता ॥

पञ्चमं पात्रमित्याहु सम्भद्रा द्विपदोत्तमा ।
तोरण षष्ठमित्युक्त सप्तम तु सुतोरणम् ॥

भप्रमं घोर्पार्नार्दिष्ट जपश न्ा नत्रम पत्र ।
पञ्चाशद् भेरिमित्युक्ता धर्मभेरि त माषिता ॥
द्विपञ्चाशद् गजमित्याहु नरस्नात्रिरस्तथा ।
चतु पञ्चाशमिति ज्ञेय मुद्रा तद्वाचारिणा ॥
पञ्चम केतुमित्याहु षष्ठ नागशरस्त ॥ ।
सप्तम परशुर्निर्दिष्ट अष्टम न्ाकपूजिता ॥
ऊनषष्टिस्तथा ज्ञेया पिण्डपात्र समागत ।
षष्टिश्चैव भवेद्युक्ता लाङ्गल तु समासत ॥
एकषष्टिस्तत' पश्च द्विषष्टि नन्नमुन्यत ।
त्रिषष्टिः कथितं लाके धर्मचक्र प्रवर्तितम् ॥
चतु'षष्टिस्तथा ज्ञेय पुण्डरीक समामत ।
पञ्चषष्टिस्तथा विन्द्याद् वस्त्र मुन्मुत्तमम् ॥
षट्षष्टि तथा व'वा वज्रमुद्रा तु कीर्तना ।
सप्तषष्टिस्तथा लोके कु तमाहुर्मनीषिण' ॥
अष्टषष्टिस्तथा कुर्याद् वज्रमण्डलमुदाहृतम् ।
ऊनसप्ततिमेव स्यात् शतघ्नेति प्रकीर्तिता ॥
सत. सप्ततिक विन्द्यान्नादामुद्र समासत ।
एकसप्ततिमित्याहुर्विमानं मुद्रवर शुभम् ॥
द्विसप्तत्या समासेन स्य दन स म्होन्यते ।
शयनं लोकनाथानां त्रिसप्तत्या समागताः ॥
पञ्चसप्ततिराख्यातश्चतु सप्ततिरस्तथा ।
अर्धेनन्द्रं च वीणा च उभो मुद्राउदाहृतो ॥
षट्सप्ततिम लोके मुद्रा पद्मालया भवेत ।
सप्तसप्ततिम श्रेष्ठ. मुद्रा कुवलयोद्भवा ॥
अष्टसप्ततिम मुद्रा नमस्कारेति उदाहृता ।
नवमं नवतिसङ्ख्या तु उभौ मुद्रो शुभात्तमौ ॥

सम्पुट यमलमुद्रा च सहस्र्या नवतिम भवन ।
एकनवतिमित्याहु: पुष्पमुद्रा उदाहृता ॥

द्वितीया वलयमुद्रा तु तृतीया भूपयेन सदा ।
चतुर्थो ग धमुद्रा तु पञ्चमी दीपना स्मृता ॥

षष्ठथा साधन त्रि यात सप्तम्या आसने स्मृता ।
अष्टममाह्वानन प्रोक्त नवम त विसर्जनम ॥

शतपूर्णस्तथा विन्यात् मुद्रा सर्वरमिश्राम् ।
साधिक शतमि याहुर्महामुद्रा इति स्मृता: ॥

उष्णीष लोकनाथानां चक्रवार्त सदा गुरो ।
त मुद्रं प्रथमत: प्रोक्ता द्वितीया सितमुद्रता ॥

तृतीया मूलमुद्रा तु मञ्जुघोषस्य दृश्यते ।
चतुर्थी धर्मरागस्था धर्ममुद्रेति लभ्यत ॥

पञ्चमी मद्यमि याहुर्महामुद्रापि सा भवेत ।
षष्ठी तु भूतशमनी स यकाद्दसङ्ग्या ॥

सप्तमी बोधिसत्त्वानां अष्टमी तु सरागिनाम ।
मुद्रा पद्ममालेति महामुद्रां तु तां विदु: ॥

वरत्वा सर्वमुद्राणां स त्राणां च सलोकिकाम् ।
महाप्रभावा महाश्रेष्ठा ज्यष्ठा त्रैलोक्यपूजिताम ॥

अष्टमी सम्प्रयुञ्जीत मुद्रा त्रिभुवनालयाम् ।
मुद्राणां कथिता सङ्ख्या असिम त त्र महोद्भवा ॥

शतमेक तथा चाष्ट सहस्र्यामद्रेषु कल्पिता ।
एतत्प्रमाण तु सम्बुद्ध पुरा गीत महीतले ॥

निर्दिष्टे शासने शास्तु प्रचरिष्यति देहिनाम् ।
आन्नी नाथन करे न्यस्तमुभयाग्रा करे स्थितौ ॥

अन्यो याङ्गुलिमात्रेऽस्य सम्मिश्रा च पुनस्तत ।
उभौ करौ समायुक्तौ पञ्चचूलाङ्गुचिह्नितो ॥

कुर्यात् क्षेमतरं लोके नाकेण पापमुक्तनम् ।
प्राणोपरोधिन कर्म सर्वमुद्रैस्तु वर्जितम् ॥

न कुर्यात् रमसा न निषिद्ध लोकमानसे ।
भत सर्वगार्भन्ते योजयेन्त्रनितमत्तमम् ॥

लौकिका ये च म त्रा वे तथत्र जिनभाषिता ।
ता प्रयुञ्जीत मुद्रेऽस्मि शक्तिना सुसमाहित ॥

दृष्ट्वा मुद्रवर घोरं नश्यन्ते सर्वनन्दिता ।
पिशाचास्ताश्कमेता पूतना मह मातरा ॥

बालाग्रहविरूपाश्च बालकाना प्रपीडना ।
नश्य ते सर्वदुष्टा वे ये चान्ये क्रूरकर्मिणा ॥

तदेव हस्त [त्र] यस्त शक्तिकाकारसम्भवम् ।
विपरीतसम्पुटाकार [त] या याङ्गुलिमिश्रितम् ॥

तदेव सम्पुटमित्याहुः सम्पुद्रा विगताद्विषा ।
अनेन कारयेत कर्म म त्रेणारक्षणं तु ॥

पिथयेत् सर्वदिशा कृत्स्ना दिशाबन्ध तदुच्यते ।
एष मुद्रा महारक्षा सम्पुटीकृत्य तिष्ठति ॥

नश्य ते सर्वदुष्टा त्र ये चा [न्ये] अहितानि वै ।
देह रक्षयते सर्व परिवार चापि गोचरे ॥

अशेषं रक्षते चक्र यत्र जापी वसत् सदा ।
न तस्य पातक किञ्चित आह्त चापि सम्भवेत ॥

क्षेम सुभिक्षमारोग्य परचक्रभय कृत ।
उभौ करौ समाश्रित्य विपरीत तु कारयेत् ॥

दक्षिण तु भ [वे] क्र [मे] वामग्रतानक' सदा ।
अ या न्यमिश्रिता ह्यतो फग्गमित्याहुर्जिनोत्तमा ॥

निवारयति दुष्टानामराणा पापसम्भवम् ।
उपद्रुत्याभरैर्युक्ता सिद्धि + + + + + ॥

किं पुनर्मानुषे लोके ये चान्ये पिशिताशिनाम् ।
तस्य हस्तो नि गस्तौ उभौ कृत्वा तु त समौ ॥

वामपाणापरि गस्य दक्षिण त स्य तथा ।
तदेव अङ्कुशाकारं मध्यमाङ्गुलितर्जनी ॥

मध्यमं पर्वमाश्लिष्य तर्जनी कारयेदङ्कुशम् ।
मूलमन्त्रप्रयुक्तोऽयमङ्कुशोऽयं प्रचोदित ॥

क्षिप्रं कारयते कर्मा जापिभिर्जन्मनीषितम् ।
आनयत क्षिप्र देवे दूरा ब्रह्माद्या सशक्रकाम् ॥

प्रयुक्तो मुद्रराट् श्रेष्ठ अङ्कुशाकर्षण शुभः ।
तदव हस्तौ सम्प्रिय विपरीताग्रपिण्डिकम् ॥

मध्यमानामिकौ नाम्य अङ्गुल्यौ वामकरागतौ ।
तर्जनी कनीयसा चापि उभौ तदन्यदक्षिणा ॥

दक्षिणा हस्तनिर्दिष्टा मध्यमानामिकनामितौ ।
विपर्यस्त ततो न्यस्त श्लिष्टो अङ्गुष्ठधारितौ ॥

तदेव भद्रपीठं तु कथिता मुद्रवरा शुभा ।
आसनं सर्वबुद्धानां कुद्रशक्तिनिवारणम् ॥

योजिता सर्वमन्त्रैस्तु जिनाग्राणां कुलसम्भवैः ।
स्थापिता सर्वबुद्धानां बोधिसत्त्वां महर्द्धिकाम् ॥

सदेवके च लोके वै मुद्रा निश्चलकारिका ।
तदेव भद्रपीठं तु मध्यमाङ्गुलिमाश्रिताम् ॥

उपरिस्थानाविन्यस्तौ मध्यानामिति धारितौ ।
तदेव पीठनिर्दिष्टा मुनिसिंहैर्जितारिभिः ॥

उभौ हस्तौ तथोन्मिश्र अङ्गुलीभिर्विवेष्टयेत् ।
ततो वेणिसमाधश्च कन्यसाङ्गुलिसूचिकाम् ॥

मङ्कान्य मध्यमतः क्षिप्रं पद्मपत्रायतोज्ज्वलाम् ।
उभयोरङ्गुष्ठयोर्मिश्र स्थापयेत् स्थितक सदा ॥

न स्थितो न निपन्नश्च व धेन्मुद्रां मुखोद्याम् ।
न दक्षिणामुखमास्थाय नापि पश्चान्मुखोत्थितः ॥
न चोर्ध्वे नाप्यधश्चैव मुद्राबन्ध तु कारयेत् ।
उदड्मुखः पूर्वतश्चापि विदिशेष्वेतेषु तेषु वै ॥
बन्धये मुद्रमन्त्रज्ञ मन्त्रं स्मृत्वा तु चक्रिणम् ।
एषा विधिमत श्रेष्ठा सर्वमुद्रेषु बन्धने ॥
अत ऊर्ध्वं प्रवक्ष्यामि मुद्रा साधिकविंशमम् ।
उभौ करौ समायुक्तौ कुर्यादङ्गुलिमिश्रितौ ॥
मध्यम तु तत' शूर्यं अङ्गुलीभि' समादिशेत् ।
मध्यपर्वविधिन्यस्त शून्याग्रं कन्यसीभितम् ॥
कारयेन्नित्यमन्त्रज्ञो अङ्गुष्ठौ कुञ्चिताश्रितौ ।
त्रिशून्याकारसयुक्तो पट्टिश विदुर्बुधाः ॥
एष मुद्रवर' क्षिप्र परमन्त्रासि न्छिन्दिरे ।
परमुद्रां तथा भिन्द्यात् दुष्टसत्त्वनियोजिता ॥
त्राशयेत् सर्वभूतानां ग्रहमातरपूतनाम् ।
करोति कर्मवैचित्र्यं क्षिप्रमानयते शिवम् ॥
रुद्रेण भाषिता ये मन्त्रा विष्णुना ब्रह्मणा स्वयम् ।
तां विच्छेद मन्त्रज्ञो विधिदृष्टेन कर्मणा ॥
मुद्रेणानेनैव युक्तेन पट्टिशेन महात्मना ।
मन्त्रेण चैव युक्तस्थो जिनवक्त्रसमुद्भवे ॥
करोति कर्मवैचित्र्य छेदभेदक्रियां तथा ।
परसत्त्वकृतां दुष्टा नाशयेत् तामशेषत' ॥
तदेव हस्तौ सवेष्ट्य मध्यानामिकमुन्छ्रितौ ।
उभौ करौ समायुक्तौ लिङ्गाकारसमुद्भवौ ॥
चतुरङ्गुलसयुक्त लिङ्गमुद्रमिति मतम् ।
महेश्वरो देवपुत्रो वै आत्ममन्त्र च मुद्रिणम् ॥

कथयामास तन्त्रे वै आकृष्टो मुनिना पुरा ।
अन्येषां चात्मनो मन्त्रा मुद्रां चैव सविस्तराम् ॥

प्रकाशयामास आकृष्ट समयेऽस्मिं कल्पमुत्तमे ।
एतन्मुद्रवर ह्यत्र लौकिकेषु प्रकल्प्यते ॥

यावन्ति केचिन्मन्त्रा वे रुद्रप्रोक्ता महीतल ।
तेषामधिपतिर्ह्यग्रो मुद्रोऽयमेकलिङ्गितः ॥

बोधिसत्त्वप्रभावेन मञ्जुघोषस्य धीमतः ।
आनीतो मण्डले + + नाम कर्मप्रसाधकः ॥

यावन्ति केचिद् दुष्टा वै पर्यटन्ते महीतले ।
ग्रहाः क्रव्यादपिशिताश्च मातराः कटपूतना ॥

तेषां निवारणार्थाय रुद्रनिग्रकृतेषु वै ।
पुनरेतन्मुद्रवर ह्युक्त बलिकर्मेषु वै निशा ॥

करोति सर्वकर्मा वा बुद्धाधिष्ठानकः यथा ।
तथैव तद्विध कृत्वा द्विलिङ्गसमुदाहृत ॥

तथैव मालमङ्गुल्यै स माला परिकीर्तिता ।
तदेव माला सङ्क्राम्य सम्पुटाकारसम्भवम् ॥

तर्जन्यावुभौ श्लिष्य कुर्याद्धनुसन्निभम् ।
अङ्गुष्ठौ पीडयेन्मुष्टो धनुर्मुद्रा स लक्ष्यते ॥

तदेवमङ्गुलिं कुर्याद् दक्षिणाकरनिसृता ।
वाम तर्जनी मुष्टौ निष्पीड्यन्त तु पर्वाणि ॥

नाराच मुद्रमित्युक्तः समलिङ्ग पुनर्वदे ।
उभौ हस्तौ ततः कृत्वा अ यान्यामृतापण्डितौ ॥

दक्षिणाकरमङ्गुष्ठ उच्छ्रितां लिङ्गसम्भवम् ।
समलिङ्ग त विदु कल्पे शासनेऽस्मि विशारदा ॥

तदेव हस्तौ उभो कृत्वा अ यो यामृतमङ्गुलम् ।
उभौ तर्ज य संयोज्य शूलाकार तु कारयेत् ॥

गतन्त्रलमिति प्रोक्तं मन्त्रदर्पानुशासनम् ।
तदेव हस्तौ विन्यस्य पाणी जन्त्रा उभौ पुनः ॥
अङ्गुष्ठौ स्थितकौ कृत्वा मुद्गरं समुदाहृतम् ।
तदेव मुद्गरमीषच्चालयेत् करसम्पुटं ॥
तोमरं कथितं ह्यग्रं मुद्रं शत्रुनाशनम् ।
उत्पलं तु ततः कृत्वा अनामिकाङ्गुलिभिस्तदा ॥
अधस्तादङ्गुष्ठयोर्मध्ये विन्यस्तं चाग्रदर्शितम् ।
एतं दण्डमिति प्रोक्तं विवृते वज्रमुच्यते ॥
समौ कृत्वा ततस्तेषामङ्गुलीनां समं ततः ।
उरे दत्त्वावसव्यं वै क्षिपेत् त्वा पद्ममुच्यते ॥
उभौ सम्पुटौ कृत्वा हस्तौ विन्यस्तशोभनौ ।
अङ्गुलीमङ्गुलीभिश्च अन्योन्याग्रश्लेषितौ ॥
उत्थितानामिमङ्कान्य कुम्भमुद्रमुदाहृतम् ।
तदेव मुष्टिं संयोज्य तर्जन्यौ पुनरुच्छ्रितौ ॥
कुर्यात् खखराकारं घणिकाकारमुद्भवम् ।
एतन्मुद्रं समाख्यातं खखरस्यारिमर्दना ॥
तदेव खखरं ईषत्क्वनास्य तु शोभनम् ।
कुर्यात्ङ्गुष्ठविन्यस्तं कलशं तदिहोच्यते ॥
खचितं तु पुनः कृत्वा तर्जन्यानामिसम्भवम् ।
चतुर्भिरङ्गुलीभिः कुर्यां मुशलाकारसम्भवम् ॥
मुद्रं मुशलमित्याहुः मन्त्रज्ञानसमन्विता ।
तदेव हस्तौ विन्यस्तौ मध्यमानामिकौ अधः ॥
उपरिष्टात् तेष वे नित्यं न्यस्त दक्षिणावामवेष्टितम् ।
सवेष्ट्य अङ्गुष्ठया यत्नो कन्यसा तर्जनी तु ताम् ॥
समं तात् पर्यङ्कमाकारं मुद्रामाहुस्तथागता ।
एतत् पर्यङ्कमुद्रेति ख्यातं लोके समन्ततः ॥

अनया मुद्रया युक्तो मन्त्रयुक्तस्तथा पुन ।
सर्वजिनमुक्तैस्तु वज्राब्जकुलमुद्भवै ॥
एतैर्मन्त्रै प्रयुक्ताऽय सर्वकर्मकर शिवम् ।
य च मुद्रास्तथा प्रोक्ता मुगलाद्या कुलसम्भवा ॥
सर्वं वै क्रोधराजस्य यमा तस्यह शासन ।
उग्रा महरणा ह्येते सत्त्ववैनेयनिर्मिता ॥
बोधिसत्त्वप्रभावेन ऋद्धया कुर्वे ततस्तदा ।
सर्वं वैनेयदुष्टानां कुम्भाग्रा मुद्रभाषिता ॥
तद्वेव हस्त विन्यस्त पटहाकारसम्भवम् ।
आवन्धेदङ्गुलिभिर्युक्त सर्वाभिश्च स्वेणिकाम् ॥
वेणिकां कृत्यमङ्गुष्ठैस्ततो न्यस्य करे पुन ।
मध्ये प्रादेशिनी कृत्वा उच्छ्रिताग्रं तु कारयत् ॥
एतत् पटहनिर्दिष्ट मुद्रा दृप्तनिवारणी ।
तत्रैव हस्तौ विन्यस्तो अञ्जली सुप्रयोजिता ॥
उभौ तर्जन्य मङ्कोन्य कुण्डलाकारशोभनां ।
अङ्गुष्ठे ते अध कृत्वा अङ्गुष्ठौ नामितो उभौ ॥
प्रविष्टौ म यपुटान्तस्थौ शङ्ख भवति शाभनम् ।
एतद्धर्मसङ्ख वै वरमुद्र प्रकाशितम् ॥
मन्त्रैर्मुनिवरोक्तैस्तु प्रयुक्त सर्वकामिका ।
कराति कर्मवैचित्र्य सर्वत्राणिपभागिनाम् ॥
निर्नाशयति सर्वास्ता मलमन्त्रप्रयोजिता ।
शङ्खमापूरयेज्जप्त विद्याराजमहर्द्धिकैः ॥
निर्विषोऽपि भवेत् क्षिप्र या ज तुात्वपमूर्च्छित ।
चत्वारिंशति समाख्याता मुद्रा श्रेष्ठा महर्द्धिका ॥
अत ऊर्ध्व प्रवक्ष्यामि मुद्रालक्षणसम्भवम् ।
तद्वेव हस्तौ विन्यस्तौ अङ्गुल्याग्रसवर्गिकौ ॥

भूयो दामोटयेद् यत्नादवसव्य तु कारयेत् ।
अधस्तात् सर्वत कृत्वा शङ्कलेति उदाहृता ॥
एषा मुद्रवरश्रेष्ठा, सर्वदुष्टार्थव धनी ।
मन्त्रैस्तैरेभिग्मयुक्ता मुनिमुख्यार्थभाषित ॥
सर्वा बन्धयते भूता ग्रहमातरकश्मलाम् ।
तदेव हस्तौ सङ्कोन्य मुक्त्वा वेणि समुच्छ्रयेत् ॥
तदेव विधिना बध्वा अन्येनाङ्गुष्ठम यथो' ।
मध्यपर्वे समाश्लिष्य उभयाभ्य कर पुन ॥
दत्त्वाभमुख ह्यग्नेर्वह्निमन्त्रसुयाजित' ।
आवाहयेच्छिखिन होमे अग्निकर्मेषु सर्वदा ॥
क्षिप्रमाह्वयते वह्नि, मुद्रेणानेन योजिता ।
विसर्जयेदनेनैव मन्त्रेण तर्जन्याग्रविमिश्रितै' ॥
अङ्गुष्ठे नित्यमाश्लिष्टे विसर्ज्य वह्निदैवतम् ।
मुद्रा बहुमता ह्येषा अग्निकर्मसमाधिका ॥
आह्वानयति देवानां यदृच्छ स त्रजापिनो ।
एषा बहुमता मुद्रा बन्धाधिष्ठानवर्णिनी ॥
करोति कर्मवैचित्र्यं सयुक्ता मन्त्रमुत्तमैः ।
तदेव हस्तौ एकस्थौ सम्पूर्णामङ्गुल्माश्रितो ॥
कुर्यादाकोशमञ्जल्या श्लथ वर्तुलसम्भवम् ।
परिपूर्ण ततः कृत्वा कुड्मल पद्मसम्भवम् ॥
मनोरथ तु त विन्द्या मुद्रां सर्वार्थसाधिकाम् ।
एषा मुद्रा वरा श्रेष्ठा पुरा गीता तथागतैः ॥
सत्त्वानां हितकाम्यार्थं मञ्जुघोषे नियोजिता ।
मनसा काक्षते सत्त्वो यो हितार्थं मनोरथम् ॥
तूर्ण तत् साधयते क्षिप्र मन्त्रैर्युक्ता महर्द्धिकै' ।
एषा मुद्रा वरा श्रेष्ठा मनोरथेति स उच्यते ॥

एषा मुद्रवरा श्रेष्ठा सर्वकर्मप्रसाधिका ।
क्षिप्र साधयते मन्त्रां द्रव्यां चैव मविस्तराम् ॥
एषा मुनिच द्रेण चन्द्राभा सुप्रवर्त्तिता ।
चन्द्रा पद्मकुले म त्रा तेनाय सुप्रयोजिता ॥
करोति कर्मवाचित्र्य मितवर्णाप्रतगम्भवा ।
तदेव हस्तौ सशुद्धो उभो अङ्गुलिमाश्रितौ ॥
षड्भिरङ्गुलिमाश्लिष्टो पुस्तकाकारसम्भवौ ।
उच्छ्रितौ वर्त्तलो कृत्वा कन्यसाङ्गुष्ठकौञ्चितौ ॥
एषा मुद्रा वरा प्रोक्ता प्रज्ञापारमितामिता ।
जननी सर्वबुद्धाना मोक्षार्थं तु नियोजिता ॥
साधयेत् सर्वकर्म वै शान्तिपुष्ट्यर्थयाजिता ।
तदेव हस्तौ वि यस्तो दक्षिण वामतोपरि ॥
कृत्वा नाभिदेशे वै कालम्ब निम्नमुन्नतम् ।
उभौ हस्तौ तदाश्लिष्य स मुद्रा पात्रमच्यते ॥
पात्रं जननी मुद्रौ जिनम त्रै सुयोजितो ।
करोति कर्मवैचित्र यथेष्ट मन्त्रविचक्षणै ॥
तदेव हस्तावुद्धृत्य कुर्यात् तर्जनिमुच्छ्रितो ।
मध्यमाङ्गुलिमग्र तु नामित मीपितोरणम् ॥
तदेव उच्छ्रितो कृत्वा कथयामास सुतोरणम् ।
तदेव बध्वा तदन्यान्यं घापनिादिष्टमष्टमम् ॥
उच्छ्रितोत्तममङ्गुष्ठौ जपशब्द विदुर्बुधा ।
तदेव उच्छ्रितौ हस्तौ अङ्गुल्याग्रां सुकुञ्चितो ॥
सर्वैरङ्गुलिभिर्मुक्ता विरला केशसम्भवा ।
भेरी त विदुर्बुद्धा धर्मभेरीति उच्छ्रतौ ॥
तदेव हस्ततल उर्ध्वं दक्षिण वामतोन्छतम् ।
अधस्तात् कारयित्वा तु गजाकार सुयाजिनम् ॥

दक्षिण मध्यमाङ्गुल्यां कराकार तु कारयेत् ।
एतद् गजमुद्रं तु निर्दिष्टं ससारपारगै ॥

एषा मुद्रा महामुद्रा सम्बुद्धैस्तु प्रकाशिता ।
करोति कर्मा सर्वास्तास्तामशेषां लोकपूजिता ॥

दक्षिणं हस्तमुद्यम्य अभयदत्त परिकल्पयेत् ।
गृहीत्वा मणिबन्धे तु वामहस्तेन मुन्नतम् ॥

मध्यमां तर्जनी स्पृष्ट्वा अङ्गुष्ठ मध्यतो स्थितम् ।
मध्यपर्वाश्रित युक्तं वरहस्त तदुच्यते ॥

एतन्मुद्रवर श्रेष्ठ आदिबुद्धैस्तदोदितम् ।
अभय सर्वसत्त्वाना मुद्रा बध्वा ददौ जपी ॥

मन्त्रैर्मुनिमतैर्युक्तः क्षिप्रमर्थमसाधक ।
तदेव हस्तौ सयुक्तौ सम्पुटाकारशोभनो ॥

उच्छतौ मध्यमाङ्गुल्यौ मुद्रा तद्व्रतचारिणी
तदेवमङ्गुलिभिर्वेष्ट्य अङ्गुष्ठौ उपरि स्थितौ ॥

न्यस्य पर्वतले न्यस्त केतुमित्याहु मुद्रिणम् ।
तदेव मूर्च्छिताग्रे क शुभो निर्दिष्टमुद्रिणम् ॥

उभो तर्जन्यसमायुक्तो अन्योन्याग्रविमिश्रितौ ।
सङ्कोच्य पर्वतोऽङ्गुष्ठाः कन्यसीति समुच्छ्रितौ ॥

तदेव परशुनिर्दिष्टा मुद्रा सर्वार्थसाधिका ।
सङ्कोच्य पुन. सर्वा वै सा मुद्रा लोकपूजिता ॥

तदेवमुच्छ्रत कुर्यान तर्जन्याग्रमूचिकम् ।
भिण्डिपालस्ततो मुद्रा लाङ्गल चक्रतो गतम् ॥

तर्जन्यो वक्रत कृत्वा लाङ्गलो मुद्रमुत्तमम् ।
एतत् षष्टिमुद्राणा कथित विधिना पुनः ॥

सर्वे ते प्रहरणा मुद्रा सयुक्ता मन्त्रमीरिता ।
सर्वां विघ्नकृता दोषा ग्रहकूष्माण्डमातराम् ॥

सर्वराक्षसमुख्यानां बालसर्वानुत्रासिनाम्।
निर्नाशयति सर्वास्तां मुद्रां मद्दरणोद्भवाम्।'

षष्टिमेतं तु मुद्राणां लक्षणं समुदाहृतम्।
अतः पर प्रवक्ष्यामि मुद्राणां विधिसम्भवम्॥

तदेव हस्तौ विन्यस्तौ पद्माकारसमुच्छ्रितौ।
प्रसारिताङ्गुलिभि' सर्व मुद्रां पद्म इति स्मृतम्॥

एषा मुद्रवरा ख्याता सन्यस्ताब्जकुलोद्भवाम्।
यावन्त्यब्जकुले मन्त्रा सयुक्ता ते शुभोदया॥

क्षिप्रकर्मकरा ख्याता मुद्राधिष्ठानमुद्भवा।
सर्वा साधयते मन्त्रां यावन्त्यब्जकुलोदया॥

मुद्राणां पद्ममुद्रेयं मध्यमे समुदाहृता।
उभौ हस्तौ समायुक्तो तर्जनीभि समुच्छ्रितो॥

मध्यमाङ्गुलिभिर्युक्तं विन्यस्ताकारसम्भवम्।
अङ्गुष्ठौ न्यस्य वै तत्र मध्यमाङ्गुलिपर्वयो'॥

तदेव कथित वज्र कन्यसं मुद्रमुत्तमम्।
यावन्ति वज्रकुले मन्त्रा ते साध्यानेन मुद्रिता॥

सिद्ध्यन्ते क्षिप्रतो युक्ता विधिना सम्प्रकीर्तिता।
सयुक्तैः साधक कर्म यः साध्य साधयेत् सदा॥

तस्य सिद्धिर्भवेन्नित्यं उत्तमाधममध्यमा।
सर्वे च लौकिका मन्त्रा, सिद्ध्यन्ते ह्यविकल्पतः॥

उभौ हस्तौ समायुक्तौ मध्यमाङ्गुलिमुच्छ्रितौ।
सङ्कोच्यानामिकाङ्गुष्ठो कन्यसौ सूचिमाश्रितौ॥

उभौ तर्जनिसंश्लिष्टौ मध्यपर्वाग्रकुञ्चितौ।
मध्यमौ सूचिसमौ न्यस्तौ चक्राकारसमुद्भवौ॥

एतत्तु धर्मचक्र वै मुद्राराजमिहोदित।
धर्मराजैस्तथा ह्युक्तो धर्मचक्रश्च वर्त्तितुम्॥

शान्तिचक्र तदा वज्रे मुनिचन्द्रोऽथ सप्तम' ।
त्रिमलां विच्छेदजापेन मुद्राराजेन योजिता ॥
चक्रिण्यो ये च उष्णीषा लोचनाविद्यमुत्तमा ।
भ्रुकुटीपद्मकुले तारा मामकी चापि वज्रिणे ॥
सिध्यन्ते धर्मचक्रेण मुद्राराजेन योजिता ।
समस्ता लौकिका मन्त्रा विष्णुरीशानभाषिता ॥
तां विच्छेदद्दृष्ट्वा वै जापिनां मुद्रसयुताम् ।
एतन्मुद्रवर श्रेष्ठ धर्मधातुविनि.सृतम् ॥
करोति सर्वकर्म वै सत्त्वानां च यथेप्सितम् ।
धर्मराजेन शान्त्यर्थं मुद्रेयं सम्प्रभाषितम् ॥
अस्मिं कल्पवरे श्रेष्ठे सर्वकर्मप्रसाधिका ।
मुद्रेय धर्मचक्रेति मञ्जुघोषस्य शासने ॥
अग्रिमं सर्वमुद्राणां शान्तिकर्मसु योजयेत् ।
मन्त्रिभिर्लक्ष्यते नित्यं शिवचक्रा तु सम्भवम् ॥
तदेव विन्यस्तौ हस्तौ सम्पुटाकारमुद्भवो ।
श्लथकोशायताङ्गुल्यः उभौ सङ्कुचितौ शुभौ ॥
पुण्डरीकमिति ज्ञेय मुद्रा सर्वार्थसाधका ।
तदेव हस्त निक्षिप्य त्यज्य मध्यायताङ्गुलिम् ॥
प्रसारिता वराकारं वरदं मुद्रमुच्यते ।
उभौ हस्तौ पुनः कृत्वा अङ्गुलीभि' समन्ततः ॥
बध्वा च वेणिकाकार मुद्रैषा रज्जुमुच्यते ।
पुन. प्रसारयस्तदेक तु दक्षिण करमुत्तमम् ॥
कुर्यात् सूचिकाकार मध्यतर्जनिमङ्गुलौ ।
ईषत् सङ्कुचिताग्रं तु अङ्गुलीनां नतोत्तमम् ॥
स्थितिकां कारयेत् तत्र सुन्यस्त तर्जनी तु तम् ।
कुर्यात् सङ्क्षेपिते तत्र अनामिकापर्वनिश्रिता ॥

मुद्रेय कुन्तनिर्दिष्टा बहुधा लोकनायकैः ।
तदेव हस्तौ विन्यस्तौ उभौ तर्जन्यसूचितौ ॥
उभौ मुष्टिसमं कृत्वा अङ्गुलीभिः समं पुनः ।
तदेव मुद्रसमाख्याता वज्रदण्ड मनीषिभिः ॥
तदेव हस्तौ सयोज्य सम्पुटाकारकारितम् ।
विन्यस्तामङ्गुलिमञ्जल्यमन्योन्याश्लेषमाश्रितम् ॥
उभौ अङ्गुष्ठमाश्रित्य शतघ्नामुद्रमुच्यते ।
तत' कृत्वा तुभौ हस्तौ समन्तान्निम्नसम्भवौ ॥
अञ्जलिं तु ततो कृत्वा नाथायानससम्भवम् ।
मुद्रेय भेरीति ख्याता त्रिषु लोके हितार्थिभिः ॥
सन्तारयति भूतानां महासंसारसागरात् ।
तदेवाञ्जलिमुत्सृज्य चित्रहस्ततलावुभौ ॥
विमानमुद्रमित्याहु ऊर्ध्वसत्त्वनयानुगाः ।
तदेव हस्तौ सङ्कोच्य स्यन्दन तदिहोच्यते ॥
त्रियानगमन श्रेष्ठ रतो ह्युक्तो नुतार्थिभि' ।
नयते सर्वभूतानां जापिनां मन्त्रसम्पदाम् ॥
उत्तमायानमाश्रृत्य ययुबुद्धगत तु तम् ।
तदेव हस्तौ उ ग्र-य उभौ कृत्वा पुनस्तत ॥
कुर्याच्चित्रतल शुद्ध वेदिकाकारसम्भवम् ।
एतन्मुद्रवर श्रेष्ठं लोकनाथै सुपूजितम् ॥
शयन सर्वबुद्धानां जिनपुत्रै. समुदाहृतम् ।
यत्रातीतास्तु सम्बुद्धा शान्ति जग्मुस्तदाश्रिता ॥
निर्वाणधातुसन्यस्ता यत्रारूढाशयानुगा ।
स एषा मुद्रमिति ख्याता शयन लोकनायकम् ॥
तदेव हस्तौ विन्यस्तौ मश्लिष्टयाङ्गुलिभि' समम्
सम्पुटाकोशविन्यस्त तर्जयेऋ तु दक्षिणम् ॥

कुर्याद् वक्रतो ह्यग्र अर्धचन्द्रं स उच्यते ।
उभौ हस्तौ पुन कृत्वा दक्षिणाङ्गुष्ठमुष्टित' ॥
वामहस्तास्ततो मध्ये अङ्गुलीभि समोचितैः ।
बध्वा मुष्टिं कराग्रे तु दक्षिणाङ्गुष्ठमिश्रितः ॥
तं दक्षिणेरेव समायुक्तैरङ्गुलीभि' पुटीकृते ।
कन्यसां विसृतां कृत्वा वीणमुद्रा उदाहृता ॥
उभौ हस्तौ पुन कृत्वा आकाशौ विरलाङ्गुलौ ।
उभावङ्गुष्ठयोर्मध्या उभौ तर्जनिमाश्रितौ ॥
एषा षड्भालया मुद्रा सम्बुद्धैः कथिता जगे ।
उद्धृताङ्गुष्ठकौ नित्य पुन' कुवलयोद्भव ॥
मुद्रा च कथिता लोके सम्बुद्धैर्द्विपदोत्तमैः' ।
तदेवमञ्जलिं कृत्वा प्रणामाकारजगद्गुरुम् ॥
सा नमस्कारमुद्रेय सर्वलोकेषु विश्रुता ।
तदेव मुद्रा विष्टभ्य हस्तौ यमलसम्भवौ ॥
एषा यमलमुद्रेय त्रिषु लोकेषु विश्रुता ।
ईष मूलतो हस्तौ अङ्गुष्ठौ च सुपीडितौ ॥
सा भवेत् सम्पुटा मुद्रा शोकायासीवनाशनी ।
एता मुद्रास्तु कथिता ये सर्वे प्रहरणोद्भवाः ॥
पुष्पाख्या शयनयाश्च वान्यान्या ग्रहनामका ।
सर्वे सर्वकरा युक्ता मन्त्रै सर्वैस्तु भाषितम् ॥
न तिथिर्न च नक्षत्र नोपवासा विधीयते ।
सयुक्ता मुद्रमन्त्राश्च क्षिप्र कर्माणि साधयेत् ॥
जापिनस्तपसा युक्तो जप्तमात्रो विचक्षणः ।
मुद्रा मन्त्रप्रयुक्ता न असाध्य किञ्चि न विद्यते ॥
उभौ हस्तौ पुन कृत्वा अञ्जल्यान्योन्यसक्तकम् ।
कन्यसानामिकाङ्गुष्ठौ पार्श्वतो न्यस्तौ धूपमुद्रा उदाहृता ॥

आधाराञ्जलियोगेन तत्र यावीगन् भावयत् ।
सामान्या बलिमुद्रा तु उक्ता लोकागमि' ॥
मध्येषु पुष्पविन्यस्त यथागम्भवता नित्ये ।
दत्त भवति मन्त्राणां नालकर्मेषु सर्वेषु ॥
दक्षिणेनाभय हस्त कृत्वा च नामकरण ते ।
मणिबन्धनयोगेन ग्रार्भ कर्दभिणम् ॥
एषा ते सर्वमन्त्राणां गन्धमुद्रा उदाहृता ।
दक्षिणाकरमुष्टौ तौ अङ्गुष्ठौ मध्यमौ सदा ॥
सूच्याकार तत. कृत्वा दीपमुद्रा उदाहृता ।
अनामिकाङ्गुष्ठयोरेव अक्षसूत्रात् मस्थितम् ॥
कन्यसां प्रसार्यतो नित्य मध्यमां तस्य पृष्ठत ।
तर्जनीं कुञ्चितां न्यस्य अक्षमुद्रेति उच्यते ॥
गर्भाञ्जल्यास्ततो यस्य अक्षसूत्र स म त्रवित् ।
जपेद् यथेष्टतो मन्त्र क्षिप्र सिद्धिवरप्रदम् ॥
शोभनं सर्वमुद्राणामेष दृष्टविधि. सदा ।
अग्रेर्दक्षिणहस्तेन अभयाग्रं तु कारयेत् ॥
अभिमुख ज्वलने स्थाप्य तर्जनीं कुञ्चयेत् सदा ।
अङ्गुष्ठ च करे न्यस्य मध्ये कुञ्चितमस्थितम् ॥
एतदावाहन मुद्र निर्दिष्ट जातवेदस ।
कुञ्चितं तर्जन्याग्र अङ्गुष्ठौ चक्रयोजितम् ॥
विसर्जन सर्वकर्मेषु ज्वलने सम्प्रदर्शयेत् ।
कुर्यात् सर्वमन्त्राणां होमकर्मविचक्षण ॥
मुद्रैरेतैर्भिसयुक्त मन्त्रमम्रो सुयोजित ।
प्रणामाञ्जलिरन्तारिता अङ्गुलीभि सम तत' ॥
कुर्यात् त विपरीत तु अङ्गुष्ठौ च समाश्रितौ ।
बहि सङ्कोच्य तर्जन्यौ मध्यमाभि. समाश्रितौ ॥

एषा मुद्रवरा युक्ता पूजाकर्मसु योजिता ।
प्रणाम सर्वमन्त्राणां मन्त्रनाथ जिनोरसाम् ॥
शोधन सर्वमन्त्राणामासनं च प्रदापयेत् ।
असम्भवेऽपि पुष्पाणां मुद्र बध्वा तु योजयेत् ॥
पूजिता विधिना ह्येते मन्त्रा सर्वार्थसाधिका ।
मुद्राबन्धेन पूजार्थं कृत भवति शोभनम् ॥
द्वितीया चित्तपूजा तु यादृशी पुष्पसम्भवा ।
एष पूजाविधि प्रोक्ता सम्बुद्धै द्विपदोत्तमै ॥
अभावेन तु पुष्पाणां द्विविधा पूज उच्यते ।
सर्वमन्त्रप्रसिध्यर्थं सर्वकर्मेषु योजयेत् ॥
सर्वकर्मकरा मुद्रा सर्वबुद्धैस्तु भाषिता ।
आसने शयने स्नाने पानानुभोजने ॥
शोभने दीपने मन्त्रे स्थाने मण्डलकारणे ।
समय सर्वमन्त्राणामधिष्ठानार्थं तु मन्त्रिणाम् ॥
कथिता लोकनाथैस्तु मुद्रेय सर्वकर्मिका ।
परिपूर्ण शत प्रोक्त मुद्राणां नियमादयम् ॥
अत.परं प्रवक्ष्यामि मुद्रामष्टमतां गताम् ।
तदेव हस्तौ विन्यस्तौ उभौ कृत्वा पुनस्तत. ॥
तथैव प्रदेशिनीं कृत्वा मध्यमा सूचिमिश्रिता ।
नखस्याधस्तात् तृतीये वै भागे ससक्तकारितौ ॥
आकोशामुद्ववावेष्ट्य शून्याकार तु कारयेत् ।
एतन्मन्त्राधिपतेर्मुद्रा शक्रिणस्य महात्मन. ॥
एता एव प्रदेशिन्या सञ्चार्या सममध्यमा ।
शूच्या नखस्य विन्यस्ता संसक्ता च अनामिका ॥
एष उष्णीषमुद्रा वै जिनेन्द्रै' सम्प्रकाशिता ।
तदेव हस्तौ विन्यस्तौ मध्यमाङ्गुलिवेष्टितौ ॥

कन्यसाङ्गुलिसयुक्तौ मुद्रेयं भितमुद्भवा ।
मध्यसूच्या सम कृत्वा रासक्ता च करोरुहौ ॥
निर्मुक्तः कुण्डलाकारा महामुद्रा स उच्यते ।
तामेव प्रदेशि याग्राभिभून्तरेल्पसतरम् ॥
मध्यसूच्यां ततो न्यस्य अधस्तात् प्रसक्तपाणिना ।
पर्वतृतीययोन्यस्तो अङ्गुष्ठौ नखपीडितो ॥
एषा मुद्रा वरा प्रोक्ता मञ्जुघोषस्य धीमत ।
तदेव हस्तो विन्यस्ता अञ्जलीकारसस्थितो ॥
मध्यमाङ्गुलिविन्यस्तौ सूच्यग्रानामित' स्थितौ ।
अङ्गुष्ठौ मध्यमां स्पृश्य अङ्गुलीपर्वसन्निकम् ॥
कन्यसाङ्गुलीभि सूचा कृत्वानामितमुन्नितौ ।
एषा मुद्रा वरा श्रेष्ठा धर्मकोशस्थतां गता ॥
तदेव हस्तो विन्यस्तो विधिदृष्टमसमासतो ।
तदेवमङ्गुलिभि सर्व आपूर्ण कोशसस्थितम् ॥
उभौ हस्तौ विवृण्णीयात् अष्टानाङ्गुलिनावृता ।
अष्टां पुरुषतत्त्वज्ञां चत्वारो युगतां गताम् ॥
तदेव सङ्घमित्याहु' सम्बुद्धा द्विपदोत्तमा ।
स एव मुद्रा सङ्घेति कथ्यते ह भवालये ॥
एषा मुद्रवरा श्रेष्ठा सर्वकर्मप्रसाधिका ।
उभौ हस्तौ पुटीकृत्वा अञ्जल्याकारसस्थितौ ॥
प्रसार्य तर्जनीमेकां दक्षिणां करनि सृताम् ।
सा एष भूतशमनी निर्दिष्टा तत्त्वदर्शिभि ॥
एषा मुद्रा वरा ख्याता सर्वकर्मार्थसाधिका ।
तदेव हस्तौ विन्यस्तो वेणिकाग्र.नावेष्टितो ॥
पिण्डस्थौ सम्पुटाकारो उच्छ्रिताङ्गुष्ठनामितोः ।
एषा सा पद्ममालेति आदिबुद्धै' प्रचोदिता ॥

यापयति धर्मं च देशयति आर्यमञ्जुश्रियं च साक्षात् पश्यति धर्मं शृणोति अनेकान्यपि बोधिसत्त्वशतसहस्राणि पश्यति तांश्च पर्युपास्ते महाकल्पसहस्रं अजरामरणः स्वयंप्रभः भवति । पञ्चस्वेव लिप्यति सर्वबुद्धबोधिसत्त्वाधिष्ठिता भवति तेषां चाधिष्ठानं सञ्जानीते क्षेत्रशतसहस्रं चाक्रामति कायशतसहस्रं चादर्शयति अनेकऋद्धिप्रभावसमुद्गतो भवति आर्यमञ्जुश्रियश्च कल्याणमित्रो भवति नियतबोधिपरायणा भवन्तीति ॥

बोधिसत्त्वपिटकावतंसका महायानवैपुल्यसूत्राद्

आर्यमञ्जुश्रीमूलकल्पात् उत्तमसाधनौपयिककर्मपटल

विसरात् प्रथमः समाप्त इति ॥

---

प्रणम्य शिरसा सम्बुद्ध लोकनाथ प्रभाकरम् ।
दीर्घ निश्वस्य करुणार्द्रा रामरोन ततः पुन ॥

तस्थुरे समीप बुद्धस्य आपृच्छय वरदा वरम् ।
निर्वृते भगवा लोके म त्रयाशे महीतले ॥

सत्त्वाना गतिमाहात्म्य कथ तस्म भविष्यति ।
एवमुक्तस्तु सम्बुद्धो मञ्जुघोष तदाल्पेत् ॥

शृणाहि वत्स ! मञ्जुश्री ! कुमार ! त्व यदि पृच्छसि ।
मया हि निर्वृते लोक शून्याभूत महीतले ॥

निर्वृते धर्मकोशे च श्रावकैश्चिरनिर्वृतैः ।
शास्तु बिम्बस्तथा रूप कृत्वा वै द्विपदोत्तमः ॥

पूजा सत्कारत कृत्वा धूपगन्धविलेपन ।
विविधैर्वस्त्ररश्चान्यैर्मणिकुण्डलभूषणै ॥

विविधैर्भाज्यभक्षैश्च सन्नियाज्य निवेदनम् ।
विविधाकारसम्पन्न यथेष्टाकारकारिणे ॥

तथ + मन्त्रमावर्त्य मत्त्रयानिगति शुभम् ।
आजहार पुर श्रेष्ठ उत्तमा गतियोनय ॥

अ ते बोधिनिम्नरथ शान्ति जग्म गपाविम ।
एवमुक्तस्तु मञ्जुश्रीस्तुष्णा सम्बुद्धवादित ॥

सम्प्रतुष्य तता रोमा बोधिसत्त्वा महर्द्धिक ।
एतत् सर्व पुरा गीत शुद्धावासोपरि स्थितम् ॥

बुद्धाना सन्निधौ बुद्धधर्मचक्रप्रवर्त्तक ।
मन्त्रचक्र तदा वद्ये चिरकालानुवर्त्तिनम् ॥ इति ॥

आर्यमञ्जुश्रियमूलकल्पाद् बोधिसत्त्वपिटकावतसकाद्
महायानवैपुल्यसूत्राद् पञ्चत्रिंशतिम
मुद्रानिर्दिष्टपटलविसर
परिसमाप्त इति ।

## अथ षट्त्रिंश पटलविसर ।

अथ खलु भगवा शाक्यमुनि पुनरपि शुद्धावासभवनमव लोक्य मञ्जुश्रियं कुमारभूतमामन्त्रयते स्म । अपि मञ्जुश्री ! पर मगुह्यतम त्वदीय मूलमुद्रासमत सपरिवार मुद्रालक्षण सर्वकर्मसु चापि योज्य सर्वसम्पत्तिदायक सफल सत्वम त्वानुवर्त्तन सर्वकर्माद्यसाधकम् । सक्षेपत शृणु मञ्जुश्री ! ॥

आदौ तावत् प्रसृताञ्जलि, तर्जन्यानामिकामध्यपर्वतानुप्रविष्टा पृथक् पृथक । सा एषा मञ्जुश्रीस्त्वदीया मूलमुद्रा विख्याता सर्व कर्मिका भवति । तथव हस्तो सगृह्य, अनामिकासहिता तर्जनी मध्य मास्तथा कनिष्ठिकया उ त्तरेग्रास्थिताङ्गुष्ठशीर्ष । अयमपरा मञ्जुश्री स्त्वदीया वज्रमुद्रा उदाहृता । अ योन्यसक्ताङ्गुलिमुष्टिं कृत्वा, मध्य- माङ्गुलि विमुच्य, सूचीकृत्वा, तस्य पार्श्वयोर्वलिततर्जनीयुगलमन्ते न्यसे एषा मञ्जुश्री ! त्वदीयमद्रेय दण्ड भवति । मुद्राया अङ्गु ष्ठयुगल पार्श्वयो र्न्यसेत् । एषा मुद्रा साक्षात् त्व मञ्जुश्री ! तस्मि स्थाने तस्मि करपुटे सान्निध्य समयेनाधितिष्ठसे । अ योन्यसक्ता ङ्गुलिमुष्ट्या प्रदेशिनी मुक्त्वा, अङ्गुष्ठयुगल मध्यत । एषा सा मञ्जु श्री ! त्वदीया अपरा चीरकमुद्रा । प्रसृताञ्जलिपत्रणी कृत्वा, अना मिके तर्जनी मध्यमा तदस्थिताग्रे । इयमपरा मञ्जुश्री ! साक्षादेव त्व मूलमुद्रा उदाहृता । अस्यैव मुद्राया प्रसृता तर्जनीं कृत्वा । एषा सा मञ्जुश्रीस्त्वदीयनेत्रमुद्रा भवति । कन्यसानामिकावर्णाकृतकर पुटमध्यस्थिता मध्यमो वहि त तर्जन्युपरि कुञ्चिताग्रे अङ्गुष्ठाग्रस श्लिष्टाग्रासु । अयमपरा त्वदीया त्वदीया मञ्जुश्री ! वक्रमुद्रा भवति सर्वकर्मिका ॥

एवमनेन क्रमेणैकैकाङ्गुलिमथ मुच उभा अङ्गुष्ठसहिता सर्वे अ ङ्गुलियोगेन एकैक प्रसारये उच्चीकृतदक्षिणाङ्गुष्ठ त्वदीय मञ्जुश्री ! एषा उष्णीषमुद्रा । दक्षिण सङ्क्रान्त्य वाममुत्क्षिप्त ललाटमुद्रा भवति त्वदीया मञ्जुश्री ! । या दृष्ट्वा सर्वे दुष्प्रग्रहा प्रपलायन्ते ॥

एवं भवणो ग्रीवा भुजो हृदयं करौ कण्ठ कटिं नाभि ऊरू जङ्घां चरणौ नेत्रौ वक्त्र जिह्वा चेति, एव दशभिरङ्गुलीभिरनुपूर्वेमु च्छ्रितो अनुपूर्वमुद्रालक्षण भवति । अनुपूर्वं च कर्म करोति । वक्त्रमु द्रया मुखाबन्ध, दष्ट्रमुद्रया दुष्टग्रहमोचन, जिह्वामुद्रया दुष्टवचननि वारण, हृदयमुद्रया नृपतिकोपनाशन, अ य वा सत्त्वं देवासुरं मानुषामानुषाद्या विविधां वा गातेनिश्रितां रुपिताना कोधनाशन भवति ॥

एवमनुपूर्व्या सर्वत सर्वकर्माणि करोति। एवमसङ्ख्येयानि अ नेन क्रमेण मुद्राणि भवन्ति । असङ्ख्येयानि च कर्माणि करोपि त्व मञ्जुश्री ! सर्वथा सर्वमुद्रेष्वेव सर्वकर्माणि भवन्ति ॥

बद्धा ता यैः महावीरैः सङ्ख्यातीतै तथागते ।
महामुद्रा महावीरैर्महाभूमिगतैरपि ॥
यत्र निश्वरकार्याणि षट्त्रिंशाशीतिनिरपञ्चके ।
षष्टिर्नयुतसङ्ख्यायै सर्वलोकोत्तरोत्तरै ॥
सर्वमुद्रान्तर्गताः सर्वे ये चान्या लौकिका क्रिया।
एभिरन्यतमैर्मुद्रै कुर्यात् सर्वार्थसाधनम् ॥
हस्तद्वयेनावबद्धा वै साधनकाले च मण्डले ।
पूर्वसेवाभियुक्तेन होमजापेषु वा पुनः ॥
निषण्णः स्थितको वापि यावदिच्छ जपेद् व्रती ।
महारक्षाविधानेन आत्मनस्य परस्य वा ॥
कुर्यात् सर्वाणि कर्माणि सर्वमुद्रेषु सर्वदा ॥ इति ॥

आर्यमञ्जुश्रियमूलकल्पाद् बोधिसत्त्वपिटकावतसका
महायानवैपुल्यसूत्रा चतुर्विंशतिम
द्वितीयमुद्राविधिपटलविसर
परिसमाप्त इति ॥

---

[एतच्च यो नेऽस्ति मूलस्य पटलविसरस्य त्रिंशत्तमस्य प्रमाणेन तत्र महामुद्रापटलविसरो नाम चत्वारिंशपरिच्छेदः पटलविसरो लिखित उपलभ्यते । स एतस्य चतुस्त्रिंशत्तमस्यैव प्रकारभेदोऽस्तीत्यूह्यते कारणादिकैव योज्यते ।]

अथ भगवा शाक्यमुनि पुनरपि शुद्धावासभवनमवलोक्य मञ्जुश्रियं कुमारभूतमामन्त्रयते स्म । सर्वांश्च बोधिसत्त्वा सर्वसत्त्वांश्च पर्षत्सन्निपतिता । शृण्वन्तु भूतगणा ! सत्त्वा देवपुत्राश्च महर्द्धिका ! अस्ति मञ्जुश्रियः कुमारभूतस्य बोधिसत्त्वस्य महासत्त्वस्य कल्पविसरः समुद्रापटलविसरः नानाप्रकार मन्त्रमन्त्रचर्यानुप्रविष्टाना सत्त्वाना बोधिसम्भारकारण । यथा सिध्यन्ति साधय वा क्षिप्रतरमाकृष्यन्ते सर्वकर्माणि सर्वपा सततं मुद्राणि भवन्ति । ये मुद्रिता क्षिप्रतरं वशा भवन्ति । तं शृण्वन्तु भवन्तो । भाषिष्येऽहं सर्वसत्त्वानामर्थाय । सततं तेषां मुद्राणि भवन्ति ॥

अथ खलु भगवा शाक्यमुनि सर्वबुद्धधर्माणा मुद्रालङ्कारत थागतगुणमाहात्म्यसमुद्रमुद्रा नाम समाधिं समापद्यते स्म । समनन्तरसमापन्नस्य भगवत सर्वतथागता सर्वमुद्रासमयं भाषते स्म । तस्मात् समाधेरुत्थाय सर्वतथागतमुद्रामुद्रित महामुद्रापटलविसरं सर्वमन्त्राणां भाषते स्म ॥

आदौ तावत् सर्वमन्त्रकुलेषु हृदयानि भवन्ति । पूर्वमुच्चारयेद् द्विसप्त एकवारम् । ततो मुद्रा बन्धितव्या, ना यथान्यिति । कतमं च तत् ॥

सर्वतथागताना हृदयम् । जिनजिक् । एष स भाषा । सर्वतथागताना हृदयः सर्वकर्मिकः । तथागतकुले सर्वमुद्रा बन्धितव्या । तत्कर्म समारभेत् । आरोलिक् । अवलोकितस्य हृदयं सर्वकर्मिक पद्मकुले सर्वमुद्रां बध्यता अयं जप्तव्य' सर्वसाधनोपयिक सर्वकर्मसु । वज्रधृक् । एष स भाषा वज्रपाणे हृदयम् । सर्ववज्रकुलेषु च जपता मुद्रा बन्धितव्या । मुमारक । एष सर्वदेवानां सर्वमुद्राव धथ

चतुर्दश तु भवेन्छङ्खा भरी पञ्चादशा स्मृता
पटहो षोडशा ज्ञेयो दुन्दुभि सप्तदशोपर ॥

अष्टादश तथा वद्भमूनविंशत् करणमुच्यते ।
त्रिंशत् परशु निर्दिष्टा सङ्ख्याया तु प्रमाणत. ॥

सितपत्रा तथाच्छत्र उष्णीषाणां प्रकीर्त्तितम् ।
चीवरं पात्रनिर्दिष्टं खखर तु मत्र परम् ॥

कृपा मैत्री तथा प्रज्ञा ध्यानशील तथापि च ।
क्षान्तिदानादिक षट्क निर्दिष्टं लोकनायकै ॥

बुद्धानां कथिता ह्येत षट् पारमिताश्रवात् ।
त्रिंशच्चक्रिणे मुद्रा कथिता लोकपुङ्गवै ॥

एकाक्षरस्य वीरस्य मन्त्राणामधिपतेर्विभो ।
लोकेश्वरस्य विद्यानां कथिताष्टविंशति साधिका ॥

सिताख्या महाश्वेता तथा पण्डरवासिनी ।
भृकुटी च तथा देवी बुद्धानां हृदयोद्भवा ॥

ताराद्या कथ्यते मुद्रा उत्पल तु नियोजयेत् ।
हयग्रीवस्य तु भीमस्य मुद्रा वक्र इति स्मृता ॥

वज्रपाणे तथा मुद्रा त्रिंश एक भवन्ति ते ।
सर्वं प्रहरणा तस्य नानाकारा युधिष्ठिता ॥

चत्वारोऽपि महामुद्रा प्रोक्ता मारमण्डले ।
रुद्रस्य शूलनिर्दिष्टो ॥

ब्रह्मस्याक्षमाल तु विष्णोश्चक्रमितिस्तथा ।
यमदण्डमत परां ॥

एतत् सर्व देवानां सर्वयक्षनराधिपां ।
सर्वभूताना तथा मुद्रा सर्वसत्त्वसमाश्रिता ॥

सरागवीतरागाणां त्रिधा नातु स्थिता परां ।
सर्वलोकसमाहृत्यु त्रिधा स्थावरजङ्गमा ॥

धात्वाख्यामसङ्ख्यया ये सत्त्वा भूतवादिन ।
सर्वेषाणां तु सर्वत्र एकमुद्रादिहोच्यते ॥
एवमष्टशत प्रोक्त शतमेक साष्टमाधिकम् ।
तेषां च गुणविस्तार प्रभाव च इहोच्यते ॥
यथा मनुष्याणां भवेत् सिद्धि संयुक्ता प्र प्रयोजिता ।
करोत्यन्यप्रयोगैश्च अङ्गुलीभि सशोभिता ॥
विन्यस्ता करयोर्मध्ये क्षिप्रमर्थकरा परा ।
तेषामादि वक्ष्ये शृणुष्व भूतिकाङ्क्षिण ॥
आदौ तावच्छुचौ देशे शुक्लवस्त्र शुचाम्बर ।
शुचिकर्मसमाचारो शुचौ देशे सदारत ॥
ब धयेत् प्राङ्मुखा भूत्वा स्थितो स्तूपस्य चाग्रतो ।
नाशिष्याय प्रदातव्य रौद्रकर्मान्तचारिणे ॥
अभय अदाताय समयानुप्रवेशिने ।
भक्तो जिनपुत्राणा बुद्धाना चापि शासने ॥
अनुत्पादितचित्तस्य नादेय मुद्रसम्पदा ।
भक्ताना जिनपुत्राणां बोधिसत्त्वाना च धीमताम् ॥
प्रत्यकबुद्धानार्हतानां पूजितानां ददेत् सदा ।
सुस्थितो बोधिचर्यायामाचार्या बहुमत सदा ॥
सर्वमन्त्रप्रयागेषु + + + उत्कृष्ट सदा ।
तेन मुद्रा तदा देया शिष्यस्याविचिकित्सत ॥
तथा मन्त्रप्रयोगज्ञ शुचिर्दक्ष कुलान्वित ।
आचाया धार्मिको धीमां अभिषिक्ता दृष्टमण्डल ॥
तेनोपदर्शिता मन्त्रा शिष्यो गृह्णीत तन्त्रवित् ।
शिष्येण कार्यस्तथा प्रेमो बुद्धस्येव गुरोस्तथा ॥
अन्यथा न सिद्धि म त्राणा सर्वमुद्रेषु वा सदादिति ।

आदौ तावत् शुचिर्भूत्वा मुद्रा बध्नीयात् मन्त्रमुद्रा । पूर्वं तावत् समयमुद्रा बन्धितव्या । भगवता उष्णीषस्य मुद्रा । उभौ करौ कृताञ्जलिपुटौ अङ्गुष्ठावपि कुञ्चिता कुन्मलाकारौ भगवान् मानवो । अथ भगवतो बुद्धस्य समयमुद्रा । तदेव हस्तौ प्रसारितौ सम्पुटावस्थौ पद्मविकसिताकारौ अवलोकितस्य मुद्रा । उभौ हस्तौ पूर्ववत् करमावेष्टयित्वा अभ्यन्तरभिनताभिरङ्गुलीभिः सन्यस्य तर्जन्योपरिष्टात् निष्पीडयेत् । अथ मञ्जुश्रियः कुमारभूतस्योत्पलमुद्रा । तदेव कनीयसौ सङ्कोच्य पूर्ववत् तर्जन्याभिः अङ्गुष्ठसमौ स्थितिकौ कारयेत् उत्पलकुड्मलाकारं दर्शयेत् । सर्वज्ञमानामय ताराया मुद्रा । तदेव सङ्कोच्य नेत्राकारं कृत्वा, इयं मुद्रा आर्यभृकुट्या । तदेव ललाटे योजयेत् । इयं देव्यदेव्या नेत्रमुद्रा । पुनरपि तं मङ्गुल्याभ्यां समाङ्गुलिभिः सम्न शाकारं कृत्वा मस्तकोपरि स्थापयेत् । इयं भगवतो चक्रवर्तिन एकाक्षरस्य महामुद्रा सर्वकर्मिका । तदेव ललाटे स्थापयेद् बुद्धस्य भगवत हृदयमुद्रा । अक्ष्णा स्थापयेत् । तदेव चक्रवर्तिन नेत्रमुद्रा । तदेव मुखे स्थापयेत् । तदेव विद्याधिपते चक्रवर्तिन एकाक्षरस्य वक्त्रमुद्रा । एव यावत् मणीन्द्र भुजा जानुजङ्घाचरणान्यपि दश प्रकारा भवन्ति मुद्रा अष्टौ महामुद्रा भवन्ति । सर्वकर्मेषु प्रयोक्तव्या । तदेव करसम्पुट मध्यमाङ्गुल्यावेष्टित कृत्वा कन्यसाङ्गुलिमूर्चीकृता उभौ अङ्गुष्ठाग्रय वाकारस्थितौ तर्जन्यौ प्रसारितौ कृतमुद्रा कोशीकृतावुभौ निर्नामिकौ वक्रीकृतपर्वता शुचिन्यस्तौ । इयं भगवता धर्मचक्रमहामुद्रा । तदेवाङ्गुष्ठौ विनाम्य मध्ये प्रसार्य, इयं बुद्धाना चतुर्मारपराजयमुद्रा । तदेव मुद्रा शिरस्योपरि भ्राम्य दर्शयेत् । सर्वबुद्धाना सर्वक्लेशनिषूदन नाम महामुद्रा । तदेव ललाटे स्थापयेत् । महाकरुणा नाम सर्वबुद्धाना मुद्रा । तदेव हृदये स्थाप्य, सर्वेप्सित सम्भुद्धरण नाम महामुद्रा । तदेव मुद्र उभौ न्यसेत् । सर्वविद्याप्रसाधन नाम महामुद्रा । तदेव मुद्रा ग्रीवा सन्न्यसेत् । सर्वानर्थप्रशमनकरी नाम महामुद्रा । तदेव मुद्रा सर्वत भ्रामयेत् । महारक्षार्थसम्पादन नाम महामुद्रा । एवमनेन प्रकारेण अष्टौ महामुद्रा भवन्ति सर्वार्थसाधका । जयोष्णीषस्य मुद्रा भवति । तदेव करपल्लवो वामहस्तप्रसारितो दक्षिणतस्तिर्यक् । इयं सितातपत्रस्य च्छत्रमुद्रा ।

तदेव हस्तौ तथा विन्यस्तौ शिरसि भगवतो जयोष्णीषस्य मुद्रा । उभौ करतलौ सम्पुटीकृत्य मूर्ध्नि स्थापितो उष्णीषाकारो इय भगवतो अभ्युद्गतोष्णीषस्य मुद्रा । तदेव मुद्रां विकाषयेत् । इय ज्वालामालिनोष्णीषमहामुद्रा सर्वकर्मिका सर्वभयेषु च प्रयोक्तव्या सर्वकर्मसु । तदेव मुद्रा उरसि स्थापयेत् । सर्वोष्णीषाणामिय महामुद्रा । तदेव हस्तौ आवेष्टयावस्थितौ सुदृढौ सर्वतथागतानां महाकवचमुद्रा सर्वविघ्नेषु प्रयोक्तव्या । तदेव हस्तौ उभयाग्रावस्थितौ पुस्तकाकारौ उरोमध्ये न्यसेत् । इयं सा सर्वबुद्धानां जनेत्री प्रज्ञापारामिता महामुद्रा । सर्व सत्त्वानां दर्शयेत् । सर्वविघ्नेषु सर्वानर्था प्रशमयति । सर्वार्था सम्पादयति । स्मृतिसञ्जनन कुरुते । तदेव हस्तौ ललाटे न्यसेत् । सर्वबुद्धानामभिषेकः धर्ममहामुद्रा । सर्वाभिषेकेषु प्रयोक्तव्य सर्वसत्त्वानाम् । तदेव हस्तौ चित्राकारेण ललाटे न्यसेत् । सर्वमारविद्रापन नाम महामुद्रा । तदेव हस्तौ सङ्कुचिताकारौ अन्योन्यमङ्कुचितसक्तौ सूच्याकारेण व्यवस्थितौ मध्यमाङ्गुलिप्रसारितौ सूचीकृतचिह्नौ अङ्गुष्ठोद्वन्द्व परामृष्टौ । इय भगवतो तेजोराशेर्महामुद्रा । तदेव मुद्रं शिरसोपरि निधाय इयमपरा तथागतोष्णीषस्य तेजोराशेर्महामुद्रा । तदेव हस्तौ ललाटे स्थापयेत् तेनैवाकारेण इयं भगवता तृतीया नेत्रमुद्रा । तदेव हस्तौ उभयचित्रीकृतौ अन्योन्योपरिस्थितौ दक्षिणार्थमथ वामसम्पुटाकारस्थितौ अन्योन्याङ्गुष्ठकन्यसावेष्टितौ । इय सर्वबुद्धानां महावज्रासनमूलमुद्रा । तदेव हस्तौ मूर्ध्नि दर्शितौ महाबोधिवृक्षमूलमुद्रा । तदेव हस्तौ सम्पुटितौ पृष्ठाकृतौ सर्वबुद्धाना सर्वमारविध्वमनकरी नाम मुद्रा । तदेव हस्तौ अन्योन्यावसक्तौ ग्रीवायां न्यसेत् । सर्वभूतवशीकरी नाम मुद्रा । तदेव कण्ठे धारयेत् । सर्वभूतत्रिलोकनी नाम महामुद्रा । तदेव जानुभ्यां न्यसेत् । सर्वदुर्गतिनिशोधनी नाम महामुद्रा । तदन्तोर्ध्व चिक्षिपेत् । सर्वदेवोत्पत्तिसञ्चिचय नाम महामुद्रा । तदन हस्तौ अभयाकार उभौ सर्वभोगविषय नाम शनिर्नाम महामुद्रा । तदेवाञ्जलप्रकारेण मूर्ध्नि स्थापयेत् । सर्वबुद्धक्षेत्राक्रमणी नाम महामुद्रा । तदेव हस्तो उभौ कर्णे स्थापयेत् । स्फुटाकारेण सर्वनागदमनी नाम महामुद्रा । तदेव हस्तौ उभौ सम्पुट कृत्वा नासाग्रे धारितव्य । सर्वबुद्धानामालम्बनं

नाम महामुद्रा। तदेव मुद्र शिरस्योपरि न्यसेत्। सर्वबुद्धाभ्युद्गतोष्णीषो नाम महामुद्रा॥

एवमनेनाकारेणासङ्ख्यानि भवन्ति सर्वतथागतोष्णीषाणां मुद्राणि। असङ्ख्येयै बुद्धैर्भगवद्भि असङ्ख्येय चक्रवर्तिकुल असङ्ख्येयाश्चक्रवर्तिन। तेषामधिपति एकाक्षरो चक्रवर्त्ती मन्त्राधिप असङ्ख्येयाश्च तथागतोष्णीषराजान. असङ्ख्येयाश्च सर्वमन्त्रेषु कल्पविसरा। तेषां संक्षेपत वक्ष्यते मुद्रा चात्र भवत्येक एव सर्वेषां हृदय एकाक्षर' चक्रवर्त्ती। तस्यैव यो मूलमुद्रा सा इहैवोच्यते मन्त्रेषु निर्दिष्टा महाप्रभावामितौजस। यस्या ब धनादेव सर्वमन्त्राभिमुखा भवन्ति। सर्वबुद्धाश्च भगव त सिद्धिमनुप्रयच्छ ते। अधिष्ठिन्ति च विद्यासाधकं चक्रवर्तिस्मरणादेव मन्त्रनाथ एकाक्षरमद्वितीय दशबुद्धकोटीकुशलमूलार्जितो भवति। चतस्रोऽपि मूलापत्तयोरापन्नस्य भिक्षा त महान्तं नरकोपपत्तिवेदनीय कर्मक्षय गच्छति स्मरणादेव। क पुनर्वादो जपम्। पञ्चानन्तर्याणि च क्षय गच्छन्ति। क पुनर्वादोऽ ये अकुशला स तस्मात् सर्वप्रयत्नेनाय विद्याराजाधिपो एकाक्षर स्मर्तव्यो जप्तव्यः भावयितव्यो मनसि कर्तव्य पूजयितव्य सततमेवाराधयितव्यः। नमः सम तबुद्धानाम्। भ्रूं। एष स मार्षा सर्वोष्णीषाणा तथागतभाषितानां अय मूलम त्र। अनेनैव मन्त्राधिपतिना उष्णीषचक्रवर्तिना तथागतमूर्धजेन सर्वकर्माणि कारयेत्। मुद्रोपेतेन सर्वम त्रेषु लौकिकलोकोत्तरेषु कल्पविसरेषु नियत सिध्यति। मुद्रा चात्र भवति। तदेव हस्तौ सम्पुटाकारौ मध्यमाङ्गुलिप्रसारितौ सर्वत्राङ्गुल्याग्राभ्य तरस्थितौ कुण्डलाभोगाकार इषिदूर्ध्वावनत उष्णीषाकार शिरस्युपरि धारयेत्। इम एकाक्षरचक्रवर्तिने महामूलमुद्रा। अनया सर्वकर्माणि कारयेत्। उत्तमसाधनादिषु योजयत्। सर्वरक्षावरणगुप्तये च प्रयोक्तव्य। नाल्पसाधप्रयोगादिषु प्रयुञ्जान असमयज्ञो भवति। मन्त्राचार्यस्य न सिद्ध्यन्ते। अन्यत्र रक्षाविधाना। शा त्यर्थे च पापक्षपणार्थं नित्यमेव जप्तव्यः शुचौ दशे पर्वतनदीसरित्पतिततटेषु च नान्यस्थानेष जप्तव्यो यत् कारण महाप्रभावोऽय विद्याराजा नान्यदेशेषु जप्तव्य। प्रभावो ... स्फरित्वा जप्तव्य। मुद्रा चात्र

भवति । तदेव हस्तो करसम्पुटाकारौ आवेणिकाङ्गुलिभि कृत्वा म ध्यमाङ्गुलीनां पर्वभाग तृतीय इषिद्रागमयत् । उष्णीषाकारं कार-येत् । इमं भगवतोष्णीषराजस्य महामुद्रा । तदेव हस्तौ सम्पुट कृत्वा ईषदुन्नामयेद्भगवताष्णीषस्य तृतीया महामुद्रा । ॐ गोद्रे वीर स्वाहा । अथ सर्वेषां तथागताना हृदय सर्वकर्मिक सर्वार्थसाधक सर्वानर्थनिवारक । इय स्मरणमात्रणेव सर्वबुद्धाधिष्ठिता भवति । सर्वपापेभ्यो मुच्यते । सप्तम त्राणामुपरि वर्त्तत । बुद्ध एव साक्षाद् द्रष्टव्य' । अनया मुद्र सह प्रयोक्तव्या । सर्वकर्माणि क्षिप्रतर एव करोति । अनेन जप्यमानेन सर्वे एव म त्रा जप्ता भवन्ति । यथा यथा प्रयुज्यते तथा तथा कर्माणि करोति । जापिनस्येच्छया सर्वकर्मि को भवति । तदेव हस्तौ करसम्पुटावस्थो शिरसि धारयेत् त्रिमू र्त्याकारेण । इय भगवता बुद्धाना सर्वेषां द्वितीया हृदयमुद्रा । म त्र चात्र भवति । ॐ गेहरे वीर स्वाहा । इम सर्वेषां बुद्धाना भगवतां हृदयमुद्रा । सर्वकर्मिका सर्वानर्थानिवारिका सर्वार्थसम्पादिका महा प्रभावा सर्वमन्त्रकल्पेषु साधनीया । नात्र विचिकित्सा कार्या । यथा यथा प्रयुज्यते तथा तथा सि यतीति । पुनरपि तदेव हस्तौ सम्पुटा कारावास्थतौ अभ्य तराङ्गुलिभि गाढमावेष्य उभौ तर्ज यौ प्रसारितौ ईषदाकुञ्चयेच्छिरस्युपरि नि याय दर्शयेत् । इम सर्वतथागतोष्णीषाणां महामुद्रा । भवाते चात्र म त्र । ॐ गों व ध स्वाहा । अय सर्वोष्णी षाणां मूलमन्त्र सर्वकार्मिक दिश दिश सर्वव-धेषु प्रयोक्तव्य । सर्व कर्माणि च करोति । साधनजपकाले होमादिषु आत्मरक्षा पररक्षा वा सर्वद्रव्येषु सर्वम त्रकल्पेषु च या युक्तानि लौकिकलोकोत्तरेषु ता यशे षतमनेनैव रक्षा कार्या । महारक्षा कृता भवति । सर्वम त्रेषु प्रयोक्त व्य । सर्वकर्मसु सिध्यति । सर्वतथागतोष्णीषाणां महाचक्रवर्तिविद्या धिपतीनां तेजोराशिसितातपत्रजयोष्णीषप्रभृतीनां यानसाधनविसरप टलानि मुद्रामन्त्राणि तान्यशेषत विस्तरतो प्रयोक्त या सर्वाणि च लौ किकलोकोत्तराणि मन्त्रतन्त्रविसरपटलविसरां अन तानि च मुद्राणि । भवन्ति चात्र मन्त्र. । ॐ ज्वलितोग्रदेह विभि द हु फट स्वाहा । एष

भगवत तेजोराशेर्बुद्धस्य परमहृदयः सर्वतन्त्रेषु सर्वतः सर्वकर्मिक' प्रयोक्तव्यः इति। तदेव हस्तौ यमलिताकारौ मध्यमाङ्गुलिप्रसारितौ तर्जन्या परिवेष्टितौ कटकाकारेण पाशपरिवेष्टितौ उभौ कृतमण्डलाभोगौ। इय च भगवतो बुद्धस्य खङ्करमुद्रा। मन्त्र चात्र भवति। ॐ धुन जितारण हुँ। एष भगवतां बुद्धानां खङ्करकमुद्रामन्त्रः सर्वकर्मसु प्रयोक्तव्यः। यथाभिरुचितेषु सर्वमन्त्राणां प्रबोधनः सर्वभूतानां वशङ्करः सर्वसत्त्वानां समाश्वासकर' सर्वद्रव्याणां समुत्तेजक साधक सर्वपापानां समुच्छोपकः। यथा यथा प्रयुज्यते अयमष्टाक्षरो तथागतम न्त्रः तथा तथा सर्वकर्माणि साधयतीति। तदेव हस्तौ आवेष्टितौ कृत्वा कृतपात्राकारौ। इयं सर्वतथागतानां पात्रमुद्रा तथागतपात्र इत्यवगन्तव्यः। नाभिदेशे धारयेत् सर्वकर्मसमर्थो भवति। भवति चात्र मन्त्रः। ॐ लोकपालाधिष्ठित धर धर धारय महानुभाव बुद्धपात्र स्वाहा। एष भगवतां बुद्धानां तथागतपात्रमुद्रामन्त्र अनेन सयुक्तः सर्वकर्मसमर्थकरो भवेत्॥

करोति कर्मवैचित्र्य गतिमाहात्म्यपूजितम्।
साधयेत् सर्वकर्माणि सर्वमन्त्रेषु भाषिताम्॥

साधकस्येच्छया क्षिप्र करोतीह न सशयः।
येऽपि ताथागती मन्त्रा ये चापि अवलोकिते॥

कुलिशाह्वे मन्त्रमुख्यास्तु नानादेवतपूजिता।
ते सर्वे सिद्धिमायान्ति बुद्धपात्रसमादिता॥

विविधा दूतिगणा ह्यग्रा चेटचेटिगणास्तथा।
नानाकिङ्करमुख्य.स्तु यक्षराक्षसकश्मला॥
प्रेष्या सर्वमन्त्रणां सर्वकर्मकरास्तथा।
विविधैराजमुख्यस्तु देवगन्धर्वयानिजैः॥

सिद्धविद्याधरै' मन्त्रा लोकपालाश्च महर्द्धिकाः।
शक्राद्यै ब्रह्ममुख्यैस्तु सुरश्रेष्ठैश्च धीमतैः॥
मन्त्रा भाषिता ये स्यु सर्वकर्मकरा सदा।
किन्नरैर्गरुडैश्चापि महर्द्धिकैं'॥

# अथाष्टाविंशः पटलविसरः ।

अथ खलु भगवां शाक्यमुनि पुनरपि शुद्धावासभवनमवलो
क्य मञ्जुश्रियं कुमारभूतमामन्त्रयते स्म । शृणु मञ्जुश्री !

सक्षेपतः मुद्राणां लक्षण मन्त्राणां च सविस्तरम् ।
सक्षेपतश्च मण्डलानां विधि समयानुवर्तनम् ॥
+ + + + + + + मुद्रास्थान च तेषु वै ।
सरहस्य सर्वमन्त्राणां सर्वेम त्रेषु मण्डलम् ॥
एतत् सर्व पुरा प्रोक्त सर्वबुद्धैर्महाद्युते ।
मन्त्राणां गतिमाहात्म्य राजत राजकुलेष्वपि ॥
आदिमद्भिः पुरा बुद्धै सत्त्वानां हितकारणात् ।
प्रवर्त्य मन्त्रचक्रश्च धर्मचक्रमनुत्तरम् ॥
शान्तिचक्रानुगा याता भूतकोटि समाश्रिता ।
शान्ति जगाम सर्वे ते बुद्धा लोकमहर्द्धिका ॥
एतत् सर्व पुरा ख्यातमादिमद्भिस्तथागतैः ।
अहमप्यपश्चिमे लोके देशेय त्वयि मञ्जुश्रश्री ॥
एतत् कृत्वा तदा वाच्य बुद्धस्यद महाद्युत ।
कुमारो मञ्जुघोषो वै प्राञ्जलि कृतमग्रत ॥
उवाच वदतां श्रेष्ठ सम्बुद्ध द्विपदोत्तमम् ।
वदस्व धर्म महाप्राज्ञ ! लोकानां हितकारणम् ॥
सक्षेपार्थमविस्तार गुणमाहात्म्यफलोदयम् ।
एवमुक्तस्तु मञ्जुश्रीस्तूर्णीम्भूतस्तदःपुरे ॥
अथ ब्रह्म . . ' श्रीमां कलविङ्करुतस्वन ।
कथयामास तत् सर्व मुद्रामण्डलमस्थितम् ॥
मन्त्र तन्त्र तदा काले शुद्धावासोपरि स्थितो ।
कथयामास सम्बुद्धः शाक्यसिंहो नरोत्तम ॥
शृणु त्व कुमार ! मञ्जुश्री ! मुद्राणा विधिसम्भवम् ।
मन्त्राणां तत्प्रयुक्तीना गुणमाहात्म्यविस्तरम् ॥

आदौ सर्वतथागतिह सत्त्वासत्त्व यथा च तम् ।
आकार चरित चेष्टा सर्वमिङ्गितभाषितम् ॥
द्विहस्तपादयोर्मूर्ध्ना एकहस्ताङ्गुलयोजना ।
गर्भ तं मुद्रमिति प्राक्त आदिबुद्धै पुरातनै ॥
कलश छत्र तथा पद्म ध्वज पताक तथैव च ।
मत्स्य वज्र तथा शङ्ख॰ कुम्भश्चक्रस्तथैव च ॥
विविधा प्रहरणा लोके यावन्तस्ते परिकीर्तिता ।
उत्पलाकारमुद्र च सर्वे ते मुद्रानुमण्डले ॥
अनुपूर्वमिह स्थिता तथैते विधियुक्तमुदाहृता ।
सदृशाकारस्वरूपेण सर्वासां चैव लिखेत् सदा ॥
मण्डले मुद्रमित्युक्त्वा सामान्येष्वेव सर्वतः ।
यथास्थानसुविन्यस्त मुद्रास्ते परिकीर्तिता॰ ॥
मण्डलेष्वेव सर्वेषु स्वाकार चैव योजयेत् ।
चक्रवर्ती तथा चक्र उष्णीषे सितमुद्भवे ॥
सितातपत्र मुख्येन मण्डले तु समालिखेत् ।
बुद्धानां धर्मचक्र वै पद्म पद्मकुले तथा ॥
वज्र वज्रकुले प्रोक्त गज गजकुलोद्भवे ।
तथा मणिकुले कुम्भ नियुञ्ज्यात् सर्वमण्डले ॥
दिव्यायां च कुलौ मुख्यौ श्रीवत्सस्वस्तिकौ लिखेत् ।
आलिखेद् यक्षकुले श्रेष्ठे फल फलजसम्भवम् ॥
महाब्रह्मे हसमालिख्य शक्रस्यापि सवज्रकम् ।
महेश्वरस्य लिखेच्छूल वृष चापि समालिखेत् ॥
त्रिशूल पट्टिश चापि स्कन्दस्यापि सशक्तिकम् ।
विष्णोश्चक्रमालिख्य गदांश्चापि सदानवाम् ॥
नानाप्रहरणा देवा विविधासनसम्भवाम् ।
याना च विविधाश्चापि तेषां मध्य लिखेत् सदा ॥

सरूपसङ्क्रान्तिप्रतिबिम्ब यथास्थितम् ।
एषामन्यतर मोर लिखेत् सर्वत्र मण्डले ॥
एकद्विकसमायुक्ता त्रप्रभृत्यमसङ्ख्यका ।
मण्डला जिनवरै' प्रोक्ता वेदिकापङ्क्तितत्समा ॥
यदोद्दिश्य मण्डल प्रोक्त त मध्ये तु निवेशयेत् ।
आलिखेज्जिनकुले गर्भे बुद्ध वापि सुमध्यमे ॥
अभ्यन्तरस्थ तदा बिम्ब शास्तुनो चापि मालिखेत् ।
द्वितीय पद्मकुले न्यस्त तृतीय वज्रकुल लिखेत् ॥
एव सर्व तदालिख्य अनुपूर्व्या सुरासुराम् ।
सर्वभूम्यां तत पश्चाद् यक्षराक्षसमानुषाम् ॥
तीर्थिकानां ततो लिख्य अनुपूर्व्या यथास्थितम् ।
दिक्पालां च तथालिख्य मन्त्राश्रेन विविधागताम् ॥
सक्षेपादेकबिन्दुस्तु द्विप्रभृत्यमसङ्ख्यकाम् ।
आलिखेन्मण्डल यावदुपर्य त न्शमाश्रनम् ॥
अप्रमेय तदा प्रोक्ता क्ष्मातलो मण्डलेऽस्य वै ।
एकबिन्दुप्रभृत्यादि अपर्यन्ते वसुधातले ॥
मण्डलस्य विधि' प्रोक्तो निर्दिष्ट त्रिविधस्य तु ।
उत्तम मध्यमं चैव कन्यस चैव कीर्तितम् ॥
उत्तमे उत्तमा सिद्धिर्मध्यमे मध्य उदाहृतम् ।
कन्यसे क्षुद्रसिद्धिस्तु कथित जिनवरै पुरा ॥
त्रिधा सर्वे मनोभिश्च सिद्धिरुक्ता जिनात्तमै ।
महासत्त्वैर्महासिद्धिर्मध्यसत्त्वे तु मध्यमा ॥
तृतीया क्षुद्रज तूनां क्षुद्रकर्म उदाहृतम् ।
चित्त प्रसादे बुद्धत्व उत्तमे सफलोदयम् ॥
नियत प्राप्यते सत्त्वा मण्डलादर्शनेन वै ।
मध्यचित्तस्तदा काले प्रत्येक बोधिमाप्नुयात् ॥

इतरे नियत प्राक्ता श्रावकत्वमनादरात् ।
अव ध्य फलमाहात्म्य गतिशाति उदाहृतम् ॥

मण्डलादर्शनस्वर्ग नियत तस्य भविष्यति ।
एव मुद्रवरां सर्वा मन्त्राश्चैव सविस्तराम् ॥

नियुक्तास्त्रिविधाश्चैव त्रि प्रकारा सुखावहा ।
मुद्रा मण्डला प्रोक्ता मन्त्राणा कथ्यते हितम् ॥

एकाक्षरप्रभृत्यादि यावत्सङ्ख्य प्रमाणत ।
कथिता वचना मन्त्रे यावन्त्यस्ता प्रकीर्तिता ॥

वाग्प्रलापां रुदित हसित क्रन्दित तथा ।
सर्वजल्पप्रजल्प वा सर्वमन्त्रहित भवेत् ॥

त्रिविधा ते च मन्त्राश्च त्रिप्रकारा समोदिता ।
यथैव मण्डले ख्यात मुद्रामन्त्रेषु वै तथा ॥

विधिरेपा समायुक्ता निर्दिष्टा लोकनायकै ।
तथैव तत् त्रिधा याति अनेकधा चापि सहस्रधा ॥

त्रिविध त्रि प्रकार तु त्रिधा चैवमसङ्ख्यका ।
चित्तायत हि मन्त्र वै न मन्त्र चित्तवर्जितम् ॥

चित्तमन्त्रसमायुक्त सयुक्त साधयिष्यति ।
तथागतकुले ये मन्त्रा ये च पद्मकुले तथा ॥

ये च पद्मकुले गीता कुलेष्वेव च मापरै ।
सलौकिका सर्वमन्त्रा ते सर्वे त इह नि सृता ॥

जिने जिनसुतैर्या मन्त्रो भाषित सत्त्वकारणात् ।
तां जपेद् योऽभियुक्तश्च नियत बुद्धो हि सो भवेन् ॥

मन्त्रस्था ये तु मन्त्रा वै त जपेद् योऽभिजापिन ।
प्रत्येकबुद्ध आर्ययानी नियत तस्य गोत्रत ॥

येऽन्यमन्त्रे प्रवृत्ता वै प्रत्येकार्हभाषितै ।
सलौकिकैश्च सत्त्वे वै अभियुक्तो मन्त्रजापिन ॥

स भवेन्नियतं गोत्रस्था श्रावकाणां महर्द्धिकाम् ।
तत्रापि कर्म मयोक्तव्य उत्कृष्टेऽधममध्यमे ॥
शान्तिके बुद्धबोधि स्यात पौष्टिक ताणि मदूगिनाम् ।
इतरैः क्षुद्रमत्रैस्तु श्रावका नाधिगच्छ्यत ॥
तत्रापि चित्त द्रष्टव्यं तत् त्रिधा परिभिद्यते ।
पुनश्च भिद्यते बहुधा असङ्ख्य नापि भवत इति ॥
आर्यमञ्जुश्रियमूलकल्पाद् बोधिसत्त्वपिटकावतंसकात्
महायानवैपुल्यसूत्रात् पटत्रिंशतिम मुद्रामण्डल
त त्रसर्वकर्मविधिपटलाविसर
पर्वसमाप्त इति ।

# अथैकोनचत्वारिंश' पटलविसर ।

अथखलु भगवां शाक्यमुनि' पुनरपि शुद्धावासभवनमव लोक्य सर्वांश्च लोकधातु बुद्धचक्षुषा सर्वसत्त्वानामवलोक्य पुनरपि मञ्जुश्रिय कुमारभूतमामन्त्रयते स्म । अस्ति मञ्जुश्री ! त्वदीयम त्रत न्त्रमुद्रापटलविसरे सर्वलौकिकलोकोत्तरसमयमण्डलानुप्रविष्टे सामान्याविधानचर्यानिर्हारे समनुप्रवेशसत्त्वामाश्रये अचिन्त्याचेष्टित सर्व मन्त्राणां सर्वमुद्राणां सर्वमण्डलानां सर्वसत्त्वानां सर्वमन्त्रानुप्रविष्टानां निधाननिर्देशचर्या समासतो व्याचक्षते । तच्छ्रूयताम् ॥

अथखलु मञ्जुश्री' कुमारभूतो बोधिसत्त्वो महासत्व, भगवत श्चरणयोर्निपत्य अध्येषयति स्म । अध्येषयतु मे सुगत अस्माकमनुकम्पायै लोकस्यानुग्रहाय । तद् भविष्यति महतो जनकायस्यार्थाय हिताय सुखाय लोकानुकम्पाये । तद् वदतु मे सुगत! सर्वमन्त्राणां जपहोमआप्यायनपूजननियमसर्वतन्त्रमुद्रेषु रामयप्रवेशानुनिगमसाधनोपयिकविधानं सर्वमण्डलेषु सर्वलौकिकलोकोत्तरनिाधविशेषणोपयिकपटलविसरम् ॥

एवमुक्ते भगवां मञ्जुभाणी तद तरमभूत् सर्वज्ञ ना-य तूर्णी तस्थौ तद तरम् ॥

तुष्ट' मञ्जुरवो धीर' सुगतज्ञ मतीन्छयम् ।
सर्वबुद्धाश्च सर्वत्र सर्वधातुसमागता ॥
बोधिसत्त्वास्तु सर्वे वै सर्वश्रावकखड्गिण' ।
सर्वसत्त्वा त्रिधा ये च अनादिभवचक्रके ॥
निबद्धा योनिजा ये च गतिपञ्चसुयोजिता ।
सर्वभूतगणाध्यक्षा राक्षसोरगमानुषा ॥
दैत्यदानवयक्षाश्च कूष्माण्डकटपूतना ।
देवमुख्या गणाध्यक्षा मातराश्च महर्द्धिका ॥
सर्वे ग्रहगणा लोके चन्द्रसूर्या परेस्तथा ।
ब्रह्मेन्द्रधनदा रुद्रा विष्णुस्कन्दविरूढका ॥

धृतराष्ट्रकुबेराश्च सर्वे वै वसवस्तथा ।
सर्वभूताश्च सर्वत्र सत्त्वधातुसमाश्रिता' ॥

शुभाशुभफलै कम निबद्धा गतिसूत्रके ।
मुक्तामुक्तश्च सर्वत्र आगता समये स्थिता ॥

बुद्धाधिष्ठानबला रुद्धया शृण्वन्तेह त्रिधा स्थिता' ।
शुभयोनिजसम्भूता अशुभैश्चैव स्वकर्मभिः ॥

शृण्वन्ते सर्वबुद्धा वै शुद्धावासपुरे तदा ।
तदा धर्म सौगत चार्य अग्रधर्मशुभादयम् ॥

मन्त्रमुद्रत्रिधायुक्त नियत चापि कीर्तितम् ।
क्षेम शिवतम मार्ग आर्याष्टाङ्गिक तदा ॥

त्रिधा कर्मपथ श्रेष्ठ निर्वाणपुरगामिनम् ।
दानशील तदा ध्यान तथा मार्गोपदर्शितम् ॥

भगवानुवाच सर्वज्ञ मन्त्रमार्गप्रवर्तनम् ।
ईषत्स्मितमुखो धीर मञ्जुघोष निरीक्ष च ॥

वाक्य च शुभया युक्त इद ब्रह्मरवो तदा ।
शृण्वन्तो भूतगणा, सर्व स्थिता सौम्या विशारदा' ॥

मा वो समयाद् भ्रशो भविष्यति अनर्थकम् ।
अहित दीर्घरात्र वो बुद्धवाक्यमजानता ॥

पतिष्यथ तमस्यन्धे वत्स दूरीभावयथ ।
इद व' श्रेयसे युक्ता मन्त्रमुद्रा समीरिता ॥

करिष्यथा सदा लोका सदानुग्रहनिग्रहम् ।
मन्यथा मत्क्रियायुक्त क्रोधो वै च यमा तक, ॥

करिष्यति न सन्देह सदा निग्रहर्ता युगे ।
आदौ पुष्पाभिकीर्णे वै विविक्ते विजने सदा ॥

कर्तव्ये मण्डले बुद्धया ध्यानना व्यर्य मर्यत ।
आदौ च सर्वबुद्धाना पद्म ध्याय न बुद्धिमान् ॥

द्वितीय पद्ममुद्यन्त अर्कस्येव महाद्युतिम् ।
तत्रस्थो मञ्जुवर श्रीमां कुमाराकारचिह्नित ॥
पञ्चचीरकमूर्धानो जानुकर्णककोर्पर ।
फलित कृताञ्जलिपुटो बालो पृच्छन्त सुगतं विदुम् ॥
वाच च शुभया युक्तां वद तो सुगतालये ।
यो वै सर्वबुद्धाना महापद्म स्फटिकोज्ज्वम् ॥
वैदूर्यमय पद्म किञ्जल्क हेमजोज्ज्वम् ।
महामरकतीनालां कर्णिका मह हेमजम् ॥
महाविन्पसघात महारत्नविभूषितम् ।
पद्मरागमयै फलिकै अनेकाकारसुभूषितै ॥
अश्मगर्भमयैर्दिव्यै अङ्कुरैश्च विभूषितम् ।
पद्म मुनिवरे ध्यात्वा महोच्च गगनाश्रितम् ॥
तस्मान्न्यूनतर पद्म समचिह्न सुशोभनम् ।
तन्मन. धामतो ध्याये मन्त्री प्रत्येकार्हश्रावकाम् ॥
तस्मान्न्यूनतर पद्म तृतीय चित्तेन यत्नधी ।
चतुर्थ पद्ममावर्त तस्माद्धस्वतम विदु ॥
ध्यायीत पञ्चम पद्म ह्रस्वाद्ध्रस्वतमं सदा ।
समाकारसमोद्योत व्योम सस्थितसर्वतम् ॥
कुर्यात् तस्य विदो पद्म चित्तया सप्तगे स्थितम् ।
न्जपाणेः तथा पद्म उद्ग त रनेगेग ॥
दक्षिणेन विदोः पद्मे तथा मञ्जुरव' सदा ।
ततो ह्रस्वतर पद्म लोकीशस्य महात्मन' ॥
तृतीयं पद्ममित्येव समन्तज्योतिलाभिने ।
चतुर्थ पद्ममित्येव अक्षयप्रतिभानता ॥
ईषिद् विमलगते ह्रस्व कमल पञ्चमतात्त्विते ।
तस्मात् षष्ठतमो यो पद्मः आर्य चाधर्मसञ्ज्ञितम् ॥

अधश्चैव समन्ताद्वै उद्यवे चापि चिन्तयेत् ।
महानागेऽर्धनिर्यान्तोऽन त' न दापन दक्षो ॥
सर्वश्वेता महानागा सर्वालङ्कारभूषिता ।
अम्भोजाता स्मितमुखो गगनालम्बनदृश्य ॥
सप्तशीर्षमहाभोगो मणिकुण्डलभूषिता ।
पुरुषाकारदिव्यास्तु अधेभोगोरगस्तथा ॥
सप्तस्फटा सराम्यास्तु अर्धचक्षुर्गतो वामो ।
नामनो मन्त्रिगण पत्रे प[illegible]मुर्णीपगस्थितनाम् ॥
चक्रवर्ति तथान्तं शस्त्रायुधसुर्राजताम् ।
एकाक्षरश्चक्रवर्तिस्तेजाराशि मिताम्न ॥
अभ्युन्नतो जयोष्णीर्पाविश्वाराजमहर्द्धिक ।
वज्रपाणिश्च यक्षश' अधश्चैव सुचिन्तयेत् ॥
एतेपु [illegible]चत्त धीमां रूपिभि सम[illegible]ा सम्ना ।
आत्मनश्च धियो युक्तो मन्त्रविन्मन्त्रराड् जपे ॥
तत्रस्थ नियमस्थ वै पद्मपत्रोपविष्ट वे ।
ध्यायीत अधश्चात्मान पर्यङ्केनोपविष्ट वे ॥
सर्वपापांश्च देशी मुनिनामन्तिरे मन्ना ।
तत्रस्था नियमजा रूपी अभ्येत्य मुनिवरां वराम् ॥
[illegible] ।
[illegible] ॥
सुगुरमालतीकुसुमा पुन्नाग नागकेसराम् ।
चम्पकाशोकतिलका तगर्याश्चैव रामल्लिकाम् ॥
क्षिपेत् पुष्पाञ्जलिं दिव्या सव्याश्चैव सुशोभनाम्
सभूतामभूतां वा श्रिया युक्ता सुशोभनाम् ॥
विविधां पूजावरां कुर्यात्दैन्या चैव मनोरमाम् ।
त्रिविधा धूपवरा वेव तथा ग धानुलेपनाम् ॥

चित्तेनेव तु तन् कर्यात् सम्भृता स यथावत ।
विरच्य चाऽम स्तर्व प्रतीर्षा रव तथा यमेन् ॥
विविधाराग्मसम्पन्ना विचित्रचित्रभाजनाम् ।
अनस्याराग्सम्पना द यान्नमशालिराम् ॥
यवगोधूममुद्गश्च माषभाज्यमुभूषितै ।
निवेद्य सगते भक्त्या व्याचात्मानमेव तु ॥
न येन ना यथा चापि चित्त येनापि शिष्यते ।
एषा श्रद्धा मया पूजा सर्वपूजेषु शिष्यते ॥
स ध्यात्वा जापिन सर्व नियत बाधिमवाप्नुयात् ।
सफला स त्रसिद्धिश्च जायते च न सशय ॥
इहेव ज स नि सत्त्वा सि यन्ते मन्त्रदेवता ।
अ यज मा तरे चापि केचित् सिद्ध्यन्ति मानवा ॥
विचित्रा भोगसम्पात्त विशेषा चापि पुष्कलाम् ।
त्रिविधा कान्ठमनावाग् ध्यान चापि त्रिधा पुरा ॥
बुद्धैर्बुद्धशते चापि प्रत्येकार्हश्रावकैः ।
त्रि प्रकारा तथा बोधि प्राप्नुव तो यशस्विन ॥
एतत्त्रिप्रकारेस्तु म त्रसिद्धिरिहादिता ।
त्रिप्रकारेस्तु सत्त्वाग्य उत्तमा धमम ध्यमे ॥
त्रिधा कर्मसमुद्दिष्टम् ।
प्रणीत ध्यानता प्रोक्त मध्यम शीलज स्मृतम् ॥
क यस दानज मुख्य तच्चैव तु पुनस्त्रिधा ।
प्रणीत धर्मदान तु मध्यम तु गत तथा ॥
नारयमामिषदान तु क यसे व तु कीर्त्यते ।
शील चापि त्रिधा प्रोक्तमित्युवाच मुनि पुरा ॥
बुद्ध वपरिणामाख्य अग्य शीलमिति स्मृतम् ।
प्रत्येकबोधा मध्य तु क यस श्रावकोद्भवम् ॥

यत्नु नामन्त्रेण सर्व विषमन्त्रेषु सिद्धये ।
सिद्धिं चानुत्तरां बोधिं प्राप्नुवन्ति न संशयमिति ॥

बोधिसत्त्वपिटकावतंसका महायानवैपुल्यसूत्रात् आर्यमञ्जुश्रियमूलकल्पात्
सप्तत्रिंशतिम महाकल्पराजपरिवर्तविसराद् उत्तमसा
धनोपयिककर्मविकल्पविधानतन्त्रेषु
नवम गा पटलविसर
परिसमाप्त इति ।

---

## अथ चत्वारिंश पटलविसरः ।

अथखलु भगवा शाक्यमुनि शुद्धावासभवनमवलोक्य मञ्जुश्रिय कुमारभूतमामन्त्रयते स्म । अस्ति मञ्जुश्री ! त्वदीये महाकल्पराजे पटलविसरे ध्यानजेऽनाश्रवे परमशिवशान्तीभूते अत्यन्तभूतकोटिधर्मधातुप्रविष्टे सर्वतथागतगगनश्रीमनुगते परमनिर्वाणमार्गा सानुप्रविष्टे आर्यपथप्रशमशातीभूत सर्वा तथागतरा श्यशून्यतास्वभावमनुप्रविष्टे सर्वलौकिकलोकोत्तरतत्त्वावतार यानानुगतमनुप्रविष्टे सर्वमन्त्रचर्यासाधनविधिसमासक्रीडानामकथावतारचर्यानिस्फूर्यानानुगतसन्तोषणसत्त्वचर्यानुगतैः । कतम च तत् ॥

शृणु त्व मञ्जुरव ! धीमा सर्वसत्त्वानुवर्तनम् ।
ध्यान सर्वज्ञता ज्ञेय सर्वमन्त्रा प्रसाधनम् ॥
पूरण सर्वमन्त्राणा शोधन पापकर्मिणाम् ।
य ध्यात्वा च जना सर्वे सिद्धि प्राप्स्य यथावलाम् ॥
सर्वाकारवरोपेता ध्यानसौख्यमचिन्तिताम् ।
बोधित्वं त्रिविध प्राप्य उत्तमाधममध्यमा ॥
अतुलां मन्त्रसिद्धि च अस्तुवन्ति जना भवनाः।
सर्वार्थसाधन लोके यश कीर्तिसुखान्यम
दीर्घायुष्कता लोकेऽस्मि दयानां च महद्गतिम् ।
सर्वाशावाप्सितां क्षिप्र प्राप्नुवन्ति न सशय' ॥
द्विपदश्चानुत्तरा बोधि लप्स्यते यानचिन्तका ।
सर्वसत्त्वाहितश्चग्र सर्वमन्त्रेषु कीर्त्यते ॥
स्मरणात्येव मन्त्रेषु सर्वतन्त्रेषु च पुन ।
सिद्धय सिद्धिहेतूनां क्षिप्रमाशानिबन्धनम् ॥
आशास्य भुवि तां मर्त्या पुनर्गच्छन्ति देवता ।
आजहार पुर दिव्य देवतामन्दिरेरिह ॥
तिष्ठन्ते मन्त्रराज सर्व तन्मुखापिध्यायिन ।
भाग य च पुनः सर्व देवतामपकापणाम् ॥

कथयति य शास्य शुभाशुभफलोदयम् ।
तासां प्रवक्ष्ये स्वप्न सत्यं तथा जापिन ॥
शुभास्य फलं सर्वं सत्यश्च वापे न्त्रनाम् ।
प य त स्वप्नगता सत्र मन्त्रिणा वापि तत् तेर ॥
इतरा वापि न पश्यन्ते जापिना मन्त्रलौकिका ।
ध्यानेन पापं क्षीयत जपे चापि सुपुष्कले ॥
सि यन्ते मन्त्रगाः सर्वे अचिरात् तस्य मन्त्रिण ।
प्रभावा ध्यानयोगस्य अचि याद्भुतचेष्टिता ॥
एवमुक्तस्त वीरेण शाक्यसिंहेन तापिना ।
भून्मञ्जुरवस्तूष्णीं शुद्धावासपुरे तदा ॥
सर्व देवगणा मुख्या विधा यातुसमाश्रिता ।
अपृच्छद् वाक्यवर शृद्धं सर्वमन्त्रेश्वर गुरुम् ॥
साधु साधु महावीर ! साधु धर्मेश्वरा विभा ।
यस्त्व हि सर्वसत्त्वानां हितार्थं मन्त्रजापिनाम् ॥
ध्याना च तत्त्वनिर्दिष्ट पूर्वनिर्दिष्टनामिति ।
इदानीं तु महावीर । । । । । । । । । ॥
एवमुक्ता सुराः स + अग्रा ह्यग्रतस हिता' ।
तूष्णीम्भूतास्ततस्तस्मिन शुद्धावासपुर पुर ॥
इत्युवाच महावीरा मुनिस्तत्रा । । । । ।
शुभया वाचाया दिव्या लोकानन्दा वेदनम् ॥
कथयामास सम्बुद्धः मधुराक्षरभाषणम् ।
शृणुध्व भूतगणा सत्र कीर्तिता विविधा ।
ध्यान त भवनिष्ठ क थयन्त समाहिता ।
अनश भसनानान्त तेग स्य तत्त्वदर्शनम् ॥
सर्वस त्रार्थरिधिसा व विवि ध्या व तु लौकिक ।
सत्र धर्मेश्वरा लाक यनायात न सर्वि तरा ॥

चत्वारिंश पटलविसर ।

क्षिप्रं च जापिनां सर्व आशु स त्वार्थसिद्धये ।
आदौ ध्यायीत महावीर रत्नकेतु तथागतम् ॥

रत्नशैलनिषण्ण त महाग्रां रत्नजालने ।
पद्मरागमय दिव्य महापद्म मनोरमम् ॥

भगवां तत्र निषण्णस्य पर्यङ्के धर्मदेशिनम् ।
ध्यायन्त महावीर पद्मसम्भवमेव तु ॥

पश्चात्तरं च सम्बुद्ध पद्माभ चैव बुद्धिमान् ।
ध्यायीत मुनिवरा पद्म रत्नाभ च तथागतम् ॥

समत सुप्रतिष्ठिता ज्ञेया गुहश्चैव पश्चसु ।
सर्वा शैलमयां मादि पद्मरागमय क्वचित् ॥

मिश्रे द्रनीलमाभास क्वचित स्फटिकसन्निभम ।
उच्छ्रय मरकताभास प्रमाण चापि शताष्टकम् ॥

योजनाना सहस्र तु रूपपाडशात्रस्तरम् ।
उपरिष्टात्तु सम्बुद्धा अपश्ये ता नगोत्तमा ॥

इ गुप्तेष स सपान्याश्यान्श यापि सर्वेना ।
प्राप्त मुनिवर सर्वे सम्बुद्धैर्द्विपदोत्तमैः ॥

चन्द्राभास च निर्भासै श्वेतपुष्पनिकाशकैः ।
हसगोक्षीरनिभासै शङ्खकुन्दाहिमप्रभे ॥

सम्बुद्धै सर्वेभिस्तु व्याप्त गुहा सम्यक्समन्ततः ।
मद्रश्चास्मि पुष्पवर्षाणि सुरभीणि समन्ततः ॥

अदृश्यकायमारूप्य उपरिष्टात् खसमागत ।
अधश्चावमान सदा चिन्तन् पर्यङ्कोपविष्टकम् ॥

पद्मपत्रे स्थित मुन्य शरीरं चापि निर्मलम् ।
अभिषिञ्चन्त सदापश्य त तोय धाराभि सर्वत ॥

असङ्ख्येयैर्मुनिमुनिमुख्यैः सम्बुद्धैः द्विपदोत्तमैः ।
प्रहृष्टैर्नीक्षिणाश्चरैः समन्तादञ्जलिभि सदा ॥

शक्तोया बहुभिः बहुधाराभिरूर्भित ।
समन्तात् सर्वतश्चैव मूर्ध्नि चात्मान एव तु ॥

अपाङ्गनिस्राविभि सुग नैर्वनीतकै ।
अन्यैरनादिभिश्चैव सर्वव्याधिहरैस्तथा ॥

जरामृत्युविनाशि यैः भिन्नस्फटिकसन्निभैः ।
तादृशैस्तोयधाराभि आत्मान चापि चिन्तयेत् ॥

अभिषिञ्च्यात्मतो चित्वा तैश्चाप्यायितमानसः ।
सम तात् वारि धाराभिस्ततो ध्यायी सुखी भवेत् ॥

सन्तुष्टमानसो धीमा पश्येद् ज्ञान तदासनम् ।
चित्ते समाहिता क्षिप्रं पञ्चाभिज्ञासु चिन्त्यधी ॥

एव युक्तः सदा योगी पश्येद् धर्मा तदा स्वयम् ।
दिव्य श्रोत्र तथा ज्ञान पूर्वजातिमनुस्मरम् ॥

ऋद्धिविक्रीडित ज्योतिर्दिव्य चक्षुरनावृतम् ।
पराचित्तगतिं चिन्तां सर्वसत्त्वाश्रय तम् ॥

सर्वं ज्ञास्यति योगीशो तदा युक्तः समाहित ।
अविवर्त्य तदा बोधौ अनुत्तरायां न सशय ॥

बुद्धभूमिगता धर्मा प्रथमायामविकल्पत ।
प्राप्स्यतेऽसौ सदा जापी अविवर्त्याऽमृते पदे ॥

अनाभोगेनैव सम्यक्सम्बुद्धा सिध्यन्ति सर्वत ।
ये च लोकोत्तरा मन्त्रा अभिमुखैः सभाषिता ॥

बोधिसत्त्वैस्तु सर्वैव अब्जा वज्रोद्भवाश्च ये ।
लौकिका ये च मन्त्रा व ब्रह्मरुद्र प्रभाषिता ॥

यक्षमुख्यगणैः सर्वैः ।
मातभूतग्रहगणैः यक्षराक्षसकिन्नरैः ॥

दैत्यैर्नागगरुडैश्च सिद्धविद्याधरस्तदा ।
कूश्माण्डैर्व्यन्तरैश्चापि कश्मलैः पिशिताशनै ॥

त्रिविधा सत्त्वगता ग भा शभाकर्मगमोचिता ।
तपा ग नत्र ह्य आभभयाभिप्रत्रात ॥
ज्ञिय मा नाग्र ग र भरिज्ञा सर्कोरणम् ।
सकस्तथैव ञाक आभभग ना मतायत ॥
ततश्चिन्हमिमा ज्ञात्वा गात्रे त नापि गेत्यताम् ।
विवेकाग्रता चत्र गम्य चेव विवेकजम् ॥
प्रथम यानज चत्र चित्त वा ता तु तीरितम् ।
मुखदु खमुपेक्षाय निगते नापि विरागताम् ॥
उपेक्ष स्मृतिपरिशुद्ध द्वितीय प्रेरयत जापी ।
तृतीय चित्तता यात चतर्थ अश्रयतो व्रती ॥
य ना मुनिवराभिष्ट ध्यान भवता शुभम् ।
तथा म व्रगता जापी यायत्काग्रमनामयम् ॥
गे निर्दिष्टास्यात्रद्धैरतु वर्तमानमनागतै ।
सम्बुद्ध श्रावकश्चापि प्रत्रान्ताश्चापि कीर्तिता ॥
तेषु योगेष म त्रज्ञा अनुपूर्व्या यानमाचरेत् ।
निवर्त्य श्रावकी वा त प्रत्यकजिनमुद्भराम् ॥
महाकरुणानुभावीत महामेत्रा चापि यत्नत. ।
यद् यद् गात्रागत चित्त तथा चित्त तु भावयेत् ॥
परहितचित्तान्मत्री परदु खभ्पालुता करुणा ।
परतुष्टिमुदिता पवन्यापमुपक्षणमुपेक्षा ॥
इत्युवाच महाभागा सम्बुद्धा द्विपदोत्तमा ।
अनित्यदु खमनात्माश्च य तत्त्व तव पदम् ॥
क्षेम शिव पर स्थान निर्दिष्ट लोकनायके. ।
क्षणिक सर्वसस्कारा त्रिविधास्तत्त्वेऽत्रचेष्टिता ॥
त एवासस्कृता धर्मास्त्रिविधा बोधिसस्थिता ।
त एव शिवतमा लाके कथिता बोधिपरायणै ॥

प्रत्नेनिाम्प्जे मशाने म्नमृत्याभपेनमेविते ।
उगग्पिान नायताराणा म ये जिनवरालये ॥
तत्रस्थ त गम्यासीन पायीन मञ्जुरव शुभम् ।
सत्रनुद्रोभ्यत भि मनमम्कार शुभ मभुम् ॥
वाम करनिन्यम्त नीलो पल शुभम् ।
दक्षिणेन करे मुक्त शुचिस्थाने सदाशुभे ॥
सनमस्कार सदा बद्ध ईपन्डीलासवालिशम ।
त भ्या वा मुनिपुत्रे वे सदा मत्री पुन पुन ॥
तत्रस्था भ्यानजा धीमा आतुरायां तु पश्यति ।
सर्व ते व्याधिनिर्मुक्ता दृष्टमात्रेण मन्त्रिणा ॥
अधश्च पश्यत्पाताल सर्व भूमिगता धना ।
वशिता सत्रमन्त्रज्ञ नित्योचाग्नमन्त्रिणाम् ॥
यदूर्ध्वं समपश्येत् सिद्धा व्योम्नानुगामिनाम् ।
सर्व वशयिता लोके सिद्धद्रव्याणि सर्वत ॥
अथोत्तरां दिशा पश्येद यक्षाध्यक्षांश्च सर्वदा ।
कूष्माण्डा चित्तदाभव वित्तेश च महर्द्धिका ॥
ईशानो भूपतिश्चेव ।
ओपध्यो हेमजा सर्व रुद्रश्चेव महामया ॥
किन्नरा मकरध्वजा ऋपयो गरुडस्तथा ।
सर्वसत्त्वाश्रया ये च तथोत्तरा विदिशे ॥
विदिक्षु चेव सवेत्र तथा स्थावरजङ्गमा ।
सर्व स्युर्वशमायान्ति दृष्टमात्रेण जापिने ॥
एव पश्चिमतो ज्ञेय वरुण महर्द्धिक ।
महानागे सदा सत्र दृष्टा यान्ति सम्मन्छिता ॥
एव वेवस्वता घोरा यमश्चेव महर्द्धिक ।
सर्व ये राक्षसा दुष्टा घोररूपा महर्द्धिका ॥

ससुता भृत्यवर्गश्च परप्राणहरा खगा ।
पिशिताशनरूपाश्च भीमरूपानुगा सदा ॥
ध्य तरा रूश्मलाशेव प्रतापोमहाद्रवा ।
पिशाचा भूतकूष्मान्डा स्यात्रेव महाद्रवा ॥
अनेकाकाररूपास्तु अनेकाकारयानिना ।
रूपा मनोजवाश्चेव सत्त्वा हिण्डन्ति मन्दिनीम् ॥
दारुणा रुधिरग धेन सम तान् याजन शतम् ।
सहस्र पुनरायान्ति सप्तसप्तेऽनुगे सदा ।
मानुषाणा विहेठन्ता पर्यन्ति महीतल ॥
आहारार्थिन' केचित् केचित् क्रीडानुगामिन ॥
सर्वे स्युर्वशमायान्ति दृष्टमात्रेण जापिने ।
एव पूर्वया तथा दिक्षु पूर्वाभ्यत्याग्निशानुग ॥
सवितु' सर्वनक्षत्रा सज्योतिग्रहच द्रमा ।
महोत्पादोपग्रहा सत्त्वे विराजाश्चेव दिशा पति ॥
ससुतो सपरिवारो वै शक्री वा चापि सर्वत ।
सर्व ते वशमायान्ति यानेनाराजित जिता ॥
विदिक्षुश्चेव सर्वत्र सर्व सर्वासु दिक्षुष ।
सुरश्रेष्ठा सुरश्चेव द्वीपसान्ये भुवि ॥
सर्वसत्त्वा तथा ग्राम मानुषा अमानुषास्तथा ।
सर्व ते वशमायान्ति ये सत्त्वा त्रिष स्थावरा ॥
ये तु यातुजा मुख्या तथा म यमस्यमा ।
सर्वे ते वशमायान्ति अण्डजो स्त्याश्च यापिने ॥
त्रिविध यानज कर्म ज्येष्ठम यमम यगम ।
ज्येष्ठे उत्तमा योग्य प्राप्य यायी निवर्तते ॥
अनुत्तर च पद शा तं लोक मागमनागिणाम् ।
कन्यसा श्रावकी बोधि प्राप्यने परनिवृता ॥

गुनत्रे मूतिरगे स्थाप्त कुमार चारुरूपिणम् ।
राम्ना मञ्जुश्र वि याद विचित्रा भूतिलक्षणम् ॥
स्फीरसरं नाम रूपिण सुगतानभम ।
जले याऽत्र महानागो अनन्ता नाम नामत ॥
सर्वश्वेतस्तथा नि य सप्तशीर्षज स्फटं ।
त भ्या त चि तयेज्जापी विचित्रालङ्कारभूषितम् ॥
सुगतात् सम्मतीनिन्त त मूग चापि चि तयेत् ।
पत्र नन्टोपन न्दो च नागराजो महर्द्धिको ॥
त प्रमाणान्नित्रुतो वृद्धया द्विगुण चापि सर्वत' ।
अन तक्कर्कोटस्तुल्ये पद्मश्चापि महर्द्धिक' ॥
कुलिक शङ्खपाल श्च पित्रश्चापि वर्णत' ।
महापद्मोऽथ नागे द्र पद्माभश्च लत सदा ॥
वासुकिस्तथरश्चैव पिङ्गलस्तुल्यवर्णत' ।
पद्माभो सर्वता ज्ञेयो विचित्राकारभूषणो ॥
शङ्खश्चैव महानागो शुक्राभो वर्णत शुभो ।
शङ्खपालो मणिनाग' श्वेताभो ईपि वर्णत. ।
सागरश्च महानाग' मुचिलि दश्चैव विश्रुत' ॥
कृष्णनागाऽथ सर्वत्र कृष्णवर्णा प्रकीर्तिता ।
सर्वे तुल्यप्रमाणास्तु नन्दोपन न्दाऽथ सुर्च्छितो ॥
एलपत्रोऽत्र नागे द्रा भोगवा लोकविश्रुत ।
सागरा ह्युरगाध्यक्षः अचिन्त्याद्भुतचेष्टित ॥
करोति विविधा कर्मा शृणुश्चैव निबोधताम् ।
मृतक विषसुप्ता त्रा सागरे नैव कारयेत् ॥
वस्त्रेणावृत कृत्वा वै यानयोगेन धीमता ।
आकृत्य सागरे स्थाने शीघ्रमुत्तिष्ठते मृत ॥
विषसुप्तस्य सदा गो पादेनाक्रम्य चालयत् ।

तं न्यसेत् सागरे स्थाने निर्विषो भवति तत्क्षणात् ।
एवं ज्वरपिशाचांश्च क्रव्यादां व्यन्तरां शुभाम् ॥
रक्षसा प्रेतकूष्माण्डां पिशाचोरगमातराम् ।
ग्रहश्चैव सदा लोके परप्राणहरां नराम् ॥
विचित्रा श्रमसाश्रिता ।
मानुषिं तनुमाश्रित्य तिष्ठन्ते भुवि मानुषाम् ॥
गृह्णन्ते बालिनां सत्त्वां तेषां ध्यानेनानेन चिन्तयेत् ।
सागरस्य तु नागेन्द्रा चिन्त्याद्ग्रतास्थितम् ॥
ध्यायीत मातर सत्त्व क्षिप्र मुञ्चति बालिसम् ।
एव दुष्टमदष्टाना कीटलूतोत्थितां नृणाम् ॥
दद्रुकिल्मिसकुष्ठानां पामाकण्डुविचर्चिकाम् ।
अन्यां चात्थिता चैव नित्य भग दरगोहिताम् ॥
प्लीहमेदोदरां चैव तथा पद्म सुपद्मकम् ।
यक्षाणां सपद्मक चैव तथा पद्मोत्तर कुशम् ॥
ज्वररोगगतां सर्वा नाग्य तां नृजबालिसाम् ।
सर्वा सागरे स्थाने सन्यसेत् पन्नगोत्तमे ॥
विविधायासदु ग्वानां सर्वव्याधिगतर्त्तिनाम् ।
सन्यसेत् सागरे स्थाने ध्यानचित्याहितेन वै ॥
क्षिप्र मोचयते नाग सुगताज्ञां प्रतीच्छकः ।
एवञ्चमुरगै सर्वैः सर्वकर्मकरै शिवै ॥
उरगाध्यक्षैस्तदा सर्व व्याप्तमम्भोदातिर्यगम् ।
समन्तात् सर्वतो श्रेष्ठा उरगाध्यक्षा महर्द्धिका ॥
समयज्ञा मञ्जुघोषस्य आज्ञे दीक्षणतत्परा ।
दैवयक्षाश्रिता नित्य मानुषाणां शुभोदया ॥
व्यतिमिश्रैस्तु कर्मैस्तैर्व्यतिमिश्रफलोदया ।
काले वर्षधरा नित्य धार्मिकां वृत्तिमाश्रिताम् ॥

॥॥

समन्तात् तोयधाराभि ।
सस्यौषध्ये तथा व्रीह्यां निष्पन्ने फलति हेतुकम् ॥
मेघरूपेण माश्लिष्टा पर्यटन्ति महीतले ।
महर्द्धिका महेशाख्या कल्पस्था महोदया ॥
तेषां भोगवती नाम पुरी अम्भोदमाश्रिता ।
यदा धर्मपरा मर्त्या जम्बूद्वीपेषु सर्वत ॥
ततो तिष्ठ ते महानागा परिवाराश्च तेषु वै ।
तदा देवासुरे युद्धे अनुभूय जयैषिण ॥
जम्बूवृक्षगता तस्थु जम्बुद्वीप च मध्यत ।
पुनः पुनर्नरा भेजे सर्वत्राप्रतिगोचरा ॥
सर्वशुक्लगतां कर्मा तेषु नागेषु योजयेत् ।
कुर्वन्ति समये भ्रष्टा ये नागा जलमाश्रिता ॥
कीटवोपद्रवतां सर्वा विषां स्थावरजङ्गमाम् ।
मुमुचु सर्वतो नागा आसुरो पक्षमाश्रिता ॥
प्रमाथी झलुझलुश्चैव कपर्दी चापि महोदधि' ।
भीमो भीषणश्चैव दुर्मुखो बहुमुखस्तथा ॥
एते चान्ये महानागा अतिदर्पाभिमानिन' ।
कृष्णकर्मे स्थिता नित्य व्यतिमिश्रेण वा परे ॥
महेशाख्या भीमरूपाश्च विषोग्रथिजनाजने ।
अधर्मिष्ठा यदा मर्त्या जम्बूद्वीपनिवासिन ॥
तदा महाभय कुर्युर्विषमूर्च्छातिदारुणम् ।
छर्दिर्भ्रमिश्च जागेत महामार्योपद्रवां बहूम् ॥
दुष्टशरीररूपा लोके विसृजन्त्यहितोदया ।
एवं ते च महानागा बहुप्रकारोपद्रवाशुभा ॥
अनावृष्टि अनावृष्टि विसृजन्त्यहिते रता ।
तेषां च दर्पनाशाय इद ध्यान समारभेत् ॥
मञ्जुघोषं महाधीर बोधिसत्त्व महर्द्धिकम् ।

वामोत्पलकरं सव्यं दक्षिणेन तरमन्म् ।
भिन्नगोरोचनाभासं हेमकुङ्कुमनिाद्वरम् ॥

गरुडं पक्षिराजानं आरूढं सुगतात्मजम् ।
ध्यायीत मस्तके तेषां नागिणां मर्मविपोत्तमाम् ॥

ततस्ते भिन्नहृदया त्रस्तोद्विग्नमानसा ।
पुनर्निवर्त्य गच्छन्ते प्रविश तें च रुपालयम् ॥

उत्पातां बहुविधां दृष्ट्वा अशुभाश्चार सशब्दकाम् ।
एवं ध्यायीत मन्त्रज्ञ मञ्जुघोषं समाहित. ॥

बहुप्रकारा मन्त्रज्ञ नागदष्टा प्रकल्पयन् ।
अनेकाकाररूपास्तु अण्डजाश्च प्रदर्शिनाम् ॥

वक्ष्ये सम्यग्बुद्ध्या शास्त्रदृष्टेन कर्मणा ।
तद्गोत्रजश्च उरगा वै दश ते भुवि मानुषाम् ॥

तेषां विधिदृष्टेन शास्त्रेणैव गरुत्मना ।
कुर्यात् सर्वाणि कर्माणि पक्षिराजेन देहिनाम् ॥

कृष्णशुक्लादयो नागा ये नागा भुवि मण्डले ।
विचरन्ति महीं कृत्स्नां सूर्यरूपेण देहिनाम् ॥

साध्यासाध्ये ततो ज्ञात्वा विषं च चतुरो हिताम् ।
पित्तश्लेष्मगतं चैव वायुर्व्यतिविमिश्रिताम् ॥

श्लेष्मणा वारुणेत्याहु शुक्लवर्णोऽथ मण्डलः ।
पित्तमाग्नेयजं नाम त्रिकोणाकारसम्भवाम् ॥

अग्निवर्णं सदा रक्तमीषद् बाहुभपिङ्गलम् ।
कुलस्थमिव बन्धा त चतुरश्रं व्यतिमिश्रितम् ॥

माहेन्द्रमिति तं ज्ञेयं कृष्णवर्णं महान्ततम् ।
श्लेष्माणां च गजेत्याहु, पित्तज द्वेपसम्भवम् ॥

मोहं वायुजं ज्ञेयं व्यतिमिश्रं कृष्णवर्णितम् ।
सदेव सात्त्विकं विन्द्याच्छेलष्मणं शुक्लवर्णितम् ॥

राजत पैत्तिक ज्ञेय पीतरक्तावभासितम् ।
तामस वातिकं ज्ञेयं व्यतिमिश्रहितोत्वताम् ॥
व्यन्तरेष्वपि सर्वेषु कीटविस्फोटकादिषु ।
सरीसृपेषु च सर्वत्र व्यतिमिश्र लिङ्गमीक्षयेत् ॥
कृष्णाभं तत्रमुद्यन्त मञ्जुघोष सुचिन्तयेत् ।
गरुत्मस्थ सुखासीन बालरूप सुखोदयम् ॥
चिन्तयेद् व्यन्तरैर्दुष्ट मानुषेपादमध्यिषु ।
ततोऽर्द्ध चिन्तयेद् दिव्य कुमार बालरूपिणम् ॥
विश्वरूप महात्मान गरुत्मत्तापरिस्थितम् ।
तदासीन महाभाग शरत्काण्डाकारविद्विषम् ॥
ऊरुभ्यां चिन्तयेद् धीमान् नाभिस्याद्ध्योमगम् ।
पीताभ चिन्तयेद् ध्यायी उर स्थाने सुसुस्थिगम् ॥
मञ्जुघोष महावीर्य पक्षिराजाग्रवाहनम् ।
शिर.स्थाने तथाचिन्त्यः ध्यायीत गरुडध्वजम् ॥
शुक्लाभ वैनतेयस्थ वहिस्थ चाथ चिन्तयेत् ।
सात्त्विके विषमूर्च्छा तु श्लेष्म वमन्ति सर्वतः ॥
लाला च स्रवतेऽजस्र निमज्जते च मुहुर्मुहु' ।
त विद्यात् सात्त्विक दष्ट शुक्लपक्षाहितो भवेत् ॥
भ्रमते कम्पते चैव स्तब्धे क्षोभे मर्वेश्वरः ।
विषे च पित्तजे मूर्च्छा दाघो जायति दारुणम् ॥
राजसे दष्टिणे दष्टे एतद् भवति चेष्टितम् ।
तामसे तमसं मोहः मूर्च्छा निद्रा च जायते ॥
व्यतिमिश्रैर्व्यतिमिश्रं तु चेष्टा भवति दारुणम् ।
सत्त्वे भवति शुक्लाभ' दष्टे भवति मानुषे ॥
राजसी पीतवज्ज्ञेयः छविवर्णाश्च किञ्चन ।
कृष्णवर्णाथ मोहात्मा छविवर्णाथ जायते ॥

व्यतिमिश्रे धूम्रवर्णस्तु आपाण्डुश्चापि क्वचित्तथा ।
सात्त्विको राजसश्चैव शुक्लपक्षाहिजोद्भवा ॥
तामसो मिश्रिणश्चैव अहिजा कृष्णवर्णिनाम् ।
तत्कुलाकुलिनो ह्येते उरगाध्यक्षेश्वरो मुने ॥
आसुरं पक्षमाश्लिष्टा विचरन्ति महीतले ।
दशतेषां मानुषां लोके अधर्मिष्ठा नागजातयः ॥
क्रूराः क्रूरतरा लोके आहारार्थपरा सदा ।
केचिद् विहेठनार्थाय दंष्ट्रिणो प्राणहरा परे ॥
विषविनाशनार्थाय सर्वदष्टोपजीविनाम् ।
इदं ध्यानवरं मुख्यं यथालिङ्गानुवर्तिनम् ॥
सन्न्यसेत् प्राणिनां चिन्त्या क्षिप्रं मुञ्चति तद्विषम् ।
सर्वदा सर्वकालं तु सर्वव्याधिषु योजयेत् ॥
सर्वोपद्रवा हन्ति ध्यानेष्वेव प्रतिष्ठिता ।
यथा नागा तथा सत्त्वा राक्षसा ग्रहमातरा ॥
परप्राणहराश्चैव दुष्टचित्ताथ मानुषा ।
सर्वव्याधिमता लोके लिङ्गेष्वेव तु योजयेत् ॥
ध्यानं ध्येयं तथा मुक्तिं कर्म चापि सदा न्यसेत् ।
कुमाररूपं माङ्गल्यं पवित्रमघनाशनम् ॥
मञ्जुघोषं महावीरं जिनपुत्रं महर्द्धिकम् ।
सगरुत्मन्ते सुखासीनं उदयन्ते रविमण्डले ॥
ध्यायीत सर्वतो मुख्यं मञ्जनाथेश्वरं विभुम् ।
सर्वत्र चिन्तितो ध्यानसर्वव्याधिप्रनाशनः ॥
सर्वकर्माणि कुर्वीत सर्वसत्त्वेषु सर्वदा ।
सर्वं स्तम्भयते ह्येष सर्वं शोभयते शुभम् ॥
सर्वमन्त्राश्च लोकानां अस्मिन् ध्याने निबोधिता ।
सिद्धिं गच्छन्ति ते क्षिप्रं परकल्पेऽपीहोदिता ॥

ये च ताथागता म त्रा वज्राब्जकुलयोरपि।
शक्रे द्रब्रह्मरुद्रया ॥
आग्नेयवसवे द्राणा नक्षत्रग्रहज्योतिषाम् ।
गन्धोरगयक्षाणां ऋषिमुख्या सपतनाम् ॥
सर्वमन्त्राश्च सिद्ध्यन्ते अस्मि कल्पे तु ध्यायिने ।
परत नविधाने पि मान्त्रेणा ग रोण ना ॥
कुर्यात् कर्मासाद्ध च क्षिप्र ध्यानगतेन वै ।
आदित्यमण्डले ध्यात्वा उदयन्ते विश्वरूपिणम् ॥
कुमार बालिशाकार शिशुभूषणभूषितम् ।
आरूढमण्डले दीप्त गरुत्मन्तेऽथ वैनते ॥
मीदृशाकारमव्यक्तं भूर्जे चापि सुचि तिते ।
दृष्ट्वा परबलस्तम्भ जायते च मनीपितम् ॥
सर्व च दृष्टा' स्तभ्य ते नृत्यन्ते च परस्परम् ।
हसन्ते आतुरा सर्व ग्रहाविषाश्च देहिनाम् ॥
ज्वरार्ता मूर्च्छिता ये च उत्तिष्ठन्ते द्रुत तत ।
क्र दन्ते विविधा आर्ता भीमनाद करोति वे ॥
ग्रहमातरकूष्माण्डै गृहीताना भुवि मानुषाम् ।
एभिर्लिङ्गैस्तदा मन्त्री लक्षयेदेता समाहित ॥
इच्छया मोचयेत् क्षिप्र विषमङ्गमण तु वै ।
क्रीडापयति भूतानां तदा योगी रिरिसया ॥
आदित्यमण्डले नाडी प्रयोक्तव्या विषमूर्च्छिते ।
रविनाडीप्रयोगेण सर्वमाणि स चालयेत् ॥
निर्विषो भवते सुप्त विषस्थावरजङ्गम' ।
ततोत्तिष्ठते क्षिप्र विषसुप्तो न सशय ॥
अन्यश्च वर्द्धते क्षिप्र विषात्ता भुवि भूतले ।
पुनर यो पुनश्चापि अन्यादन्यतराऽपि वा ॥

एवम्प्रकारे सर्वत्र शतशोऽथ सहस्र' ।
यावन्नाडीप्रयोगेण तावद् भूतानि पातयत् ॥
वस्त्रकुन्तस्तथा कुम्भे अम्मनोयहतानने ।
क्षणेन चालयेन्नाडी तत्रस्थ विपमाविप ॥
सर्वे ह्यातुरा' स्वस्थास्त क्षणादेव भूत ठ ।
एवमा ।मयागण न्याद् न य । ।।५।य ॥
असङ्ख्यं च विधि कुर्यात् परमन्त्राग्रतेन वा ।
एष प्रयोग समासेन ध्यानो ह्युक्तोऽथ जापिनाम् ॥
प्रयोक्तव्य कल्पनिर्दिष्ट परत्र वा गरुत्मन ।
मत सङ्कल्पजं प्रोक्त शैव चापि विशेपत ॥
सर्वे च लौकिका म त्रा प्रयोक्तव्या ध्यानविस्तरे ।
इह मञ्जुरवे कल्पे यानेनैव विशेषत ॥
सर्वतन्त्रप्रयोगैश्च म त्रैश्चापि सुपूजिते ।
मतयो येऽपि कल्पार्था प्रयोक्तव्या इह ते सदा ॥
योगेऽस्मिन यानये दिव्य कल्पराजादिते इह ।
ध्यानेन सर्वे नियोक्तव्या युक्तिहतुनिरञ्जन ॥
सूक्ष्मश्चित्तविपये म त्रसिद्धिनिव धने ।
मुनिपुत्रोदिते शुद्धे सर्वबुद्धार्थसादिते ॥
जापिनो ध्यायने नित्य सर्वसिद्धिगुणाकरा ॥

इति बोधिसत्त्वपिटकावतंसका म ।ध्यानवपु-यवगत्ताद् आर्यमञ्जुश्रियमूल कल्पाद् अष्टत्रिंशतिम महाकल्पराजपटलविसराद् द्वितीयसर्व लौकिकलोकोत्तरमन्त्रतन्त्रविधिसाधनोपयिक सर्वकर्मध्यानपटलनिर्देश परिवर्त समाप्त ।

## अथ एकचत्वारिंश पटलविसर ।

अथ खलु भगवां शाक्यमुनि, पुनरपि शुद्धावासभवनमवलोक्य, मञ्जुश्रिय कुमारभूतमाम त्रयते स्म । अस्ति मञ्जुश्री ! सर्वे बुद्धानुमोदिते त्वदीयमहाकल्पराजमहाविसरे महाम त्रचर्यानुवर्तने सर्वसमयानुप्रविष्टे महामूलकल्पप्रतिष्ठास्पदभूते पञ्चमसर्वभूतरुतज्ञानाभिज्ञान सर्वभूतरुतज्ञानाचिन्त्यगोचर एप ते पक्षिराट् गरुत्मा स्वम न्त्रचर्यानुवर्तनरुतज्ञानाभिज्ञाना सर्वमन्त्राणा सर्वम त्राणां सर्वकल्पानां स्वसमयमनुप्रविष्टसर्वलौकिकानाम् एप एव ते भाषिष्यति सर्वेति यग्योनिगतानां सर्वपक्षिराजगरुत्मनां सर्वमन्त्रकल्पगोचररुतज्ञान च चरितं चेति ॥

अथ खलु तस्मात् पर्प-मण्डलाद् वैनतेयो गरुत्मा बोधिसत्त्वाधिष्ठानेनानेकैर्गरुडशतसहस्रै' परिवृत उत्थायासनात् पर्प मण्डल प्रदक्षिणीकृत्य, येन मञ्जुश्री, तेनोपसङ्क्रम्य, महाबोधिसत्त्वस्य पादौ कृताञ्जलिपुट, मञ्जुश्रियमेतदवोचत्—

'अह महाबोधिसत्त्व ! अस्मिं महाकल्पराजे सत्त्वानामर्थाय हिताय सुखाय कर्मो तरशत सरहस्य भाषिष्ये । तत् साधु महाबोधिसत्त्व ! अनुमोदतु ।'

अथ मञ्जुश्रीवनतेयमेतदवोचत् —'भाप भाप महासत्त्व ! सत्त्वानुकम्पया ।'

अथ वैनतेयो बुद्धाधिष्ठानेन स्वकीये आसने निपद्य, महृष्टमनसि कर्मोत्तरशत सरहस्य भापति स्म ।

नम' समन्तबुद्धानामप्रतिहतशासनानाम् । तद्यथा — ओम् शकुन ! महाशकुन ! विततपक्ष! सर्वपन्नगनाशक! खख खाहि खाहि ! समयमनुस्मर । हुम् तिष्ठ बोधिसत्त्वो ज्ञापयति स्वाहा । कर्मोत्तरशत भापते स्म ।

नागाकर्पण, नागदमन, नागनिग्रहण, दष्टमदष्टावेशन, वाचया सर्पमावाहान, सर्पनिग्रहकरण, विपक्रीडन, मन्त्रविपक्रामण, वाचा मनसा बुद्ध्या वा, पोपधिको त्रिरात्रोपित, शुक्र

द्वादश्यां नदीतीरे शुचौ देशे पञ्चरङ्गिकचूर्णेनाष्टहस्तं मण्डलकं कृत्वा, अष्टपत्रप्रतिष्ठित, तत्र मध्ये भगवा धर्म देशयमान लिखेत् । तस्य दक्षिणेनार्यमञ्जुश्रियं कृताञ्जलिपुटे भगवतो मुखमवलोकयमान लिखेत् । भगवतो बुद्धस्य वामे नारायण चतुर्भुज लिखेत् सर्वप्रहरणहस्तम् । तत्समीपे गरुड विकृतरूपम् । तदनन्तर विनताभरण च लिखेत् । आर्यमञ्जुश्रियस्य पृष्ठा आर्याक्षयमतिं सुधन सुभूतिं च लिखेत् कृताञ्जलिपुटा । एवमभ्यन्तरमण्डले लेख्य, पूर्वद्वारे बाह्यत शुक्लभस्मना वज्र समालिखेत् दक्षिणेन कृष्णवर्णिकया खड्गम् उत्तरेण पीतवर्णिकया गद लिखेत् । पश्चिमेन रक्तवर्ण पाश समालिखेत् ॥

एव बाह्यमण्डलेभ्य मूलमन्त्रेण सर्वदेवाह्वानन कृत्वा, सर्वपुष्पैः सर्वग धैरभ्यर्च्य, गुग्गुलधूप, त्रिमधुरेण च बलि दत्त्वा, तेषामग्रत खादिरसमिद्भिरग्निमुपसमाधाय, सर्वसत्त्वेभ्य कारुण्यचित्तमुपस्थाप्य, नागासनोपविष्ट, सर्पकण्टकाना दधिमधुघृताक्तानामष्टसहस्र जुहुयात् ॥

तत मिद्धिनिमित्त सर्पा आगच्छन्ति । अर्घ्यो देय । एव सिद्धिर्भवति । स्वमन्त्रमावर्त्य वदेत् — 'मम सिद्धि विधाय गच्छत ।' ततो गच्छन्ति ॥

ततो विसर्ज्य मूलमन्त्रेणैव समभ्युक्षयेत् । तत कर्म समारभेत् । सर्व च बलिद्रव्यमप्सु क्षिपेत् । पश्चाद् नानामात्रेण सर्वविषकर्माणि करोति ॥

विद्वेषण कर्तुकाम सर्पास्थीनि विषाक्तामेकविंशत्याहुतिं जुहुयात् । विद्वेषो भवति ॥

उत्सादयितकाम सर्पनिर्मोकायण्डानामेकविंशत्याहुतिं जुहुयादुत्सन्नति । कारपक्षाणामेकविंशत्याहुतिं जुहुयात् सद्य [illegible]कवद् भ्रमति । स्त्रीपुरुषवशीकरणे सर्षपाणां घृताक्तानामेकविंशत्या हुतिं जुहुयाद् वश्या भवति । राजान राजमात्र वशीकरणे परमान्नस्य घृताक्तस्य एकविंशत्याहुति जुहुयाद् वशो भवति । लोष्टकमभिमन्त्र्य, अग्नौ प्रक्षिपेत् न तपति । तृणेन मोक्ष । उक्तेन मत्स्या न वध्यन्ति । चेतनमचेतन वा सर्व काटिकया आकर्षयति ।

सर्वव्याधितो उदकाभिषेकनेन स्वस्थो भवति। दण्डमभिमन्त्र्य द्वार माहरेत्, अपावृत भवति। ताम्र दण्ड नीलपल्लवाद्य गृह्य गङ्गामे ग च्छेत्, परसैन्य दर्शनाद् भिद्यति। श्मशानके ग्रन्थिबन्धनेन सर्व मन्त्रा स्तम्भिता भवन्ति। मुक्ते मोक्ष। सर्पवदन भस्मना पूरयेत्। यस्य नाम गृह्य करोति, स मूको भवति। गण्डविप सकृज्जप्तेन उद केन हनेत्। गण्ड सङ्कुचति। पतति च परविद्या। अनेन बध्नीत। तथैव मोक्षयति। इष्टकमभिमन्त्र्य मावर्त्य जपेत्। परबद्धग्रंथि स्तोभयति। एवं वर्षापयितुकाम पूर्वोक्त मण्डलक लेख्य, पूजां कृत्वा, अग्निमुपसमाधाय वरुणसमिधानामष्टसहस्र जुहुयात्; आढक वर्षति। एव यावद्दशाढक वर्षति। पिप्पलामभिमन्त्र्य हस्तेन गृह्य, यावद्दिश क्षिपति, तत्र अशन सङ्क्रामति। अग्निदाहेष्वेष एव विधि। उदकमवतरणमेव कर्तव्यम्। नागानुत्सारयति। मृन्मयं सर्प कृत्वा यमिच्छति त दशापयति। अङ्गारसर्पस्य एष एव विधिः। पुनरपि मोक्षयति। सर्षपान् सप्तजप्तान् चतुर्दिश क्षिपेत्। सर्पा आगच्छन्ति। मण्डलबन्ध कार्य। पानीयेनाभ्युक्ष्य विसर्जयेत्। उदकेन मोक्षण लेष्टुना नागारापेण पांसु परिजप्य उदके क्षिपेत्, निर्विष भवन्ति। धनु गृह्य अलोहाश्चत्वार शरा चतुर्दिश क्षेप्तव्या। सर्प शरचलितं गृह्य आगच्छन्ति। स च नागो वक्तव्य। विष प्रतिपिबेति। पिबति दष्टकोत्तिष्ठति। अथ सर्पाणि शल्लयितु पानीये पानीयेनाभ्युक्ष्य तस्य तस्य शरा पतन्ति। सर्पश्चाप्नतो भवति। वल्मीकमृत्तिकया चत्वारो नकुला कर्तव्या। पानीयमभिमन्त्र्याभ्युक्षयेद्, गत्वा सर्पापहाया ग च्छन्ति। आगता वक्तव्या — 'विष प्रतिपिबस्वे'ति। पिबन्ति मृ तक उत्तिष्ठति। अङ्गारमभिमन्त्र्य, रेखां कृत्वा, अर्कलतया ताडयेत्; तत सर्पा नष्टैराकृष्यमाणो आगच्छति। विषं प्रतिपिबेति पिबति। दष्टा निर्विषो भवति। ध्वज छत्र वाभिमन्त्रयेत्। याव तो प्राका विषपीतकाश्च सर्वे निरीक्ष्य निर्विषा भवन्ति वादित्रमभिमन्त्र्य वाद येत्। श्रुत्वा निर्विषा भवन्ति। पांसुना पञ्चरङ्गिकेण मण्डलमालिख्य तालशब्द कारयम्। ततो नागा सर्वाश्चतर्दिशमागच्छन्ति। ते म ण्डल प्रविशन्ति। न भेतव्यम्। शिखाबन्धमात्मरक्षां च कारयेत्।

वर्षापयति। मृण्मयं मुहं कृत्वा करसम्पुटेन गृह्य भस्मास्त्रमुन्मत्ततीर्थे अर्द्धरात्र जपेत्, यस्य नाम्ना स वशो भवति। श्मशाने तण्डुलां मकरीर्थे नेत्रहन्य स्थाप्य ग्रहण जपेत् वृत्तिं कल्पयति, सपरिवारस्य। नकुलमूषकरोमाणि कपालास्थिधूप सर्वभूतवशङ्करः। विप भल्लातक मधुना सह धूप वशीकरणम्। कुक्कुटाण्डकपालानि कटुतैलेन सह धूप वशीकरणम्। पलाश सुरसबीजानि मदनपुष्पाणि धूपो वशीकरण। शतपुष्पा देवदारु पुरीष मण्डूक चटकस्य धूपो वश्यार्थ। यवास्तिला दूर्वा च गोमूत्रेण धूपो वशीकरणे। हरितालं काकजिह्वा च शोणितन धूप मूकीकरणे। मानुषरोमाणि गोमांसेन कतस्तलेन रायुक्ता धूपा रोगकरणे। काकपक्षोलूकपक्षाणि च निम्बतैलेन उच्चाटने। गुग्गुलुघृतं सीधुसहित धूपोऽय सर्वसत्त्वप्रियङ्कर। पत्रक त्वच तुरुष्के धूप सर्वसत्त्वानुबन्धनकरम्। आज्ञाकरो भवति। तुरुष्क चन्दन कर्पूरेण सह अञ्जन राजवशीकरणम्। पूजावलिविधान कृत्वा विष्णुप्रतिमाया अग्रत उपरिष्टान्महागाराकृतीनष्टौ हु वाष्टसहस्र जपेत् त्रिरात्रम्, द्रव्य यमिच्छति। श्मशानभस्मना प्रतिकृतिं कृत्वा महामासधूपं दत्त्वा कुशविण्डकोपविष्ट अष्टसहस्र जपेत् रात्रौ श्मशाने, यमिच्छति तमानयति। आज्ञां करोति। उच्चाटने कर्पासतुषां जुहुयात् काकपक्षैः क्षणादुच्चाटनो भवति। श्मशान उदुम्बरसमिधाभिरग्निं प्रज्वाल्य कपालोपविष्ट' सर्पकञ्चुकं जुहुयात्। अन्नमक्षयं भवति। श्मशानास्थिचूर्णं सर्षपसहितमष्टसहस्र जुहुयात् यस्य नाम्ना, स योजनशतादागच्छति। सर्वकामेषु कर्तव्यः। देवो श्वेतचन्दनेन विततपक्ष सर्वनागाभरण तीक्ष्णधार विकृतानन विकृतनखपद्मोपविष्ट अधोदत्तदृष्टिं निम्नतरं काष्ठे कुड्ये भित्तौ वा वेपधिकेन कर्मकारेण कारापयेत्। वितस्तिमात्र कृत्वा तस्याग्रत' सर्वकर्माणि कुर्यात्। पलाशे पुष्टिकामेन, वैल्व वश्यार्थहेतुना, उदुम्बर च पुत्रकामाय, गोकाम' शिरीषमय, मधुक वा द्रव्यकामः कारयेद् विधिवत्। सूकरमांसेन फलकामम्। अश्वमांसेनापत्य भवति। कृष्णसारमांसेन श्रियार्थी, पृषतमानुकीर्तिकामो वा स्त्रीकाम पृथिवीकामो वा, व्याघ्र

मांस व्यवहारादिविजयार्थी महामांसम् वस्त्रार्थी हस्तिबला राजव शिकरणे अतिबला राजामात्यवशीकरणे अश्वगन्धां जुहुयात् । उत्सादे हस्तिरोमाणि, पिचुमर्दमभिचारे तु गले नागाः प्रोक्ता ॥

पटकरण भवति । भ्रातुमारणे पौष्टिके मात्तिः । रजतार्दा कीर्तिवृद्धये । काकपक्षहोमेनोत्सादयति । गृध्रपक्षैर्मारयति । कौशक पक्षैर्विद्वेषयति । मयूरपक्षैर्विद्वेषयति । मयूरपक्षैर्धनानि दद्यात् । तित्तिरि पक्षैः स्त्रीं मधुलिपक्षै पुत्रां, काकपक्षे सुवर्णम्, टिट्टिभिपक्षैर्माहनम् । श्वमांसेनोत्सादयति, महिषमांसेनाकर्षयति, आभिचारुके महामांसेन, शान्तिके मृगरोमाणि कन्यार्थी उलूकरोमाणि देशघातेच्छा गलरोमाणि विद्वेषणे मानुषरोमाणि आभिचारुके मानुष्यरोमाणि शत्रुनाशने सर्वेष्वेव तेषु त्रिसन्ध्य सप्ताहिको होमः । स्मरणमात्रेणाह सर्वत्रिपकर्माणि करोमि । सततजपेन सर्वकर्माणि करोमि । यो मम भगवन् अस्मिं कल्पराजे मन्त्र साधयमानः त्रिगन्धमुद्दीरयिष्यति, तस्याह सर्वविषो पद्रवचिकित्सां करिष्यामि । पूर्वाऽनुबद्धो भविष्यामि ॥

अथ तस्मिन् समये स्वरूपमुद्रां भावयति स्म । अङ्गुष्ठौ परस्पर वेष्टितौ कृत्वा शेषाङ्गुल्यो पक्षवत् संस्थिता स्याद् । गरुडरूपमेव मम प्रोक्त पिनाकिना मुद्रा ॥

> अस्य सन्दर्शनान्नागा निद्रवन्ति भयार्दिता ।
> अधोमुखास्तु अङ्गुल्यः मन्त्रणानेन मन्त्रिन् ॥

'ॐ जः' ॥

> नागदमनीति विख्याता नागानां दर्पनाशनी ।
> पद्मकोशप्रतीकाशौ अङ्गुल्यः पार्श्वत स्थितौ ॥
>
> अङ्गुष्ठो मध्यत स्थाप्य निष्पीड्याङ्गुल्य तु यत्नतः ।
> नागदमनीति विख्याता दिव्या दिव्येषु कर्मसु ॥
>
> अनामिका तर्जनी चैव मध्यमेन सुसंस्थितम् ।
> अङ्गुष्ठौ वक्रसंस्थान शेषा पार्श्वतः स्थिता ॥
>
> गरुडनादेति विख्याता सर्वनागानुगामिनी ।
> यानि च मयाक्तानि सर्वमन्त्रेषु साधन ॥

लौकिके गारुडे शास्त्रे + । + + । + + + ।
सर्वं तज्जनेन कर्तव्या सर्वसत्त्वानुकम्पया ॥

किञ्चित्कार्या अशेषास्तु मूलकल्पार्थसाधका ।
अस्मिन् कल्पवरे नित्य सर्वसत्त्वानुरागिण ॥

प्रसिद्धा सर्वसमार्था सर्वसत्त्वार्थपुष्कला ।
ते ते म नयुक्ते तु यथोक्तव्या धर्मविस्तरे ॥

इह कल्पवरे मूले प्रतिष्ठा क्ष्मातलेन ते ।
समुपत्सर्वभूतानामिह मन्त्रास्तैर्गुण ॥

विस्तरेण सर्वतो दृष्ट्वा सर्वसत्त्वानुकम्पने ।
प्रसिद्ध सिद्धिकामानां हेतुयुक्तिसमाश्रिताम् ॥

कुर्यु सर्वेन सिद्धि सर्वमन्त्रेषु देहिनाम् ।
सर्वसत्त्वाश्च सान्निध्य कल्पेषु मनसेप्सितम् ॥

इतिहासपुरावृत्त वर्तमानमनागतम् ।
कथय त्येष सयोगा मन्त्रमुद्रसमीरणात् ॥

आकृष्टा एष भूतानां मन्त्रोऽयमपराजित ।
ईशानः सर्वभूतानां रुद्रोऽय सुरपूजित ॥

तुम्बको त्र्यक्षगाज्ञेयो कल्पस्थोऽथ महीतले ।
हिमाद्रिनिलयो नित्य उमापतिमहेश्वर ॥

त्रिशूली खड्गधर ज्ञेय पिनाकी वृषभ ध्वज ।
गणाध्यक्ष शूलिनश्चैव महेशाख्योऽथ महर्द्धिकः ॥

अक्षरोऽक्षरमित्याहु कपर्दी तु गदायुध ।
एष म न्त्रो महार्थस्तु सर्वभूतार्थकम्पक ॥

कुर्यात् सर्वाणि कर्माणि सर्वकर्मसु साधनम् ।
एष देवो महात्मा वै महादेवेति कीर्त्यते ॥

प्रसिद्ध सर्वकर्माथ फलहेतुप्रदायक ।
तस्य मन्त्र प्रवक्ष्यामि श्रृणुध्व भूतोऽधिपा ॥

"ॐ स्थ नमः सर्वबुद्धानामप्रतिहतशासनानाम्।
त्रैलोक्यगुरूणामचिन्त्याद्भुतरूपिणाम् ॥
शिवोद्भवोद्भव भुवनत्रयपूजिताय हूँ हूँ फट् फट् ।"
एष मन्त्रो महामन्त्र सर्वशत्रुभयप्रद ॥

आयुषत् सर्वभूतानां कर्म शान्तिकपौष्टिके ।
सर्वेष्वेव हि कर्मेषु प्रयोक्तव्यो मनसोद्भवे ॥

सर्वभूतरुतज्ञानं अभिज्ञज्ञानचेष्टितम् ।
अभिज्ञवशिता चैव सर्वशास्त्रज्ञतां समम् ॥

प्राप्नुयात् पुष्कलां चार्थां फलहेतुमनुत्तराम् ।
यावन्तो लौकिका मन्त्रा सर्वांश्च सुपुष्कला ॥

तां सर्वां प्राप्नुयान्मन्त्री सिद्धमन्त्रस्तु बुद्धिमां ।
यावन्तो लौकिका मन्त्रा शैवाश्चापि सुपूजिता ॥

मन्त्रा गरुत्मने चापि सिद्धिहोमफलोन्मुखम् ।
सर्वलौकिमन्त्रास्तु इन्द्ररुद्रादवाद्भवा ॥

ते स्युर्मन्त्रराट् सर्वे निबद्धा विधिहेतुत ।
याम्याग्निवायुतोयानां कुबेरो मानरो तथा ॥

सङ्ख्या द्वादशका तपा ब्रह्मेशानपुरा ।
सन्ति शक्रदेवानां पितामहमुपजका ॥

नामधान्येश्वरा न्याना ये म नामचारिणाम् ।
सर्वे ते वशमायान्ति मन्त्रे नामीरिताधिप ॥

+++स्वयाम्यदग्निना दिवाकसजन्ताकमाम् ।
दिङमन्दिराश्रया ये च विदिशु श्चापि चारिण ॥

नरो र्नै नभस्तले चापि भूम पातालभागरा ।
पथाश्रयसमापन्ना फणिना ये महर्द्धिका ॥

हिमाद्रिकुक्षिसन्निष्ठा विन्ध्यकुक्षौ समाश्रिता ।
महाधातुवरे चित्र महाशैलेऽथ विश्रुते ॥

नानादेवगणाकीर्णे सिद्धचारणसेविते ।
अप्सरोगणसङ्गीते सुमेरा रविरिवोज्ज्वले ॥

यत्रस्था येऽत्र नागा वै ये तु भूतगणाश्रया ।
विचित्ररूपिणो ये वा तत स्था ये समागता ॥

सर्वे ते वशमायान्ति मन्त्रेणानेन योजिता ।
ये च दिव्यगणा मन्त्रा सर्वभूतभयप्रदा ॥

सर्वे ते वशमायान्ति मन्त्रेणानेन योजिता ।
गिरिगह्वरदुर्गेषु विचित्रैः कन्दरोदरै' ॥

मन्दिरैर्हेमसङ्काशैर्निवसन्ति महीतले ।
सर्वभूतगणाध्यक्षा विविधा हारिणो जनाः ॥

+ + + + + + + + निवासेष्वभिकीर्तितैः ।
दिव्यभूतगणाध्यक्षा विचित्राश्चैव रूपिण' ॥

सर्वभूतगणाश्चैव विचरन्ति महीतले ।
विविधाकारमुख्यास्तु विचित्रा रूपगताश्रया ॥

विविधाकारविचारस्थौ विविधाम्बरभूषणा ।
ते सर्वे मन्त्रमुख्येन पथेवारपश्यता ॥

अनेता सर्वमन्त्राणां लौकिकानां महर्द्धिकाम् ।
सर्वभूतवश कृतो मन्त्रमन्त्रेश्वरो नरः ॥

सर्वमन्त्रेश्वरां मुख्यां यमरुद्रेन्द्रवासवाम् ।
मन्त्रनाथोऽथ मुख्यस्तु सर्वलौकिकमग्रजी ॥

बिभर्ति सर्वतो मन्त्रां कल्पांश्चैव सुपुष्कलाम् ।
एष मन्त्रेश्वरो देव अधिपति सर्वमन्त्रराट् ॥

सर्वविघ्नेश्वरो मन्त्री स्मर्तव्यः सर्वजापिभि ।
उग्रमुग्रेऽथ मन्त्राणां प्रभुरेव प्रगीयते ॥

सर्वस्मि शैवतन्त्रे वै सर्वलौकिकचेष्टितै ।
चरितं चापि भूतानां रुतं चापि जपेत् सदा ॥

मन्त्रिभि सर्वकाले वै प्रयोक्तव्य गिरिद्रवाभिभ ।
वैनतेयस्तदा पक्षी प्रणम्य जितरग मजाम ॥
मञ्जुश्रिय तथा नित्य सर्वा बुद्धसुतान तथा ।
उवाच मधुरा वाणी प[?] ।।
भाष भाष महासत्त्व ! गम्भीरा[?] ! ।
धर्मनैरात्म्यतत्त्वस्य अग्र[?]प्रतिष्ठित ! ॥
मयोक्त कल्पविस्तार मूलमन्त्रा[?]चरम् ।
अभिसक्षेपता ज्ञेय सर्वम [?]राधिकम् ॥
लौकिकेष्वेव मन्त्रेषु प्रयोज्य सर्वसाधने ।
नाभ्यन्तरपद मन्त्र मयाक्त य प्रशस्यते ॥
जिनपुत्रैस्तु महावीरै सर्वश्रावकखड्गिभि ।
नान्योत्कृष्टतम म त्र मयि बुद्धि प्रयुज्यते ॥
ईषिस्मितमुखो धीर मञ्जुघोषमथाब्रवीत् ।
अथाह मधुर वाक्य शब्दार्थास्पदभूषणम् ॥
एष ते सुवर्णमाख्यात धर्मस्वामी नरोत्तम ।
विसृक्षु सर्वमन्त्राणा धर्मनैरात्म्य[?] ॥
जगद्गुरुमहावीरो बुद्ध आदित्यबान्धव ।
प्रणेता सर्वम त्राणामग्रम [?] ॥
मधुरेकमनाथा [?] गुरु ।
सर्वसत्त्वानुकम्पार्थं अस्माक च गुणोदय ॥
धर्मकोविदता [?] ।
एष ते सर्वमन्त्राणां [?] महाद्युति ॥

बोधिसत्त्वपिटकावतसकान् महायानवैपुल्यसूत्राद् आर्यम ञ्जुश्रियमूलकल्पाद् एकचत्वारिंशतिमः गरुडपटलपरिवर्त ।

---

## अथ द्विचत्वारिंश पटलविसर ।

अथ खलु भगवा शाक्यमुनि पुनरपि शुद्धावासभवननमवलोक्य, मञ्जुश्रिय कुमारभूतमामन्त्रयते स्म । अस्ति मञ्जुश्रीः त्वदीय सर्वसाधनोपयिकमण्डलविधाने सर्वेम त्रतन्त्रेषु महापञ्चसमयरहस्यम्, यै सर्वसत्त्वासमय नातिक्रमन्ति, समयसङ्ख्यादितमनुप्रविष्टा भवन्ति सर्वलौकिकलोकोत्तरमण्डलेषु साधा यसाधनोपयिकसर्वमन्त्रतन्त्रेषु सर्वे मुद्राश्चेते परमरहस्यतमा परमसौभाग्यतमा परमाश्चर्याद्भुततमा । येविना न शक्यन्त सर्वमन्त्रा आराधयितु साधयितुम् । पूर्व सर्वतथागतै भाषितत्व त । एतर्हि अह च भाषिष्ये सर्वसत्त्वानामर्थाय हिताय सुखाय लोकानुकम्पायै महतो जनकायस्यार्थाय सर्वमन्त्रजापिनां महामन्त्रको शानित्यौत्सुक्यधर्मधात्वाचिन्त्यमहायाननैरात्म्यधर्ममेघमनुप्रवेशनतायै कतम च तत् भाषिष्येऽहम् ॥

शृणु मञ्जुरव! सत्गुह्यमुद्रासमोदिताम् ।
यथा तथा स्वय वाक्य पुरा गीतमृषिसत्तमै ॥

कृत्स्नमुद्रागण ह्यग्र गुह्यमन्त्रार्थिनां सदा ।
सर्वकालेषु योज्येत सर्वकर्मसु मण्डले ॥

अथ मञ्जुरव श्रीमां विहसन् पङ्कजक्षण' ।
निरीक्ष सुगत श्रेष्ठ सर्वधर्मेश्वर प्रभुम् ॥

कृताञ्जलिपुटो वीरः जिनपुत्रो महर्द्धिक ।
उवाच मधुरा वाणीं दिव्यशब्दार्थभूषिताम् ॥

साधु साधु महाप्राज्ञ! धर्मचक्रानुवर्तकम् ।
धर्मतत्त्वार्थमन्त्रत्व यस्त्व भाषयसे विभो' ॥

एवमुक्त्वा तु सुगत शाक्यसिंह नरोत्तमम् ।
अथ मञ्जुरव' श्रीमा तूर्ण्णी तस्थुस्तदन्तरे ॥

इत्याह भगवा बुद्धो धर्मधात्वेश्वरस्तदा ।
शृणाथ भूतगणा! सर्वे! देवसङ्घा! महर्द्धिका! ॥

मण्डले भुति ग पानां ञविद्रा ताथ द गिनाम ।
आलिगन्तानां भुति गणाणां गाति ग ता भविष्यथ ॥
ये च ते सर्वेद्रानां मत्यारा गगगिणाम् ।
श्रावकाणां तु ग ग्रद्रा ता ना गिर ॥

सर्वलौकिकमुद्रास्तु जिनाजकुवरचिण ।
सर्वमद्रास्तु सर्व सर्वकर्मेषु योजिता ॥
तानहमभिसंक्षेपाद् वक्ष्यऽह मन्त्रमन्त्रिणाम् ।
गन् पूर्व नवित ग त मर्व मण्डल त कर्मसु ॥
स्थान होमो जप कर्म त तथव मयाजयत् ।
मण्डले आलिता लेख्य मुद्राऽय बुद्धनिर्मित' ॥
सित छत्रोऽथ बुद्धाना रामलाञ्छालाऽथ भूषणम् ।
पद्मरागिकचूर्णैस्तु समन्ता माणिराजितम् ॥
विचित्रगन्धोज्ज्वल श्रेष्ठ द्राक्षुधममभम् ।
एष मुद्रो महामुद्रो बुद्धाना मूर्द्धजा वर ॥

तस्य दक्षिणत पात्र सम ताऽयोनिमाकिनम् ।
तदन तरे खखवरक दण्ड जीवग्जा पर ॥
श्रीवत्सस्वस्तिकश्चक्रकरक चापि वर्णितम् ।
पुस्तको ध्वजमित्याहु' पताक च तदन्तरे ॥
घण्टा पश्चिमजो मुद्र' कथित लोकपुङ्गवे ।
छत्रे वामत पद्मं मणिमद्रा तद तरे ॥
तदन्तरे वज्रमित्याहस्त्रिसूच्याकारसम्भवम् ।
उ पत तु गतामद्र सलिल सलिलाश्रित ॥
तोयश्च तद त्ये व तायधाराभिनि त्रित ।
तदन्ते कुण्डलो ज्ञेयो भूपालो शोभनो तथा ॥

तद तेऽथ महाशेल' चतुरत्नोऽथ उज्ज्वल ।
तद ते महादधिलख्य, विचित्रो गन्धाज्ज्वल ॥

तद् तेऽथ महाप्रज्ञ' सफलो द्रुलभूषित' ।
एष वृक्षो महामुद्रो वामपार्श्वे जा तजाम् ॥
सितातपत्राऽथ तद्धानां मुद्रोत्पक्तो नगोग्रज' ।
स त्रेऽथ खड्गिनां ज्ञेय' प्रत्येकजिनयो वर' ॥
चीवर मुद्रवरो ख्युक्त सर्वश्रावकसम्भव ।
आर्याणामहतां लोके दृष्ट चैव प्रगीयते ॥
तत्फलोत्पभिगतां लोके श्रीर सो मुद्रमिष्यते ।
खड्गरकश्च महामुद्र' पत्येकजिनजोऽपर' ॥
धर्मचक्रोऽथ मुद्रो वै सर्वन्पितिविनालक ।
कथित धममुद्र तु नारसाक्षेपज स्मृत ॥
प्रज्ञापारमिता लोके जिनधातुर्मुद्रोऽथ पुस्तक' ।
ध्वजपताका महामुद्रो विघुष्टो लोकपूजितौ ॥
मराकर्णा महावीर्या सर्वसुवर्णीपसम्भवौ ।
घण्टापश्चिमा मुद्र प्रत्येकार्हसूर्धज ॥
बुद्धमुद्रे तु नाम त पद्मो लाकेशसम्भव' ।
मुनिमुद्रस्तथा ज्ञेय' समन्तज्यातिलाभिने ॥
वज्र दक्षिणेमुद्रा नोधिसत्त्वस्य धीमत ।
उत्पल मञ्जुघोषस्य कुण्डल क्षितिगर्भिण्ये ॥
महातोयता मुद्रः कथिता गगनालये ।
महाशैलाऽथ मुद्रश सर्वन्पिविनालिने ॥
महान्भि त था मुद्र सुगता मज। सागरे ।
महावृक्षस्तथा मुद्र उद्घुष्टो लाकविश्रुत ॥
सर्वोश्च जिनपुत्रास्तु मुद्रोऽय त्रिभवालये ।
घण्टासमीपजे स्थाने आलिखेज्जिनवर्णितम् ॥
मुद्र सर्वमुद्राणां चतुरश्रान्तसम्भवम् ।
विचित्र रङ्गजोपेत चारुवर्णं विराजकम् ॥

एतत् सुरमुख्यानामाख्यातां महर्द्धिकाम् ।
मुद्रा समाधिजेत्याहुरान्तिुद्धैस्तु वर्णितम् ॥
तनाचरे तु तथा गेये ब्रगाण पद्मजोञ्ज्र ।
रूपावचरमित्याहुर्मन्त्र त्रिभुवनालये ॥
तदेव दाक्षणा रेखा गर्भमण्डलतो बहि ।
दक्षिण न्शिमाश्र य मुद्र कामजा वर ॥
निर्दिष्टो मनिमुख्यैस्तु कामधा वेश्वरे परे ।
मुद्रोऽय निर्मिता ोके गर्भेरसमद्दिरे ॥
रुद्रेन्द्रवसुमुख्यानां विष्णुतीर्थ्या दिगम्बराम् ।
अर्कावासवमोप या त्रिवस्त्रयमचिह्निताम् ॥
लोकपालां वहिस्तां ता यथामन्दिरदिक्षु ताम् ।
तथाचालिखेत् सर्वास्तथा मुद्रांस्तु योजयेत् ॥
यो यस्य वाहन ख्यात प्रहरणावेपधारिणम् ।
त तथैव तथा मुद्रो निर्दिष्टो लोकपूजितैः ॥
एष मद्रगणो ह्युक्त सर्वलोकोत्तर शुभ ।
लौकिकामथ सर्वत्र सर्वकमसु साधक• ॥
निर्दिष्टा मुद्रमुख्याश्च सर्वमुद्रोऽथ मन्त्रिणाम् ।
आलेख्य तु भुवि मर्त्यस्तु जापिभि' सिद्धिकामदै' ॥
बोधितत्त्वलिप्सुरिति ॥

बोधिसत्त्वपिटकावतसकात् महायानवैपुल्यसूत्रात्
आर्यमञ्जुश्रियमूलकल्पात् चत्वारिंशतिम
महाकल्पराजविसरान
सर्वकर्मसाधनोपयिक
परिसमाप्त इति ।

# अथ त्रिचत्वारिंश पटलविसर ।

अथ भगवा शाक्यमुनि पुनरपि शुद्धावासभवनमवलोक्य, मञ्जुश्रियं कुमारभूतमामन्त्रयते स्म । अस्ति मञ्जुश्री ! त्वदीये मण्डलविधाने सर्वकर्मेषु सर्वतन्त्रमन्त्रेषु आह्वानन विसर्जन जप नियम होम साधन रक्षाविधानादिषु सर्वकर्मेषु महामुद्र एक एव महावीरमसङ्ख्येयेषु सम्बुद्धकोटिभाषित चाप्यनुमोदित च कतम च तत् ॥

शृणुस्व मञ्जुरवा श्रामां गम्भीरार्थगुणान्वी ! ।
य नध्वा जापिन सर्वे ॥

महामुद्रां महापुण्यां महामङ्गलसम्मतम् ।
महाब्रह्मसम पुण्य पवित्र पापनाशनम् ॥
महाक्षेमङ्गम श्रेष्ठ निर्वाणपदमच्युतम् ।
शिव शान्त तथा ज्येष्ठ शीतीभूत परायणम् ॥
सर्वमुद्रेश्वर ख्यात सर्वमुद्रेषु मूर्धजम् ।
सर्वतन्त्रेश्वर नाथ ख्यात त्रिभवालय ॥
ऊर्जित च त्रिधा दिव्य भौमदिव्या येन्त्वपि ।
साक्षाद् बुद्धमिव चिह्न सर्वसत्त्वाश्रय विभुम् ॥
सपुष्टत्रिभवे नित्य सर्वमुद्रैस्तु मुद्रणाद् ।
रक्षार्थं जापिना नित्य सर्वकर्मेषु मन्त्रिणाम् ॥
रक्षोघ्नमगद ख्यात मङ्गल्यमघनाशनम् ।
उत्कृष्टं सर्वकर्मेषु दुष्टसत्त्वनिवारणम् ॥
दुर्दान्तदमको लोक महामुद्राऽस्य प्रगीयते ।
सर्वमन्त्रेषु युक्तो वै त्रिज मगतामन्त्रिणाम् ॥
ह युर्विद्यान म सर्वत्र मर्वकर्मपु मान्त्रिणाम् ।
त्रिधा योनिगता मन्त्रामाराहयति तत्क्षणात् ॥
पूनर्नयति ता लोक पननोशयन हि ताम् ।
पातयत्यव मर्वत्र कृत्मा चेव महीतले ॥

# अथ चतुश्चत्वारिंश पटलविसर ।

अथ खलु भगवां शाक्यमुनिः पुनरपि शुद्धावासभवनमवलोक्य सर्वतथागतधर्मवरोत्त्वचिन्त्यगुणव्यूहालङ्कारभूतकोटिनियुतसहस्रपेयजिनमुद्रामुद्रित सर्वसत्त्वचिह्नभूत मुद्रापटलपरमगुह्यतम सर्वलौकिकलोकोत्तरश्रेयसमन्नत अकल्पविकल्पित सर्वसत्त्वैः परमार्थदर्शनपथप्रवृत्तिभूतं सर्वमन्त्रसर्वसञ्ज्ञासाधारणभूतमिहैव जन्मनि सर्वसत्त्वाना सर्वाशापारिपूरक सर्वबुद्धबोधिसत्त्वानामाराधनपरसुखहेतुकबोधिसम्भारपरिपूरणनिमित्तम् आह्वाननविसर्जनगन्धपुष्पधूपसर्वमाल्योपहाराविद्याविद्यावेशनदर्शनसर्वकार्यार्थसाधनसर्वदेवनागयक्षगन्धर्वासुरगरुडाकिन्नरमहोरगयक्षराक्षसपिशाचकूष्माण्डरौद्रसौम्यभात्रदमकाध्यक्षभूताधिपति सर्वकार्येस दर्शनज्वलनाकाशगमनान्तर्द्धानवशीकरणबोधिसम्भारनिमित्ताश्चर्याद्भुत सर्वमन्त्रतन्त्रार्थानुनीत सर्वविद्याराजनमस्कृतं सर्वविद्यासाधक सर्वबुद्धमात्रामाश्रित यथेप्सितार्थसत्त्वमनोरथापरिपूरक सर्वासां सर्वमन्त्राणा दृष्टधार्मिकहेतुनिष्पादक सक्षेपतो यथा यथा युज्यते, यथा यथा साध्यते तथा तथा साधयते । एषा मञ्जुश्रीः ! परमार्थपटलसर्वबुद्धानां परमार्थगुह्यतम भाषिष्ये । पूर्वं भाषितवां सर्वबुद्धैः भाषिष्यन्तेऽनागता बुद्धा भगवन्तः । एतद्वह भाषिष्ये, तच्छ्रूयतां महासत्त्व! भाषिष्ये । तच्छ्रूयतां महासत्त्वैः! भाषिष्ये । साधु च सुष्ठु च मनासि कुरु मञ्जुरव ! मनोज्ञमतिभानवां वक्ष्येऽहं वक्ष्येऽहमिति ॥

शाक्यसिंह नरश्रेष्ठो सम्बुद्धो ऋषिसत्तम ।
सत्त्वमर्थमभिज्ञाय परमार्थार्थदर्शनम् ॥

गुह्यमात्रार्थमुद्रा वै भाषसे मुनिपुङ्गव! ।
शुद्धावासपुरे रम्ये शुद्धसत्त्वसमाश्रिते ॥

महापर्षद्वरे श्रेष्ठ वीतरागालये तदा ।
भाषिते कल्पराजे तु मञ्जुभागीततरिवते ॥

बुद्धपुत्रैस्तदामात्ये परमार्थविदैर्विदे ।
शाक्यसिंहस्तदा आह शृणुष्व पर्षत् कथ ॥
बुद्धपुत्रस्तथा ज्येष्ठ महायानाग्रधर्मिण ।
नाम्ना सम तभद्रो वै इत्युवाच गिरा वराम् ॥
बालरूपी महारूपी कुमारस्त्व वर्ण्यसे जिनै ।
शाक्यस्य कुलजा दक्ष श्रोता बुद्धा निरीक्ष्यते ॥
त्वं हि विश्वमहामाज्ञा लोकानुग्रहकाम्यया ।
त्वदीयं कल्पविसर मुद्रामुद्रित त्विदम् ॥
अध्येषय महावीर ! बुद्धपुत्र ! महर्द्धिक ।
सारभूत कल्पस्यास्य महर्द्धिकम् ॥
एवमुक्तस्तु वीरेण बुद्धपुत्रेण धीमता ।
मञ्जुश्री त्वरितो जात बालक्रीडाभिनिर्मित ॥
प्रणम्य सुगत नाथ जगदेका तचक्षुषम् ।
उवाच मधुरा वाणी करुणार्द्रम्रेडितेन तु ॥
कथयेयु भगवा बुद्ध प्रज्ञाबलतत्त्ववित् ।
कथ तु सर्वमन्त्रा वै सिद्धयन्ति जपिना ध्रुवम् ॥
कथ वै ह्यविकल्पेन अमोघान गच्छन्ति प्राणिनाम् ।
सिद्धयेयुः क्षिप्रजप्ताभि' सर्वोत्पथु न योजिता ॥
आ भवाग्राच्च ससारादा वीच्यान्ताश्च नारका ।
एतेष्वाश्रिता ये च प्राणिनोऽधिस्त्रिधातुका ॥
आहूयन्ते निगृह्य ते आवेश्यन्ते च पश्यताम् ।
सर्वकर्मार्थयुक्ते च तुष्टिपुष्ट्यर्थकारणै ॥
दशभूम्याश्रिता ये च सौगते वर्त्मनि स्थिता ।
बोधिसत्त्वा विबुद्धाश्च प्रत्येका वा बोधिमाश्रिताः ॥
वीतराग महात्मन आहूयन्ते सुपूजिता ।
समयैर्मन्त्रिभिर्युक्ता इमैर्मुद्रै समुद्रिता ॥

तादृशेन तु युक्तेन सत्त्वेनेव सुयोजिता ।
मुद्रेय कुरुते ह्यर्था यथेष्टां चापि पुष्कलाम् ॥
उपदेशाच्च सिद्धांश्च मतिम नाऽर्थसाधना ।
आचार्यसम्मता लोके शिष्या ग्राह्यास्तु सर्वदा ॥
विधिवत् कर्मदृष्टेन पुरुषेणेह भक्तित ।
महायानगतैर्नित्य मुद्रेय सम्प्रयुज्यते ॥
सर्वेषां तु मुद्राणां त्रिधा मन्त्रेषु योजिताम् ।
अग्रा ह्यग्रतमा लोके एते मुद्रा प्रभावत ॥
सिद्ध्यर्थं सिद्धिकामानां तथा मन्त्रैः सुयोजिताम् ।
क्षिप्रमर्थकरा ह्येते सर्वसौख्यफलप्रदा ॥
मञ्जुघोष स्वय तिष्ठेन्मुद्रैरेतै समाहित ।
यस्मिं स्थाने तु बध्यैता स्वय मञ्जुरव सदा ॥
रक्षा ह्यग्रा प्रकल्पीत जिनपुत्रो महर्द्धिक ।
बालरूपी महात्मा वै विश्वरूपी महर्द्धिक ॥
बहुरूपी च सत्त्वानां मुद्रारूपी थ देहिनाम् ।
बालिशाना तु सत्त्वाना ससारार्णवचारिणाम् ॥
तेषामर्थकर क्षिप्र मुद्रारूपेण तिष्ठते ।
मञ्जुघोषस्य शिरजा॰ सत्त्वमूर्ध्नि प्रतिष्ठिता ॥
सर्वार्थसम्पदा ह्येते जप्तमात्रैस्तु योजिता ।
मूलमन्त्रेण सयुक्ता हृदयस्यानुगतेन वा ॥
सर्वे सौगतिभिश्च मन्त्रैभिश्च सुयोजिता ।
ये तु अब्जकुले मन्त्रा वज्रिणे चापि कपर्दिने ॥
सर्वैश्च लौकिकैश्चापि मुद्रैर्युक्तार्थफलप्रदा ।
एते पञ्च महामुद्रा मन्त्रयुक्तार्थफलप्रदा ॥
त्रिकल्प्या मन्त्रगतां त्यज्य मुद्रैर्वाथ फलप्रदा ।
महारक्षा महापुण्या बद्धमात्रेण देहिनाम् ॥

नटिकाया मन्त्र —ॐ नटि महानटि आगच्छागच्छ दिव्य रूपिणि स्वाहा । अस्योपचार —फलके पट्टके वा अभिलिख्य मांसाहारेण वा क्षीराहारेण वा दिवा अष्टसहस्र जप्तव्या । आलेख्या च सर्वालङ्कारभूषणी श्यामावदाता कृशाङ्गी एकवस्त्रा मुक्तकेशा, स रक्तनयना ईषित्स्मितमुखी साधक तर्जयमाना दक्षिणहस्तेन वामेन पाणिना वृक्षशाखामवलम्ब्य सर्वाङ्गशोभना विचित्रपत्रनिवस्ता । त स्यैव क्रोधराजस्य पश्चयाग्रत उपरा उत्तरामुख स्थित्वा पलाश काष्ठैरग्नि प्रज्वाल्य गुग्गुलुगुटिकानां दधिमधुघृताक्तानां अष्टसहस्र जुहुयात त्रिसन्ध्य यावत् सप्त दिवसानि । तत सप्तम दिवसे उदारां बलि कृत्वा घृतप्रदीपांश्च प्रज्वाल्य मन्त्र जपता तावत् तिष्ठेत् याव दर्धरात्रम् । तत सा यक्षिणी स्वयमेव महात्रभाम कृत्वा स्वरूपेणागच्छति । आगता च ब्रवीति । किं मया कर्तव्यम् इति । ततः साधकेन वक्तव्यम्—भार्या मे भवस्व इति । एवमस्त्विति कृत्वा न्तर्धीयते । तत प्रभृति भार्या भवति । सर्वकामदा स्वभवन नयति । रसायन प्रयच्छते । यत् पीत्वा दिव्यरूपी भवति महायक्षप्रतिस्पर्धी । यदि नागच्छति द्वितीये वारे क्रोधराजसहित जपेन्नियतमागच्छति । न चेद् म्रियते म्रियते ॥

नटाया मन्त्र —ॐ नटे शुक्लाम्बरमाल्यधारिणि मैथुनप्रिये स्वाहा । एतस्यैप एव विधि । ।

भद्राया मन्त्र —ॐ भद्रे भद्रे आलोकाणि किं चिरायासि एहीह आगच्छागच्छ मम कार्यं कुरु स्वाहा । एषा विनापि पटेन सिध्यते । शिर स्थाने मण्डलक कृत्वा गुग्गुलुधूप दहता विद्यामष्टसहस्र जपेन । मालिना एकाकिना शुचिना द्वारं पिधाय मासेन रात्रौ नागत आगच्छति । आगता च कामयितव्या भार्या भवति सर्वकामदा । यस्यासौ भवन प्रविशते पञ्चवर्षसहस्राणि जीवति । न चेदत्रैव जम्बूद्वीपे विचरति । पञ्चवर्षशतानि जीवति । तया सार्धं क्रीडति । राज्ञां सम्पादयति । तेन सह यत्रेष्ट तत्र गच्छति । रसायनमनुप्रयच्छते । इष्टभार्येवावहिताध्याशय करोति ॥

रेवत्या मन्त्र —नमः सर्वयक्षीणाम्। ॐ रक्ते रक्तावभासे रक्तानुलपने स्वाहा।

रेवत्या यक्षिणी श्रेष्ठा ललन्त्या मैथुनप्रिया।
ईषिद् रक्तेन वस्त्रेण नीलकुञ्चितमूर्धजा॥
सर्वाङ्गशोभना यक्षी कामभोगरता सदा।
कामदा भोगदा नित्य वरदां तां मभिनिर्दिशेत्॥

पूर्ववत् पटमभिलिख्य एतस्या अय विशेषः— रक्तपट्ट-निवस्ता रक्तपट्टांशुकोत्तरीया रक्तावभासा च वर्णत।

मेखलाया मन्त्र. —ॐ मेखले महायक्षिणि मम कार्यं सम्पादय स्वाहा॥

सुमेखलाया मन्त्र:—ॐ मेखले सुमेखले महायक्षिणि सर्वार्थसाधनि ॐ समयमनुस्मर स्वाहा॥

आलोकिन्या मन्त्र —ॐ लोकिनि लोकवति स्वाहा।

एतेषामेव एव विधि॥

तमरुन्दर्याया मन्त्र —ॐ घुणु गुह्यके घुणु घुणु गुह्ये एह्येहि गुह्यके स्वाहा। अस्योपचार न। एताया पटविधानोऽस्ति आदौ तावत् शुचिना शुचिवस्त्रप्रावृतेन पूर्णमास्यां विविक्ते स्थाने द्वार पिधायित्वा अभ्यारे आलोकवर्जिते त्रिशां दशसहस्राणि जपेत्। पूर्वसेवा कृता भवति। तत साधनमारभेत। पूर्णमास्यादारभ्य याव-वदपरा पूर्णमासी अत्रान्तरे कर्म भवति। रात्रौ शयनकाले शय्यामारूढ प्रच्छन्ने गुह्यप्रदेशे एकाकिना द्वार पिधयित्वा सङ्कुचितकर्णिकां वानपुष्प च रक्तुतलेन मिश्रयित्वा हस्तौ पादौ प्रक्षालयित्वा दक्षिणं वाहुमष्टशताभिमन्त्रितं कृत्वा स्वपेत् मानी। एवं प्रत्याह यावन पौर्णमास्यात्। ततोऽर्धरात्रे नियतमागच्छति। आगता च न मन्त्रापयितव्या। तूष्णीभावेन रामयितव्या षड्भि मासै। यदा मन्त्रापयति तदा मन्त्रयितव्यम्। तत प्रभृति सिद्धा भवति। भार्या भवति सर्वकामदा। दिव्य चास्य सुखसस्पर्शम् अदर्शनेनैव सर्वकार्याणि सम्पाद-

यति । रसरसायनानि सम्प्रयच्छति । पृष्ठमारोप्य सुमेरूमपि नयति । रात्रौ जम्बूद्वीप भ्रामयति । योजनशतास्थितमपि शत्रु घातयते । यथाज्ञप्ता तत् सर्व सम्पादयति । वर्जयित्वा परस्त्रियाभिगमनम् । सर्वेषा मयं विधान परस्त्रीं नाभिगच्छेत् । तेनैव सह सवमेत् । यदि गच्छे न्मरणोन्मार्त्तिं वा प्रयच्छन्ते । एषा अन्धारसुन्दरी नाम यक्षिणी । अनेकयक्षीशतसहस्रपरिवृता । दिने दिने एकैकां यक्षिणा क्षविद्धि प्रेष यति । सिद्धा सती सर्वसाधकानां अनेकयक्षपरिवारां च सर्वयक्षीणां च महर्द्धिका तमावृता । सर्वेषामेव एव विधि । किं तर्हि तेषां दर्शन भव ति । एतस्या दर्शन न भवति ॥

अन्धारवासिनी नाम यक्षीणां महर्द्धिका ।
गुहावासिनी नरवीरा कुमारी लोकविश्रुता ॥
मधुयक्षी मनोज्ञा च सप्तमा सुरसुन्दरी ।
इत्यता' सप्त यक्षिण्य सत्त्वानुग्रहकारिका ॥
पर्यटन्ति इम लोक कृत्स्नां चैव मेदिनीम् ।
ईपित् क्षणमात्रेण उत्पतन्ति सुरालयम् ॥
सङ्ग्राम देवदैत्यानां युद्ध्यन्ते च महर्द्धिका ।
धामष्ठा करुणाविष्टा' सत्त्वकामा सुवत्सला ॥
सत्त्वानां हितकाम्यर्थं पर्यटन्ति महीतले ।
न तासा किञ्चि दु साध्यं सर्वकर्मकरा शुभा ॥
सत्त्वानामुपभोगार्थं बोधिसत्त्वेन भाषिता ।

गुहावासिन्या मन्त्र — ॐ गुहिले गुह्यमति गुहवासि आनय भगवति मया निक समयमनुस्मर स्वाहा । खादिरकाष्ठैरग्निं प्रज्वाल्य पृथग्दुपुष्पाणां घृताक्तानां अष्टसहस्र जुहयात् त्रिसन्ध्य मासमेकम् । पूर्वसेवा कृता भवति । तत पश्चात् साधनमारभेत् । फलके वा पट्टके वा कुड्यायां वा अश्लेपकवर्णकै नवभाजनकृतकै । आदौ तावत् पर्वतराजा सुमेरुलिखापयितव्य चतुरस्र चतुशृङ्गा समन्तत सप्त पर्वतपाङ्क्तिपरिवेष्टित । तेषां पर्वतानामन्ते गुह पर्वतनिश्रुत आलि

गितव्यम् । तद्यथा दिव्यरूपिणी मनोज्ञरूपा ।। एतानि नी
यक्षिणी गृहवासिनी नाम त्रिसाधनेनाख्या पट्टवस्त्रालङ्कारा पशु
क्लेन ।। रक्तवर्णा विचित्राभरूपी तत्रादृश पटमालेख्य शुचौ
प्रदेशे शुचिना क्षीराहारेण त्रिंशत्सहस्राणि जपेत् । महापूजां
कृत्वा यथाशक्तितो वा ततो जपान्ते महाप्रभावं कृत्वा दिव्यरूपी
यक्षिणी आगमेत्यागच्छति । आगताया जातीकुसुमैः गन्धोदक
र्घ्यो दापितव्यम् । माता भगिनी भार्या वा ब्रवीति — तस्या हितं कर्तव्यम् ।
वक्तव्यम् माता मे भवस्वेति । कृत्वान्तर्धीयते । न च तत्र चित्ते
दूषयितव्यम् । नापि कामोपसंहितं प्रार्थयितव्यम् । आर्या सा मह
र्द्धिका न कामं प्रार्थयति न सिद्धयते । ततः प्रभृति मातृवत् सर्वका-
र्याणि करोति । अष्टशतपरिवारस्य भक्ताच्छादं प्रयच्छते । विषम
स्थस्य त्रायते । महारण्यपर्वतस्योपरिस्थितस्यापि सर्वकार्याणि सम्पा
दयति । कामितं च भोजनमनुप्रयच्छते । रसरसायनादीन् सर्वमनु-
प्रयच्छति । यथेष्ट नानुवर्त्तते । कुटीकुम्भादीमभिनिर्मिणोति । सुवर्ण
सहस्रमनुप्रयच्छति दिने दिने । सर्वं व्ययीकर्तव्यं तदह एव । यदि
न करोति च्छिन्ना भवति । सर्वेण सर्वं भवति ॥

अपरमपि कर्म अस्या । अस्यैव पटस्याग्रतः खदिरकाष्ठैरग्निं प्र
ज्वाल्य विगतार्चिधूमविगते अङ्गारे दक्षिणहस्ततले मनःशिलया प्रति
कृतिमभिलिख्य नाम च गृहीत्वा स्त्रिया नामहस्ताग्रे तत्रैवाङ्गारराशौ
तापयन् मन्त्रं जपता । योजनशतादपि स्त्रियमानयति । यदुच्यते तत्
सर्वं कारयति । रात्रौ एतत् कर्म । न दिवा ॥

तस्यैवाप्ता मन्त्रः — ॐ नरवीरे स्वाहा । तथैव एतस्या पटम-
भिलिख्य वर्जयित्वा गृहालय अशोकवृक्षाश्रिता लिखापयितव्या ।
एतस्या अपि विधि — सर्वं तथैव कर्म यथा गृहवासिन्या । अय
न्तु वक्तव्या — भगिन्यास्त्वेति ॥

एतस्यापरोऽस्ति कर्म । चन्द्रग्रहे सुवर्णगैरिकां भूर्जपत्रेण वेष्ट
यित्वा मुखे प्रक्षिप्य तावज्जपेद् यावच्चन्द्रो मुक्त इति । ततः सुव
र्णगैरिकया यस्या नाम लिखति स्त्रियस्य वा आयोजनशतास्थिता

गृहीत्वा बिभीतकफलां परित्यज्य नवे भाण्डे मोर्तणे गजो ााम मृन्मये वा स्थाप्य पादान्ते शय्यायां सहस्राभिमा ा । ा ा । । नैव म त्रेण एकाध्ययसिण्य। अ भ्रवारे लैा ह ना । । । ।।ा।। प स्त्रसुव्यम् । आगत्य चामानुर्षी पादो प्रजयात । । ग्गया स्यताा-मल्हहस्ततला । तस्य स्पर्शनादेव दिव्य सुरभग ।। ।ाजागे । येन सूर्यादेऽपि राज्य ते दु खेन मतिजु यत । ा ।ा।। सत त देव चिन्तयेत् । न च कामयितव्या नापि मन्त्रापा ।ग। । षड्भि र्मासैः सिद्धा भवति । ततः सा दिव्यरूपा अभिवार वा व यात् समाना परिचारिकै परिवारिता मद्यपहस्ता स ।ा। ालितान्नारा शयनासनपरिगृहीता विचित्राभरणोज्ज्वला आगत्य । म वागते। कामभोगोपकरणपरिगृहीता आगत्य च साधक णठे पा।ा । ततःप्रभृति इष्टभार्येव मनुवर्त्तते । आगता च कामयितव्या रात्रौ परिचर्यं भ ातेऽ तर्थायत । शय्यायां मुक्ताहार त्यज्य सुवर्णसहस्र मूल्य दिने दिने परित्यज्य गच्छति च । सर्व निरवशेष व्ययीकर्त्त व्यम् । यदि किञ्चित् स्थापयति भूयो न भवति । न कस्यचित् क थितव्यम् । यदि कथयति भूयो नागच्छति । अनर्थ वा कुरुते । मा रणा त परगुह्यका ह्येते परमगोप्या न द्वितीयसत्त्वस्य ।ा।न क्षमन्ते। मातापितृसुहृत्स्वामिबान्धवानामपि नारोचयितव्यम् । न ।श पशु स्यापि तिर्यग्गताना प्राणिनां नारोपयितव्यम् । प।ा।ग तत् । सर्व गुह्यकाना सर्वयक्षिणीना च एष एव विधाना । ।ा। ा। अपि द्धा भवन्ति । यत्रारोचयते । अन्यस्त्रीमैथुनाभिगमन च भार्याया च वर्जयेत् सदा ॥

मनोज्ञाया म त्र —ॐ मनोहरे मदो मादकरि विचित्ररू पिणि मैथु ाप्रिये स्वाहा । अस्यासुपचार' — ा ा।ाकाया अ शोकवृक्षस्याधस्तात् सविभक्ता कुटिं कारयित्वा अगुा ा। क ावा-टार्गलप्राकारोच्छ्रिता शुचिना लक्षमेक जपेत् । तत' कर्मारभेत् । म-हावसा सह गृह्य श्मशानचोटकेन वर्तिं कृत्वा द्वार पिधयित्वा प्रदीप प्रज्वालयेत् । सदश च वस्त्र केशापगत बहिर्द्वार स्थापयेत् । प्रत्यग्र

रात्रौ सा नग्निकागत्य त तत्र निवास्य प्रविशते मानुषस्त्रीरूपिणी भूत्वा । तत साधक तेन सार्धं रमते यावत् प्रदीप ज्वलत । नि र्वृते प्रदीपेऽन्तर्धीयते । तस्मिन् तत्र नुपुरमेक बद्ध्वा तत्र परित्यज्य शय्यायामपक्रमति । अथ साधकस्ता हस्ते गृह्णाति । अङ्गुलयि वैकावमुक्त्वापक्रमते । अथ कण्ठा दिव्यमुक्ताहारा अथ बाहात् कनक कट्या मेखला पद्भ्यां नूपुर शीर्ष मणि प्रवर यतरा यतर दिव्यमाभरणमेक यत्र यत्र गृह्यते तत्र तत्रानुप्रयच्छति । अत्र ध्यां गच्छति चागच्छति च । एत प्रत्यह निरवशेष व्ययीकर्त्तव्यम् । एव यावाङ्गिर्मासै मन्त्रापयति तदा मन्त्रयितव्यम् । भार्या भवति । नित्यस्था रसायनं प्रयच्छति य पीत्वा दीर्घकाल जीवति । मनसा ध्यात्वा खदिरकीलक भूमौ निखानयेत् । दिव्य विमानमुपपद्यते । उद्धृतेऽन्तर्धीयते । अस्याया मन्त्र द्वितीयमस्ति । ॐ महानग्नि न ग्निजे स्वाहा तेनैव दीप प्रज्वाल्य अनेन मन्त्रेणाष्टशताभिमन्त्रित कृ त्वा कारयेत् । नियतमागच्छति । कीलक चाभिमन्त्र्य निखान येत् । उद्धृते दीपे निर्वृते चा ततान कीलकं मानुष त्वमाकील च सो भृङ्गे गवलमाहिषशृङ्गे वा श्मशाने चैकवर्तिना बोद्धव्यम् । दृशा तरे । यत्रेष्ट तत्र ददाति । स्वय वा करोति । न च म त्रा दातव्या । अथ ददाति छिन्नविश्रो भवति । यस्य ददाति तस्यैव तत् सम्पद्यते । यत्र वाभिलषित यत्र वा स्थान गृह्ण गच्छत । एषा सिद्धि आवर्त्यं नापगच्छति । अ या वा रमापयते । किं तु त सार्धं न मन्त्रयति । अन्यस्त्रीदर्शनाभिरुचित मनसेप्सित तदानुरूपी तस्यापसङ्क्रमता ह्य पूर्वस्य साधकवशादिति ।

सुरसुन्दर्याया मन्त्र - ॐ सुरसु दरि स्वाहा । अस्यामुप चारः—खदिरकाष्ठैरग्नि प्रज्वाल्य घृताहुतीना अष्टसहस्र जुहुयात् । त्रिसन्ध्य मासमेक शुक्रपूर्णमास्यां कुशपिण्डकापाप शुचिना शुचौ देशे मन्त्र तावज्जपेद्रहसि यावदर्धरात्रे नियतमागच्छते । ततो माता भगिनी भार्या यथैव पूर्वं तत् सर्व करोति सर्व च विस्तरतो वक्त व्यम् ॥

इत्येता' सप्त यक्षिण्य वज्रपाणिसमाज्ञया ।
पर्यटन्ति महीं कृत्स्नां त्रैलोक्य च सुरासुरम् ॥
विचरु कृपालुभ्यो मर्त्यानां मैथुनप्रिया ।
केऽपि दार्यास्तथा बाला मूढाश्चापरयक्षिका ॥
पर्यटन्ति तथा रात्रौ सिंहकाम्यपरा हिता ।
बालानां जीवनाशाय लोलुपा मांसभाजिका ॥
तथा रुधिरगन्धेन जम्बूद्वीपं हि मागताः ।
प्राणापरोधिका यक्षी नित्य सा शोणितप्रिया ॥
पर्यटन्ति गृहा सर्वां आरक्षामृतकसूतकाम् ।
तेषा निग्रहमित्युक्त' समयोऽय सम्प्रकाशित. ॥
यथा सद्ग्रहराग च निव ध्य चेह बालिशाम् ।
तथा सर्वमिदं प्रोक्त सत्त्वाना हितकारणात् ॥
मैथुनार्थी यथा म त्री रागान्धो मूढचेतस' ।
मन्त्रैराकृष्य भुञ्जीत यक्षी वा अथ राक्षसी ॥
नागी च मथ गन्धर्वी दैत्ययोषिमथ किन्नरीम् ।
पातालभवन रम्य असुराणा पुरोत्तमम् ॥
प्रविशेत् तत्र मन्त्रज्ञ यत्र स्त्रीणामसङ्ख्यकम् ।
तत्र गत्वा वसत् कल्प म त्रज्ञा मन्त्रजापिन ॥
मैत्रेयो नाम सम्बुद्ध यदा बुद्धा भविष्यति ।
तदासौ श्राष्यति सद्धर्म श्रुत्वा मुक्तो भविष्यति ॥
सुरकन्यासुरीं चैव विद्याधरवराङ्गनाम् ।
मन्त्रैराकृष्य भुञ्जीत दिव्यसौख्यरतिं तदा ॥
जम्बूद्वीपगतो मन्त्री तत्रैवानयते सदा ।
शुचिस्थाने तदा गुप्ते शौचाचाररतः सदा ॥
मूढानामुत्तमा सिद्धि' कदाचित् तेन जायते ।
वि मूत्रमशुचिस्थान सदा दुर्गन्धिपूतिकम् ॥

व्याधिदु.ख तथा शोक मरणान्त दु'खभाजनम् ।
वियोग रतिसम्पृक्त न स्पृशे मानुषीं स्त्रियाम् ॥
अनित्यदुःख तथा शून्यरिक्तस्तुच्छमशाश्वतम् ।
बालमुल्लापन चापि सङ्कल्पजनितोद्भवेत् ॥
न गच्छेत् कामतो मन्त्री सर्वकामार्मनान्निजाम् ।
तेषां रतिमित्युक्तो विमुक्ति तेपु सिद्धिताम् ॥
सिध्यन्ते तस्य मन्त्रा वै ये विरक्ता तु कामतः ।
वि॰मूत्ररुधिरासिक्तां + + +चैत्र पूजिताम् ॥
ज्रामृत्युसुशोकां च न स्पृशेन्मानुषीं तनुम् ।
न भेजेन्मैथुन तत्र मोहान्धा रागचेतसाम् ॥
न सिद्धिर्लभ्यने मन्त्रां तेपु सेवी सदाशुची ।
मन्त्रज्ञो मन्त्रजापी च समज्ञोऽथ जितेन्द्रिय ॥
शौचाचाररतो धीर. सर्वमन्त्रोऽपि हि सदा ।
पद्मोच्चा समोदा च अजिता चापि जया सदा ॥
श्यामावर्ते तथा यक्षी इत्येता यक्षिमहर्द्धिका ।
पद्मोच्चाया मन्त्र — 'ॐ पद्मोच्चे स्वाहा' ॥

अस्या कल्प — गङ्गाकूल समुद्रतटे वा उद्यानपुष्पवाटिकायां मध्ये उडय कृत्वा शुचितर आत्मना च शुचिर्भूत्वा शिलापट्टकाकार मृण्मये कृत्वा तत्रैव रात्रौ द्वार पिधयित्वा सर्वकामभोग्यानुपकरणा न्युपहृत्य तत्रैवात्मसमीप अक्षिण्या शय्यां कल्पयत् । ततो त्रियां दश सहस्राणि जपेत् । एव यावन्मासाभ्यन्तरेण नियतमागच्छतीति । आगता च कामोपभोग्या भवति भार्या । दिव्य च मुक्ताहार शय्यां परित्यज्य प्रभाते गच्छति । एव यावद् दिनेदिने पड्भिर्मासै नि त्यस्था भवति । तन्मुक्ताहार न ग्रहेतव्यम् । यदि गृह्णाति तन्मात्र पनमुपपद्यते । दीनारलक्षमूल्य तत् हार माणरत्नापशोभित पड्भिर्मा- सैरतिक्रान्तै. नित्यस्था भवति भार्या सर्वकामदा। यथा रूपमभिलपित

तथा रूप कृत्वा उपतिष्ठते। यथाभिरुचितमा मानमाभिनिर्मिनोति। साधकस्येच्छया सर्वेषा यक्षीणामय विधा।' यथा निर्दिष्टाना अत्र अन्यत्र ॥

जयाय म त्र —ॐ जये! सुजये!, जापयति सर्वकार्याणि कुरु मे स्वाहा।

कनकाभा चित्राङ्गी नीलकुञ्चितमूर्धजा।
मर्वाङ्गशोभना देवी भाम्य च सुभगा शुभा॥
प्रियवदा प्रमदाश्रेष्ठा सुरूपा चारुदर्शना।
प्रशस्ताकाररु शुक्र सर्वलोकसुपूजिता॥
ईषिद्रक्तेन वस्त्रण जया तामभिनिर्दिशेत्।

अस्या कल्प' — आदौ लक्षमेक जपेत्। पूर्वसेवा कृता भवति। तना महारण्यं प्रविश्य फलाहार तावज्जपेद्यावत् स्वरूपेणो पतिष्ठते। आगता च ब्रवीति — 'किं करोमी'ति। यदि माता भवति। मातृवत् सर्वाशां परिपूरयते। राज्य ददाति। महाधनपतिं करोति। दीर्घायुष्कतामधितिष्ठते। अथ भगिनी यथेप्सित स्त्रीमानयति योजनसहस्रस्थितामपि। दीनारलक्ष दिने दिने प्रदाात। स च व्य यीकर्तव्य। अथ भार्या भवति स्वभवन नयते दिव्यविमानाभि रूढो तया सार्ध रमते। दीर्घरात्र त्रिंशद वर्षसहस्राणि यथष्ट वि चरते। महायक्षप्रतिरूपो भवति ॥

प्रमोदाया मन्त्रः—ॐ ध्रीं। ह्रीं महानग्नि हूं फट् स्वाहा। अस्या' कल्प — अर्धरात्रे अपारमाणो जाप' कर्तव्य। भूयो निद्रां गच्छेत्। मासाभ्यन्तरेण नियतमागच्छति। भार्या भवति सर्वकामदा। दिनेदिन पञ्चविंशति दीनारामनुप्रयच्छति। आत्म ॥ काश दीर्घकाल च जीवापयति ॥

एवमपरिमाणानि यक्षिणी शतसहस्राणि भवन्ति। एव पिशा चा। पिशाचमहर्द्धिका नागकन्या असुरकन्या' अप्सरा सुरगोपिद दैत्यकन्या। एव विद्याधरीणां सर्वेषां सर्वतः मानुषीणाममानु-

षीणा च मन्त्राणि भवन्ति । असङ्ख्येयानि तथैव यक्षाणां देवानां नागानां ऋषीणां गन्धर्वाणां असुराणां प्रेतानां राक्षसाना च महाब्रह्मण महेश्वरस्य महाविष्णोः मातराणा रुद्राणि चामुण्डिराराहिप्रमुखाना मन्त्राणि भवन्ति पृथक्पृथक् सर्वे च समये आकृष्टा इह क्रोधराजेन यमा तकेन आनीता ग्रस्ता समये स्थापिता मञ्जुघोषस्योपनामिता अनुपरिवारा अनुपूर्वस्थिता परिचारिका सर्वेषां सक्षेपतः यत्र प्रतिमा स्वय वा प्रतिकृतिं कृत्वा क्रोधराजान यमान्तक तानज्जपेन्यावत् प्रतिबिम्ब प्रकम्प प्रचलते प्रस्विद्यति वा । अथ स्वरूपेणागच्छन्ते । यदुच्यते तत् सर्व सम्पादयन्ते ॥

एवं यापि ता. चतु कुमार्य. महायक्षिण्य' भ्रातु' तुम्बुरुसमेता दिव्यरूपिण्य' अम्बुराशिसमाश्रिता नौयानसमारूढा सर्वलो(क)सुपूजिता सत्त्वानुग्रहकारिका तपामप्येष एव विधि । यदुत

पटभित्तिफलके समाकीर्णा लिखितापि वा ।
नोयानसमारूढा भ्रातुर्ज्येष्ठानुनेयिका ॥
अम्बुधे अन्तर्गता कन्या चतुरेवसमानुगा ।
तेपा प्रच्छन्नत स्थाप्य क्रोध जाप्य समारभेत् ॥
चल. कम्पः तथा स्वेद जायतेषु च सर्वत ।
ततः सिद्धा इति ज्ञात्वा म त्रजापी जपं त्यजेत् ॥
स्वरूपेणैव राज्यन्ते कथयन्ति शुभाशुभम् ।
सर्वथा साधका ते वै भवन्ते ह सजापिने ॥
सर्व कुर्वन्ति आज्ञप्ता क्रोधमाकृष्टमूर्च्छिता ।
सोमाद्यैर्ग्रहवरैर्नित्य ऋषिभि राक्षसैस्तथा ॥
पिशाचैगरुडैश्चापि सुपूजिता ते महर्द्धिका ।
महेश्वराद्यैस्तथाभूतैः पूजिता ते महर्द्धिका ॥
एतेश्च भाषिता कल्पा मन्त्रतन्त्रा सविस्तरा' ।
ते तु सर्व प्रयात्कल्पा सकल्पा कल्पविस्तराः ॥
सर्वे ते क्रोधराजस्य वशे तिष्ठन्त्ययत्नत ।
धावन्ति केचिन्मन्त्रा वै उच्छुष्मा कश्मलोद्भवा. ॥

सर्वे त क्रोधराजस्य नियुक्ता ते प्रकाशिता ।
आर्या ये च मन्त्रा वै विशिष्टा सर्वतोगता ॥

उत्कृष्टा प्रवरा ह्यग्रा भाषिता जिनवरैस्तथा ।
तथा मन्त्रधरे मन्त्रा मया चैव प्रभाषिता ॥

ये चान्ये मन्त्रमुख्यास्तु कुलेष्वेव हि पञ्चसु ।
भाषिता जिनपुत्रैस्तु लौकिकाश्चापि महर्द्धिका ॥

सर्वास्तां समाकृष्य क्रोधराजो महर्द्धिक ।
सर्वेषां मन्त्रत त्राणनिबद्धास्ते इह शासने ॥

यो येषां विधिराख्यात तेनैवार्थं नियोजित ।
क्रोधराजा यमा तस्तु उत्कृष्ट सर्वकर्मिक ॥

तारा च भृकुटीं चैव तथा पाण्डरवासिनीम् ।
महाश्वेता तथा विश्वा मामक्यां कुलिशोद्भवाम् ॥

उष्णीषप्रभां सर्वलोचना चैव देवताम् ।
सर्वां तथागतिं विद्या मञ्जुघोषं च धीमतम् ॥

महास्थामं सम त च तथा पद्मवर प्रभुम् ।
यत्रापि लोके यक्षेश बोधिसत्त्व महर्द्धिकम् ॥

यदुक्त जिनपुत्र तु सर्वाङ्ग लोकविश्रुतम् ।
वज्रसेन सुषेण च मत्सुतां चापि धीमताम् ॥

मया य भाषिता मन्त्रा नावज्ञा कारयेज्जपी ।
ते सर्वा पूजयेन्नित्य अकल्पयास्तेषु भाषिता ॥

न जपी योजयेत् तत्र क्रोधराज सुपूजितम् ।
विद्याच्छेदेन न कुर्वीत तेषु मन्त्रेषु सर्वदा ॥

सर्वांश्चैव यथा कर्मां लौकिकां मन्त्रदेवताम् ।
उमाशङ्करब्रह्माद्या हरिं चापि सुपूजितम् ॥

यथा तन्त्रेषु मन्त्राणां सर्वेष्वेव तथा कृता ।
सर्वं च सर्वतो मन्त्रा सर्वं चैव समारभेत् ॥

सर्वमन्त्रप्रवृत्तिस्तु दृश्यत क्रा यसम्भरा ।
एष मन्त्रो महाक्रोध यमा ना नाम नामत ॥
आकृष्य घातयेत् क्षिप्र यमस्यापि महात्मन ।
वैवस्वतं कृता त वै शक्रश्चापि महात्मन ॥
आकृष्टा वसिता घोरा दुर्दा तन्मत्रा प्रभु ।
एष मन्त्रो महामत्र कथिता मञ्जुभाणिना ॥
सर्वकर्मकर' क्रूर, सर्वम त्रप्रसाधक ।
इत्येवमुक्त्वा तत श्रीमा वज्रपाणिर्महर्द्धिक ॥
प्रणम्य बुद्ध महावीर शाक्यसिंह नरोत्तमम् ।
मन्त्र च काश्रितो वज्री म न्त्र भाषे महर्द्धिकम् ॥
शृ न्तु सर्वे सत्वा वै सर्वभूतगणा शुभा ।
सर्वमैत्रगणाध्यक्षा भाषेऽह म त्रमुत्तमम् ॥
भाषित बोधिसत्त्वेन मञ्जुघोषेण धीमता ।
दुर्दान्तदमक घोर सर्वदुष्टनिवारणम् ॥
विनेयार्थ तु सत्त्वाना बोधिसत्त्वेन भाषितम् ।
अह च भाषहे ह्यत्र पर्ष मध्ये सुदारुणम् ॥

नमः समन्तबुद्धाना अभावस्वभावसमुद्गतानाम् । नम प्रत्यक बुद्धार्यश्रावकाणां नमो बोधिसत्त्वानां दशभूमिप्रतिष्ठितेश्वराणा बो धिसत्त्वानां महासत्त्वानाम् । तद्यथा— ॐ गर गर गाहि गाहि दुष्ट-सत्त्वदमक असिमुसलपाशपरशुहस्त चतुर्भुज चतुर्मुख षट्चरण गच्छ गच्छ महाविघ्नघातक विकृतानन सर्वभूतभयङ्कर अट्टहासनादिन व्याघ्रचर्मनिवसन कुरु कुरु सर्वकर्मा च्छिन्द च्छि न्द सर्वमन्त्रां आ-कर्षाकर्षय सर्वभूतां निर्मथ निर्मथ सर्वदुष्टा प्रवेशय प्रवेशय मण्डल-ध्ये वैवस्वतजीवितान्तकर कुरु कुरु मम कार्य दह दह पच पच मा वलम्ब मा विलम्ब समयमनुस्मर हू हू फट् फट् स्फोटय स्फोटय सर्वाशापारिपूरक हे भगव किं चिरायसि मम सर्वार्थ साधय स्वाहा ।

एष स मार्षा सर्वदेवगणा यमान्तको नाम क्रोधराजा यमराजानमप्यानयति घातयति शोषयति पाचयति नमयति । एव सर्वमन्त्रा सर्वतन्त्रा किं पुनर्मानुष भति दुःखितम् । दशभूमिप्रतिष्ठितामपि बोधिसत्त्वानानयति । किं पुनर्लौकिका मन्त्राः । एवमपरिमितबलपराक्रमोऽयं क्रोधराजा । एव सर्वमन्त्रतन्त्रभाषितेष्वपि सर्वकर्माणि कुरुते । सर्वमन्त्राणा यथा यथा प्रयुज्यते तथा तथा करोति पठितसिद्ध एष क्रोधराजा यमान्तको नाम परिसमाप्त इति ॥

आर्यमञ्जुश्रीमूलकल्पाद् बोधिसत्त्वपिटकावतंसका
महायानवैपुल्यसूत्रात् पञ्चाशातेम यमा
न्तकक्रोधराजासर्वविधिनियम तृतीय
पटलविसर परिसमाप्त इति ॥

---

यमान्तमुद्राय । समाप्त च यमान्तकस्य
क्रोधराजस्य कल्पमिति ॥

---

स एष कथितो मार्ग आदिबुद्धैः पुरातनै ।
मयापि कथित सर्वं शान्तनिर्वाणगामिनम् ॥
धर्मकोटि समागत्य भूतकोटिं न लभ्यते ।
अकोटी सर्वधर्माणां भूतकोटिमुदाहृता ॥
एष धर्मः समासेन द्विविधेव प्रकाशितम् ।
शृण्व तु सर्वे देवा ये बोधिसत्त्वा महर्द्धिका ॥
अर्हन्तः श्रावका मह्य निर्वाण मे यदा भुवि ।
अभूत् सालवने मध्ये हिमवत्कुक्षिसम्भवे ॥
नद्यां हिरण्यवत्यायां मल्लानामुपवर्तते ।
यमकशालकवने मध्ये निर्वाण मे भविष्यति ॥
यावत् सञ्ज्ञी तथा नगरे चैत्ये मकुटबन्धने ।
नदीतीरे सदा रम्ये निर्वाण मे तदा भुवि ॥
सर्वे वै बोधिसत्त्वास्तु श्रावकाश्च महर्द्धिका ।
देवा नागा तथा यक्षा लोकपाला महर्द्धिका ॥
शक्रब्रह्मसुयामाश्च अकनिष्ठाद्यास्तथा परे ।
सर्वेषां सन्निपाता वै तस्मिं स्थाने भविष्यति ॥
यमकशालवने तत्र मल्लानामुपवर्तते ।
गङ्गायामुत्तरे तीरे महानद्यास्तथा परे ॥
हिमाद्रेर्दक्षिण भागे अभूत् सालवने वने ।
अपश्चिमे मे तथा शय्या तस्मिं स्थाने भविष्यति ॥
नद्या तीरे तथा रम्ये हिरण्याख्ये शुभे तटे ।
सर्वदेवसङ्घानां सन्निपातो भविष्यति ॥
मनुजैः नृपवरैः सर्वै मनुष्यामनुष्यसम्भवैः ।
सर्वभूतैस्तथा मर्त्यं बालिशाबालिशैस्तदा ॥
महोत्सवमहो माह तस्मिं स्थाने समागमम् ।
कृतम श्रमह दिव्य मच्छरीरे तु सामिषे ॥

निरामिषं तु तदा स्थाप्य शान्तिमाप्नोति निर्वृतिम् ।
धर्मकोटिं परित्यज्य भूतकोटिं तु गविशेत् ॥
अपश्चिमा मे तथा जाति' नगरे कपिलावास्तुके ।
शाक्यानां च कुले मुख्ये जातोऽहं भवचारके ॥
ततोऽहं त्यज्य दुःखात्म्य निर्यातोऽहं गृहात्तथा ।
बहुतीर्थां तथा सेव्य न च प्राप्तो मृत पुन. ॥
दु'कर च मया चीर्णं काय स ताप्य तर्श्चनम् ।
षडाब्दमुषित' भ्रष्टदेह वापि विशुष्कत ॥
न च किञ्चिन्मया लब्ध येन ज्ञानमवाप्तम् ।
ततोत्थाय मया तत्र आहार कृथ शुभोदनम् ॥
देवतासूचितं मार्ग गतोऽहं तत्र भूतलम् ।
नद्या नैरञ्जनातीरे वृक्षराजे सुशोभने ॥
नानापुष्पसमाकीर्णे तथेरण्येऽथ भूतले ।
महावनफलोपेते नानावृक्षसमुद्भवे ॥
महानदी परिच्छिन्ना े तरग्ने ानो ाहम् ।
गो स्वक ष्णात्र तु भगाग र्भा ाज्भे ॥
तथैवाह त तरु दृष्ट्वा पर्णशाखोपशोभितम् ।
महावृक्ष महाच्छाय मून्मूलोपशोभितम् ॥
अश्वत्थेऽथ धर्मा ग न्ध्र तरुमूले निपत्र वै ।
धृतिं तत्राभिनिन्दामि ध्यान चापि समाधिकम् ॥
प्राप्त तत्र अनाशो वै राज्य ते जातिरन्तकम् ।
मारेण वहुधा विघ्ना अनेकाकारसुयोजिता: ॥
भग्नसै यपराङ्मुख गताऽसो स्वभवन पुनः ।
तदर्थं मन्त्रतन्त्रा वै भाषिता वहुधा पुन' ॥
अनेकाकारप्रयोगाश्च ध्याना ज्ञानाश्च भाषिता' ।
त्रिधा यान पुनस्तत्र चरित शास्त्रेरोचितम् ॥

प्रतिपन्ना हि भेषाणां निगा नैव प्रकाशिता ।
ततोत्थाय पुनर्गत्वा बुरुविल्वां शुभादकाम् ॥
स्नात्वाम्भसे तत्र ऋषिं प्रव्रज्य सशिष्यकाम् ।
सत्त्वार्थं बहुधा कृत्वा प्रक्रान्तोऽहं ततः पुनः ॥
पुनः काशिपुरीरम्यां अनुपूर्व्या समाविशेत् ।
तत्र स्थाने तु गत्वा ये परा बुद्धा महर्द्धिकाः ॥
तत्राहं स्थितो देशे जने काशिजने स्वयम् ।
प्रवर्त्य चक्र साधर्म्यं शान्ति निर्वाणकारकम् ॥
समुरासुरलोकानां गतिं पञ्चाग्निस्तताम् ।
सर्वभूतसुखार्थाय तत्र धर्म प्रकाशित ॥
आदिबुद्धे पुरा तत्र धर्मचक्र प्रवर्तितम् ।
मयापि दिशि तत्र धर्मचक्रो ह्यनुत्तरः ॥
भवमुक्तिसुखार्थाय सत्त्वदोषनिवारणा ।
प्रवर्त्य चक्र नाम्नां ये नेम शान्तपरायणम् ॥
भवमार्गविनाशार्थं चतु सत्यसमाभिजम् ।
आर्याष्टाङ्गिक मार्गं चतुरानाभिभूषितम् ॥
सप्रतीत्य समुत्पाद द्वादशाकारकारितम् ।
अविद्यानिरोधसंयुक्त विद्यामुत्पादनेमिजम् ॥
आमिता कोटिरत्थ्य वे भ्राकोटिसुकाभिजम् ।
अनुलोमविलोमाभ्यां गतिमाहात्मनेमिजम् ॥
सम्प्रदेशशिव चक्र बहुसत्त्वा विमोक्ष च ।
विमुञ्च्य काशिपुरीं रम्यां श्रावस्त्याहं तदा गमे ॥
तीर्थिकानां तथा वर्ज्या प्रातिहार्यैर्विकुर्वते ।
शङ्कश्ये तथा कृत्वा ऋद्धिर्जनपदे तदा ॥
बहुतीर्थायतनां स्थानां सम्मतोष्य तदा पुनः ।
अग्निभाण्डे जने कृत्वा देवावतरणं शुभम् ॥

त्रायस्त्रिंशेषु देवेषु शक्रमप्राभ्य भर्गाम् ।
अकनिष्ठार्थां तथा देवां ब्रह्मादीशपुर दराम् ॥
सवैश्रवणयक्षेन्द्रां चतुर्महाराजकायिकां गदा ।
मत्ताकरोपमाणाश्च त्रिवीणां मालधारिणाम् ॥
देवां यणगणां सर्वा गोमां दिव्यान्तरीक्षकाम् ।
आर्यां यथगणाध्यक्षां सर्वांश्चैव सुरासुराम् ॥
कृत्वा धर्मफले युक्तां निर्वाणानुगसन्निवाम् ।
श्रेयसैव तदा योज्या बहुमाणामचिन्तकाम् ॥
असङ्ख्या गणना तेषां ससारान्तादनन्तकाम् ।
महासाहस्रलोकानां धात्वाभ्यामचिन्तकाम् ॥
बहु सर्वे सदा सत्ये भूतार्थे सन्नियोज्य वै ।
इहाहमागतस्तत्र शुद्धावासोपरि स्थित ॥
प्रवर्त्ये म त्रसद्धर्मन्निधायान्सयानुगम् ।
सत्त्वानां विनयमागम्य कल्पराजमिद पुनः ॥
प्रकाश्ये बहुधा लोके मञ्जुघोषस्य दत्तानां ।
निर्वृते तु मया काले न गीभूते महीतले ॥
मञ्जुश्रियोऽथ सत्त्वानां बुद्धकृत्य करिष्यति ।
आरक्षणार्थं सद्धर्मा जिने द्राणां परिनिर्वृता ॥
सतता रक्षणा नित्य मञ्जुघोषो भविष्यति ।
म त्रप्रभावनार्थं तु कथित कल्पविस्तरम् ॥
तस्मिं काले युगा ते वै महाघोरे सुदारुणे ।
नराधिपा महाक्रूरा परस्परवधे रता ॥
पापकर्मा दुराचारा अल्पभोगा तदा युग ।
भविष्यन्ति न स देहो तस्मिं काले युगाधमे ॥
मयागम्य न पूजार्थं अभूत् मालवने वने ।
नदीहिरण्यावतीतीरे चैत्ये मकुट भवे ॥

परिनिर्वृते शयाा मे शा त गातुसमाश्ते ।
चितामरोप्ति देहे मम्भागे भागवर्जिने ॥

इहैव तत् पुरा मम मामेगादुानेपिितम् ।
मयैव विनयतागम्ये बुद्धवेनेयचेष्टिते ॥

चरित त शुभ चित्र ग्प्रत्वा मर्वे नराधिपा ।
सर्वे पूजां करिष्यन्ति सदेवासुरमानुषा ॥

समागत्यथ भूपाला सर्वे पूजामहोत्सवाम् ।
करिष्यन्ति न स देह' तस्मिन् काले ममान्तिके ॥

चितामारोपिते देहे शाभिपे गुणमुत्तमे ।
अश्रुभा ते शुभे नेत्र मर्वे पण्यनिर्जिने ॥

भूतकोट्योऽथ शू यास्ते पन्चस्त ामपोदगे ।
वहुसत्त्वा तु त हप्ना महापण्याथ तु याजिता ॥

महाश्रावका महा मान वीतरागा महर्द्धिका ।
बोधिसत्वास्तु सर्वे वै दशभूमिमगाश्रृता ॥

परिवार्य स्थिता सर्व सर्वे नानाकम्परा ।
सर्वे च देवसङ्घास्तु आर्गा रापृथग्जना ॥

सर्वे चैत महापुण्य स्थान ान्न माश्रनम् ।
चित्तमसाद मातिलेभेऽनित्यदुःखा र्माश्रयम् ॥

सर्वे भूतगणा तस्थुः चैत्या तेऽपि समीपाः ।
पूजां च महती चक्रे चुचुक्रोश करोदनम् ॥

मुमुचु साश्रूणि दूने मनापााणि करुणेरिताम् ।
एव च क्रोशिरे सर्वे अनित्य दःखशून्यताम् ॥

धर्म दिदेशितवां बुद्ध' साम्प्रतेऽथ महीतले ।
सैवाग्र मुनिवरा श्रेष्ठः सप्तमो ऋषिपुङ्गवः ॥

शाक्यज सर्वसत्त्वाग्र्यो दर्शन तस्य अपश्चिमम् ।
स एष भगवां शेते अनित्यदुःखाभिभाषिणः ॥

शू-यपरमार्थमार्गगामो आदिशा नार्थभाषिण ।
किमर्थं देवसङ्घा भो न मत्रोधयत त मभुम् ॥
आगता इह सर्वे वै यद्पुना महार्द्धिका ।
धर्मार्थिका महावीरा भारता व महर्द्धिका ॥
गर्वे वै तु स्थिता सत्त्वा मानुषाश्च सुरासुरा ।
समयो वर्तते ह्यत्र धर्मचक्रानुवर्तने ॥
उत्थातु भगवां क्षिप्र बुद्धवेलानुवर्तने ।
महासागरे चले वोल्लङ्घना मुनितद्भवे ॥
न चात्रमन्यां बहु सत्त्वां चिरकाल समोभिजे ।
ध्यान विमोक्ष समेस्तु गा तन्निर्वाणमार्गे ॥
निषण्तु वा भगनो मुनि ।
एवम्प्रकार नानेका नहगलापां प्रलपन्तगे ॥
तूष्णीम्भूताश्च सर्वे वै देवसङ्घा महर्द्धिका ।
आक्रन्दमतुल कृत्वा प्रणामा ततस्थिरे ॥
चुक्रुचु विर' मुत्कोश्य साश्रुकण्ठा सगद्गदा
सशोकाचित्तमनसो प्रणाम्या ससुरासुरा ॥
मनुजा नराधिपाः सर्वे निषण्णास्तत्र महीतले ।
अपर शाक्यजो मुक्त वीतरागो महर्द्धिक ॥
ज्ञानिनो देवदेवस्य बुद्धस्यैव महात्मने ।
अनिरुद्धो नामतो भिक्षु' अनुजोऽसौ मनुज' शुभ ॥
सुसूक्ष्म निपुणो व्यक्त गीतनीतिविशारद ।
परिवारितो रहमुख्यैस्तु अनेकैश्चापि नराधिपै ॥
स भाषे मधुरां वाचां निश्वसन्तः सुचेरिताम् ।
करुणार्द्रचेतसां क्षिप्रां मल्लानां सनराधिपाम् ॥
मा तावन्मार्पो ह्यत्र चितावग्नि प्रदायथ ।
यावद् भगवत' पुत्र. अग्रतो धर्मतोद्भव ॥

महाकाश्यपनामेन श्रावकोऽसौ महर्द्धिक ।
महामुने लग्नवीजाद्ब्राह्मणाऽसौ निगमिप ॥
मगधानां जने जात पर्वते तत्र समाहित ।
तिष्ठते ब्रह्मपिप्पले नगरे राजगृहे वरे ॥
स एवागमन क्षिप्र करिष्यति न चान्यथा ।
या तत्र देवताभक्ता स देवेन्द्रो निवारयेत ॥
मा तावच्चितिसन्दीप करिष्यथ वृथा श्रमम् ।
यावत् सो महर्द्धिका ह्यत्र श्रावको मुनिर्नीरस' ॥
प्रदक्षिणीकृत्य गुरवे बुद्धस्त्रैलोक्यपूजिते ।
मूर्ध्ना प्रणम्य पादौ शास्तुना लोकपूजितौ ॥
तदाय चितिदीपार्थ सर्व तत्र करिष्यथ ।
आदीप्ता चैत्यभूताश्च भविष्यति तदा इमा ॥
सर्वे मा वृथा कुर्व श्रम केवल भो इह ।
एवमुक्तास्तु ते सर्वे अनिरुद्धेन धीमता ॥
निषण्णा सर्वमल्लास्तु मानुषास्ते सनराधिपा ।
मानुषाणामुत्पन्नोऽह मानुषे नापि नार्थित' ॥
भोगैर्विविधा ना मे कामानल्पशुभोदयै ।
मनुष्याणां नाधिष्ठना मे तस्मन्ने महीतले ॥
मनुष्याणां धर्मा नादिष्ट सर्वसत्त्वोपकारकम् ।
अत एव मनुष्याणां चिता दीपार्थयोजिता ॥
मनुष्योऽह मनुभूतानां भवाच्च च समागत ।
मनुष्यलोके च शान्ति मे परिनिर्वाण तु कल्पितम्
ये केचित् सर्वबुद्धा वै अतीतानागतवर्तिना ।
सर्वे वै मनुष्यलोकेऽस्मि मनुष्या देहमुद्भवा ॥
जातबोधि तथा चक्र साधर्म्य वर्तितु शुभम् ।
शान्ति सागानिशेत सर्वे प्रलोकामर्हतास्त्रिधा ॥

कालमासाद्य भ ने ने रि ग शा ति गता हि ते ।
आदिमद्भि पुग बुद्र वर्त्तमानैर्ह्यनागतै' ॥
सत्पा एप मागा ने यथाय सम्प्रकाशित ।
तत्र निर्वाणभूमा वै निषण्णा सर्वदेवता ॥
विभिन्नमनसोद्विग्ना सहगद्गदभापिण' ।
एवमाह तदा सर्वे अहो त्वं ह्यनित्यता ॥
बुद्धमहर्द्धिका लोके परिनिर्वाणास्तथापि ते ।
एवमुक्तास्तु ते सर्वे देवराजा महर्द्धिका ॥
तूष्णीम्भूताथ तस्थिरे ।
मागधानां जने श्रेष्ठे कुशाग्रपुरिवासिनाम् ॥
पर्वत तत्समीपे तु वाराह नाम नामत ।
तत्रासो ध्यायते भिक्षु गुहालीनोऽथ पेपले ॥
श्रावको मे सुतो ह्यग्र ओरसा धर्मतोद्भव ।
महाकाश्यपनामासो निषण्णो गुहवरे तदा ॥
पिण्डपात तदा भुक्त्वा निषण्णश्चिन्तयेत् स्वयम् ।
बहुकाल मया बुद्धो वन्दितोऽसौ महामुनि ॥
साम्प्रत गन्तुमिच्छामि स्वयम्भुव त नराधमम् ।
कुत्र वा तिष्ठते भगवा शान्तयतो मुनिसत्तम ॥
सम न्वाहरति तत्रस्थ महाकाश्यपस्थिरात् ।
एव समन्वाहृतवां नु चित्तेनेव मुनिना मुनिम् ॥
दिव्येन चक्षुषा लोक सर्वलोकावभासलोकयेत् ।
अकनिष्ठाद्य तथा लोकां भवगास्या लाकधातव' ॥
सर्वां समग्रसत्त्वाग्र्यां महासाहस्राद्भवोद्भवाम् ।
श्रावकानां गोचर यावत् पश्यते दिव्यचक्षुषा ॥
शासन निर्वृत शान्त शीतीभूत निरामिपम् ।
परिवारित समन्ताद् वै देवसङ्घै महर्द्धिकै' ॥

मनुजैर्नराधिपैश्चापि असुरैर्यक्षराक्षसैः ।
सर्वभूतगणैश्चापि योगिसत्त्वैर्महर्द्धिकैः ॥

महायशैः श्रावकैश्चापि प्राज्ञैः धुधरतां गतैः ।
सरागैर्वीतरागैश्च दिव्यार्यैर्मनुजैस्तदा ॥

चितामारोपित वीर बुद्धमादित्यवच्च प्रभम् ।
देवदेव तदा श्रेष्ठ मुनीनां सत्तम प्रभुम् ॥

परिवारित समन्तात्‌ वै भूपालैर्दीपवासिभिः ।
तृणोल्कैर्गृहीतसहस्ते मल्लैश्चापि मनुजेश्वरैः ॥

नादीपयितु समर्था ते देवताभिर्निवारिता ।
व्रतिना चैवमुक्ता अनिरुद्धेनैव भिक्षुणा ॥

साश्रुकण्ठ स चोत्क्रान्ता निपुणाश्चेव मदिरीम् ।
हाहाकारश्च घोर दु दुभीनां च नादितम् ॥

दिव्य ऋषिगणाकीर्णं अप्सरां गणसस्तुतम् ।
सिद्धविद्याधरीगीत किन्नरोद्गीतं च तद्वनम् ॥

मधुराकूजितोद्घुष्ट पक्षिणां रुदित शुभम् ।
चित्र मनोज्ञवादित दि गणानुगच्छ ... नम् ॥

अप्सरां गणसङ्घी ... ... गो ... ।
योगिभिः सर्वतः कीर्णं अभवत्‌ शाल्वन वनम् ॥

समन्तात्‌ परिवृत श्रेष्ठ ... गानां गुनिपुङ्गवम् ।
ततोऽर्वनि श्वस्य स... ... वै वीतशोको ॥

अश्रुबिन्दु प्रमुञ्च ने ... ण काश्यपस्तदा ।
अगमा... ... पार्श्व ... ... तीनं तदा ॥

वाच चाभापत क्षिप्र ... कृप प्रयाते ।
यत्र नाम तथा बुद्धा परिनिर्वृत्ये शाश्वता ॥

अनित्य दु खशून्य तु इद तेनैव भाषितम् ।
न ह्यो गे शाश्वतो ... अ यत्र पारावर्तिनम् ॥

बोधिसत्त्वावगम्ना गो न त-ज्ञग महर्द्धेि ।
दैरो ऋद्धिभिगान्गे ल्गेराहैगारो ॥
तत्रस्थ' स्वप्नात्पश्गे म-तृगाप नगा ।पम्र ।
त्वयैव ऋद्धिमाविष्ट ग राजा शोरमूञ्जत ॥
पश्यतेऽसौ तदा स्वप्ने गत्वश न गान्तम् ।
कुमार विश्वमात्मान म-जुघोष महर्द्धिकम् ॥
विकुर्वन्त तथा धर्म बोधिम-न गवाल्कम ।
विचित्र अचिन्त्यतां ऋद्धि मञ्जुश्री त्वत्प्रसादतः ॥
अवीचिगमन नृपो उत्थान च सत्त्वरम् ।
विविधां धर्मतांश्चैव अपाय नाशशोभनम् ॥
गतिमाहात्म्यगुणांश्चैव सर्वश्रावकवर्जिताम् ।
विस्तरेण तत क ना सूत्रको कल्पनाशनम् ॥
अजातशत्रोर्नृपते विनोद चातिविस्तरम् ।
समासेन इद प्रोक्त विस्तरार्थार्थभूषितम् ॥
वचन सर्वबुद्धानां आदिमध्यावसायिनाम् ।
सर्वसत्त्वहितार्थाय भाषित त्वपविस्तर ॥
त्व कुमार तदा रात्र मञ्जुश्रीर्वै सर्वेत ।
विनेष्यसि महीपाला पापकर्मानुवर्तिनाम् ॥
अपि त्व ते ऋद्धिविषय विनेय वापि अचिन्तितम् ।
सर्वभूतगणांश्चैव त्व विनेता भविष्यसि ॥
इत्येवमुक्त्वा महावीरो बुद्धानां च महाद्युतिम् ।
मञ्जुघोष तदा वै[illegible] शुद्धावासोपरिस्थितम् ॥
उवाच वदतां श्रेष्ठ सम्बुद्धा द्विपदोत्तम' ।
भविष्यसि त्व सम्बुद बहुकल्पाभिनिर्गते ॥
अपि [illegible]गणानाम [illegible]र्गानुपूर्वेण नामत' ।
[illegible]

बुद्धक्र ग नदा क्र गा गनुत्रंग गा गदा ।
विमोन्यथ बहु मत्त्वां परिनिर्वाण ते भविष्यति ॥

इत्युक्त कुमारो नै नालम्पी गहर्द्धिक ।
स दीर्घं नि श्वस्य रातिम्र करुणाविष्टचेतसा ॥

चिरमालोक्य मम्बुद्ध माश्रुनिद्रग सुमूच्चन् ।
समणामाञ्जलिपुट निषसाद तत' पुन ॥

ततो क्ष्मातलाधस्थ अजातारयो नृपात्तम ।
प्रणम्य शिरसा विप्र महाकाश्यपमद्भुतम् ॥

विबुद्धश्चेतनायात पादौ वन्द्य अग्रण ।
नि श्वस्य च चिर काल विस्तरार्थं निवेद्य च ॥

निषण्णो नृपते' पुत्र अजातारयो मगधेश्वर' ।
महाकाश्यप ततो नत्रे गच्छागोम्न चितालयम् ॥

पूजित चैत्यविम्बस्थ उपकारार्हमानुपाम् ।
तत्रस्थ' श्रावको ह्यग्र' ऋद्ध्या चैत्रमुपागमम् ॥

नस्योत्वहृते चिरा अयुक्त मम ऋद्धिये ।
पञ्चर्यां ग तुमेन्द्रागि गहान्विन रागागमम् ॥

अपश्चिमे गति' शास्तु दर्शनार्थं तु मागमम् ।
ततोऽर्धपथे तस्थुः राङ्खाराते तु स व्रती ॥

यावत् पश्यते तत्र सङ्घारामनिवासिनम् ।
महल्ल भिक्षुनवकमुमायसत्त्व विमोहितम् ॥

स दृष्ट्वा उपसङ्क्रान्त महल्लो त चिरोपिणम् ।
महेशाख्य महाभार्ग शुद्धसत्त्वनिरामयम् ॥

उपसङ्क्रम्य त विप्र वन्दित्वा पादयोस्तदा ।
उवाच त महाभाग स्वागत ते किमागतम् ॥

कुत्र वा यास्यते क्षिप्र उद्विग्नो वा किं वतिष्ठसे ।
उवाच सो त ऋषि त काल आयुग न श्रुत त्वया ॥

आनन्देण तदाग्रेण गीतोऽग्नौ गौतिमत्रिगो ।
पञ्चत्वं गतो हि सो भिक्षु वीतरागो महर्द्धिक ॥

गत्वासौ पश्यते तत्र मुनिना देहानिताचिताम् ।
अनेकधा देवसङ्घैस्तु महापूजा प्रवर्तिताम् ॥

विविधाकारवरोपेतां सर्वाकारसुभूषिताम् ।
चितामारोपित देह मुनिनो गौतमस्य वे ॥

दृष्ट्वा तु त महाभाग महाकाश्यपमद्भुतम् ।
सर्वे ते वीतदोषा वे भिक्षवश्च महर्द्धिका ॥

सर्वे देवगणा भूता हाहाकार प्रमुञ्च्य च ।
आक्रन्द्य च महच्छब्द रव चापि सुशोकजम् ॥

प्रत्युद्गम्य तत' सर्वे देवनागा महर्द्धिका ।
उवाच त महाभाग वन्द्यस्त्व द्विपदोत्तमम् ॥

तवैवोदीक्षण त विश्वा देवसङ्घा समानुषा' ।
सर्वे भूतगणाश्चैव रूपयक्षनराधिपा. ॥

चितादीपनत विप्रा अशक्ता ज्वालयितु चिताम् ।
ततोऽसौ वीतदोषस्तु महाभोगो महर्द्धिक ॥

कृत्वा प्रदक्षिण बाहु नम्रानुस्मृत्य तथागतम् ।
चितान्ते अन्तिमे भागे वन्दतेऽसौ महर्द्धिक' ॥

आयसा च तदा द्रोणा भित्वा पादौ विनिर्गतौ ।
वन्दित्वा पादयोर्मूर्ध्ना परामृश्य पुन पुन ॥

उद्वीक्ष्य बहुधा तत्र चरणौ मुनिवरे वरौ ।
प्रविष्टा भूयसस्तत्र आयसा द्रोणिमाश्रितौ ॥

निषण्णोऽसौ ततोत्थाय वीतरागो महर्द्धिक' ।
परिवारोऽथ अर्हन्तैः वीतरागैर्महर्द्धिभि' ॥

राजा मागधो मुख्य' आगतोऽसौ चितान्तिके ।
अनुपूर्व्या तथा याने' हस्त्यश्वरथवाहने' ॥

मुनिना व्याकृतो ह्यत्र बुद्धकृत्य करिष्यति ।
वयं च भगता सार्धं अनुयास्याम काश्यपम् ॥
ऋद्धिमात्र महाभाग तेजश्च महत्यनिम् ।
द्वितीयमिव शास्तार प्रतिबिम्ब महीतले ॥
महाकाश्यपमुख्य तु श्रावकाणां महर्द्धिकम् ।
तिष्ठन्तं म्रियमाण वै मा शास्ता नेत्त त्वं कृथा ॥
एवमालापिन सर्वे करुणाविष्टा महाद्धिका ।
वीतरागा महायोगा मुनिपुत्रा निषण्णकाम् ॥
चितामादीपितो तैस्तु मल्लैश्चापि नराधिपैः ।
आदीप्ते तु समन्ता वै भस्मीभूत तु न चितम् ॥
त दृष्ट्वा देवसङ्घा तु भोगवन्तो महोरगाः ।
शान्तये तच्चितास्थान चन्दनोदकवारिणा ॥
महावर्ष प्रमुञ्चन्ता स्थिता भूयोऽथ तत्क्षणात् ।
महापुष्पौघमुत्सृज्य पुनरेव महीतले ॥
आगता तत्क्षणात् सर्वे जिनधातु सुपूजना ।
सर्वे परस्पर युद्ध कर्तुमारब्ध तत्क्षणात् ॥
ब्रह्माद्या शक्रयामाश्च सर्वे देवगणास्तथा ।
निवारिता वीतरागैस्तु श्रावकैश्च महर्द्धिकैः ॥
महाकाश्यपेन विभज्य वै धातवो जिनमूर्तिजा ।
स्तोकस्तोकानि दत्तानि पूजनार्थाय सर्वतः ॥
त्रिधा यानपराद्यार्चि निष्ठाशान्ति च कारणात् ।
महाकाश्यपस्तदा योगी वीतरागो महर्द्धिकः ॥
चिन्तयामास त वीक्ष्य महद्धकस्य अभाषितम् ।
माहैव प्रवचनं कृत्स्नं द्वादशाङ्ग सुखोदयम् ॥
सूत्रविनयाभिधर्मं वै भ्रमकालिकतां व्रजेत् ।
अस्तं याते महावीरे निष्प्रभाणा भविष्यति ॥

सङ्गातव्यमिम कृत्स्न वचन बुद्धभाषितम् ।
गच्छामः सहिता' सर्व वीतरागा महार्द्धिका ॥
मागधानां पुर श्रेष्ठ राजाग्र्य नगर शुभम् ।
कुशाग्रपुरे रम्ये पर्वते सुशिलोच्चये ॥
वैशाल्यां च शुभे देशे चैतस्थाने सुशोभने ।
एवम्प्रकारा ह्यनेकाश्च शासनार्थ तु कारणात् ॥
मल्ला पलायिन' सर्वे चक्रिरे स महर्द्धिका ।
तस्मिं काले युगान्ते वे अस्त याते मया तु वै ॥
महीपाला भविष्यन्ति परस्परविधे रता ।
भिक्षवो बहुकर्मान्ता मत्ता लोभमूर्च्छिता ॥
अश्राद्धा युगान्ते वै उपासकोपासिकास्तथा ।
परस्परवधासक्ताः परस्परगवेषिण ॥
छिद्रप्रहारिणो नित्य सव्रणा दोषदस्तथा ।
भिक्षवो ह्यसयतास्तत्र मुनिरस्तं गते युगे ॥
स्थापिता रक्षणार्थाय शासन भुवि मे तदा ।
अष्टौ महर्द्धिका लोके वीतरागा निराश्रवाः ॥
अर्ह त' तदा ज्येष्ठा राहुलाद्या प्रकीर्त्तिता ।
तेषां दर्शन नास्ति तस्मि काले युगाधमे ॥
अमोघ दर्शन तेषां कलिकाले तु मन्त्रिणाम् ।
मयात्र स्थापिता' सर्वे ऋद्धिमन्तो महर्द्धिकाः ॥
प्रणिहित मया तेषां दग्धकर्ममहायशाम् ।
आज्ञोल्लङ्घनं तेषां किञ्चिन्छिष्या व्यतिक्रमे ॥
तिष्ठन्त यावत् सद्धर्म भूतकोश निरामिषम् ।
मम वाक्यमिद पुण्य यावद्द घुष्यते तले ॥
तत' शान्ता निरात्मन' परिनिर्वाय निराश्रवाः ।
भविष्यति तदा काले शासनान्तर्हिते मुनौ ॥

श्रावको मुनिवरे ज्येष्ठ' काश्यपो नाम नामत' ।
सङ्गृह्य च तदा धातु सविभात्ति तदा श्रुति ॥
स्तोक दत्वाजाताख्ये मागधस्यैव यत्नत ।
एव नराधिपेषु सर्वेषु अष्टेष्वपि महाद्युतिः ॥
सर्वेभ्यः सर्वतो दद्यान्छ्रावकोऽसौ महात्मनः ।
पुनरेव भवस्तस्थौ अनित्यसञ्ञमभावत ॥
शोचयामास सत्त्वानां करुणाविष्टेन चेतसा ।
रोदिष्यन्ति चिर सत्त्वा कल्पां बहुविधा तथा ॥
सद्धर्मेन्तर्धिते लोके शास्तुनो शाक्यपुङ्गवे ।
सङ्घातव्यमिम वाच्य माहैव धूमकालिकम् ॥
ततोऽभ्युत्थितवां वीर प्रभावामृतचेतसः ।
आमन्त्रयामास मन्त्रजेन्द्र अजाताख्य नराधिपम् ॥
गच्छामो राजगृहं नगरं शास्तुशासनसत्कथा ।
गाथकुम्भसुविन्यस्तां धातुं प्रक्षिप्य यत्नत' ॥
तेऽत्र पूर्वेण आयाता क्षिप्र राजगृह तदा ।
स्थान वेणुवन प्राप्य स्थापयामास जिनोद्भवाम् ॥
स्तूप महाद्भुत कृत्वासौ लोकनाथस्य तापिने ।
पूजयामास त स्तूप विविधाकारभूषणै. ॥
माल्यचीवरच्छत्रैश्च चूर्णगन्धैस्तु धूपनैः ।
छत्रै. पताकैर्विचित्रैश्च घण्टामाल्यविलेपनै ॥
अनेकाकारविचित्रैस्तु दीपमालाभि स्रग्मिभिः ।
पूजां कृत्वा महीपाल प्रणामगतचेतसः ॥
मूर्ध्ना प्रणम्य तं स्तूपं प्रणिधिं चक्रिरे तदा ।
लोकाग्रं पूजजित्वा तु यन्मया कुशल बहु ॥
अनेकताथागतीपूजां प्राप्नुयाहमचिन्तिया ।
उत्थाय ततो राजा महाकाश्यपमब्रवीत् ॥

अश्रु सम्परामृज्य वाष्पाकुलितलोचन' ।
कृपाविष्टहृदय पितर सस्मरेत् तदा ॥
आर्यो मे महाप्राज्ञः साक्षिभूतो भवस्व माम् ।
यन्मया कारित पाप नियतावीचिपरायणम् ॥
तादृश धर्मराज तु शास्तुर्वचनपथ स्थितम् ।
घातयित्वा तु त पितर न शक्नोमि विनोदितुम् ॥
कल्याणमित्र आर्यो म ममार्थ देष्टुमर्हति ।
एवमुक्तो महात्मासो अग्रश्रावको जिने ॥
काश्यपो नामतः धीमां इम वाचमुदीरयेत् ।
मा भैष्ट महाराज कृत ते कुशलं बहु ॥
अस्ति'ते जन्मिनोऽभ्यासि' अनेकशतधा पुरा ।
बुद्धानामनुत्पादा प्रत्येकजिनसम्भव' ॥
नगर्यां वाराणस्या श्रेष्ठिपुत्र अभूत् तदा ।
अज्ञानाद् बालचापल्याद् रथ्यायां निर्ययौ तदा ॥

स एव भगव तत्र प्रत्येकजिनमागत' ।
भिक्षार्थी हिण्डते तत्र लोकानुग्रहकाम्यया ॥

बालस्य दृष्ट्वा तं प्रसन्नगतमानसम् ।
पादयोर्निपत्य पप्रच्छ किं करिष्यसि तैभिक्षु ॥

तूष्णीमेव स्थितो भगवां खड्गकल्पमसम्भव ।
तदा तेन तु बालेन चीवरे गृह्यमस्थित ॥

गच्छ गच्छ इमं श्रेष्ठ मन्दिर ध्वजभूषितम् ।
अस्माकमेतदावास पादौ प्रक्षाल्य भोक्ष्यसे ॥

भुङ्क्ष्व क्षिप्र यथाकाम क्रीडिष्यामो यथेप्सत. ।
ततोऽसौ वीतदोषस्तु त्रिमक्रान्तकघातकः ॥

अनुपूर्वेण ययौ तत्र परानुग्रहतत्पर ।
गत्वा द्वारमूलेऽस्मि स्थित एव महाद्युतिः ॥

ततस्तेन तु बालेन प्रविशित्वा अम्ब उच्यते।
देहि भक्ष मया अम्ब भिक्षांश्च विविधां बहूम् ॥
मित्रा मे ह्यागतो ह्यत्र पांसुक्रीडनकश्चिरात्।
मादिऱ्यसि चिर तेन तिष्ठते द्वारमागत ॥
तदा स त्वरमाना तु द्वार निर्ययु तत्क्षणात्।
पश्यते त महाभाग शा तरेप महर्द्धिकम् ॥
तदा सा क्षिप्रमागत्य गृहीत्वा भाजनं शुभम्।
सुप्रक्षाल्य ततो हस्तौ ॥
गृहीत्वा ओदन चोक्षमनेकरसभूपितम्।
विविधाकारभक्षांश्च भाजने न्यस्य राजते ॥
आगम्य च तदा क्षिप्र पात्रे निवेद्य च।
पादयोर्निपतिता सा तु ससुता धर्मवत्सला ॥
गृहीत्वासौ पिण्डपातं तु आकाशे अभ्यगच्छत।
ततोऽसो ज्वलमानस्तु दीपमालेव दृश्यते ॥
तेन तेषां वाचिको धर्म विद्यते खड्गचारिणाम्।
प्रभाव ऋद्धिसत्त्वानां दर्शयन्ति महात्मनः ॥
अतिकारुणिका तेऽपि सत्त्वेभ्यो गतमत्सराः।
परलोकार्थ तु सत्त्वेभ्य' ऋद्धिं सन्दर्शयन्ति ते ॥
तेन कर्मविपाकेन मात्रया सह बालकः।
पञ्चज ससहस्राणि देवत्वमथ कारयेत् ॥
देवाना देवराजासौ सा एव जननी अभूत्।
अमनुष्याणां चक्रवर्तित्व मनुजेश अभूत् तदा ॥
मनुभूय चिर सौख्य विम्बासारसुतो इह।
ग्रस्ते भाकर्पितो भगवां चीवरान्तेऽथ गृह्य च ॥
वाचा दुर्भाषिता उक्ता भिक्षुवादेन चोदितः।
पांसुक्रीडनको मह्य भवस्वेति पुरा तदा ॥

वाचो गतस्य कर्मस्य अनिष्टस्य कटुकस्य च ।
तीव्र प्रतापनादुःख अनुभूय चिर बहु ॥

नरके पतितो घोरे अनीप्सको दु'खदु'सहम् ।
कर्मपाशानुबद्धास्तु सत्त्वा गच्छन्ति दुर्गतिम् ॥

हसद्भिः क्रियते कर्म रुदद्भिरनुभूयते ।
पूर्व बालिशभावेन प्रत्येकजिनतापिने ॥

वाचा निश्चारिता दुष्टा तस्य कर्मस्य ईदृशम ।
नरकेभ्य' व्यसित्वा तु मनुष्यत्वमिहागत. ॥

नारके चेतना ह्यासीद् विपाकजाते नराधिप ।
तेन तीव्रेण रोषेण जीविता ते द्रुतकर्चिकाम् ॥

पूर्विकां वासनां स्मृत्वा प्रत्येकजिनचारिणीम् ।
सम्मुख दर्शितो बुद्धः पूज्यश्चैवमकारिता ॥

तेनैव हेतुना ह्यासीद् राज्यत्वमिह कारय ।
एव वेणुवने तेषां अन्योन्या संलपेद् भुवि ॥

एकश्च अग्रशिष्यो मे द्वितीय स नराधिप! ।
प्रणम्य शतधा स्तूप स्वगृहेणैव ययौ तदा ॥

ततोऽसौ शिष्यमुख्यैर्मे पिप्पलागुहवासिनः ।
सन्निपात्य मुनिं सर्वा वीतरागां महर्द्धिकाम् ॥

द्वादशाङ्ग प्रवचन कृत्स्न विनय चैवमगायत ।
तन्मया कथितो धर्म' पूर्व जिनवरैस्तथा ॥

स तेन शिष्यवराग्रेण त्रिप्रकार समादिशेत् ।
ग्रथन सूत्रभेदेव विनये चाभिधर्मत' ॥

तृबन्धान्मोचयेत् सत्त्वां त्रिदोषा चापि शोषयेत् ।
तृदुखान्मुक्तवां धीरः त्रियान स्थापयेत् तदा ॥

शासनार्थ तु बुद्धानां कारयिष्यति अग्रधी ।
महाराजाजातविख्यातो मागधेयो नराधिप. ॥

यावदादिह्रपर्यं त वारणस्यामत परम् ।
उत्तरेण तु वैशाल्यां राजा सोऽथ महाबल ॥
भविष्यति न स न्देह शासनार्थं करिष्यति ।
त्वया कुमार ! निर्दिष्ट' व्याकृत' शान्तिमुत्तमे ॥
तस्यापि सुतो राजा उकाराख्य प्रकीर्त्तित' ।
भविष्यति तदा क्षिप्र शासनार्थं च उद्यत ॥
तदेतत् प्रवचन शास्तु लिखापयिष्यति विस्तरम् ।
पूजांश्च महतीं कृत्वा दिक्समन्तान्नयिष्यति ॥
न चास्य दुर्गतिं चास्य देवेषूपपत्स्यते ।
विंशद् वर्षाणि त्रिंशच्च पितृणा सह जन्मिन' ॥
वेलायामर्धरात्रे तु पञ्चत्व यास्यते तदा ।
गोत्रजेनैव रोगेण अभिभूतोऽसौ भविष्यति ॥
महारोगेण तु सार्त्त दिवसानि षडविंशति ।
समस्तव्याधिग्रस्तोऽसौ विविधाकारमूर्छित ॥
च्युतोऽसौ नरपति क्षिप्र देवेषूपपत्स्यते ।
नियत प्राप्स्यते बोधि सोऽनुपूर्वेण यत्नत' ॥
एते चान्ये च बहव अतीता येऽप्यनागता ।
कृत्वा तु विविधा कारा प्रत्येकजिनतांपिषु ॥
इष्टां विशिष्टा सम्पत्तिं न्व्यामानुपिकांस्तथा ।
तेऽनुपूर्वेण गच्छन्ति शान्तिं निर्जरसम्पदम् ॥
हीनोत्कृष्टराजानो मध्यमाश्च नराधिपा ।
आद्ये तु युगे कथिता नहुषाद्या पार्थिवादयः ॥
बुधशुक्रोदयो नित्य मन्त्रसिद्धा नराधिपा ।
शान्तनुश्चित्रसुचित्रश्च पाण्डवा सनराधिपाः ॥
यादवा वारयत्याश्च रिषिशापास्तांगता तदा ।
कार्त्तिकः कार्त्तवीर्योऽसौ दशरथदाशरथी पुरा ॥
अर्जुन सिद्धमन्त्रस्तु द्विद्रोणसुतोऽपर ।
अश्वत्थामा परो मन्त्री साधयामास मन्त्रराट् ॥

शास्तुमूजितमन्त्रास्ते क्ष्मापत्य कारयेत् तदा ।
सम तात् त्रिपु द्वीपेपु जम्बूद्वीपगता तदा ॥
देवकाराश्चैव म त्राणि पार्थिवात्य ।
तेऽपि ताथागत पूजां अनुमोद्य दिवि गता ॥
बुद्धत्वनियता तेऽपि केचित् प्रत्यकगानिका ।
श्रावकत्वनियता केचित् सर्वे ते मोक्षपरायणा ॥
कालव्यस्थानुरूपेण आयुपश्च विकल्पते ।
उत्तमा दीर्घमानुष्ये मध्या मध्यमके तथा ॥
अन्तिमे तु युगे कष्टे कलिप्राप्ते युगाधमे ।
+++ +++++ पार्थिवा तु कलिप्रिया ॥
अन्योऽन्य वैरसक्ता परस्परविहेठका ।
नीचोत्पत्तिमायाता शस्त्रसम्पातमृत्तव ॥
शस्त्रप्रवृत्तिसमुत्साहा परदाराभिरतस्तदा ।
भविष्यन्ति न सन्देहः भूपाला लोककुत्सिताः ॥
धूर्ता निकृष्टकर्माण अनार्या मत्सरिणस्तथा ।
भविष्यन्ति तदा काले मध्य द्वापरयो कलो ॥
सक्षेपेण तु वक्ष्यामि नृपाणा नियोधत ।
वर्तमाने तु यत्काले पार्थिवा भुवि मण्डले ॥
तेषां तु रूपचिह्नानि वर्णनश्च निबोधताम् ।
प्रसेनजित् कोसलो राजा बिम्बिसारस्तथापर ॥
उदयन' क्षत्रियश्रेष्ठ' शतानीकसमुद्भव ।
सुबाहु सुधनव्याता महेन्द्र चमसस्तथा ॥
लिच्छवीना तथा जात सिंहो वैशाल्यमुद्भव ।
उदायिन्त्रोतमुद्योतमहासेनश्च वध्यते ॥
उज्जय यां तथा चण्ड कपिलाह्वे नृप ।
राजा शुद्धोदनश्चैव वैराटाख्या महाबल ॥

इत्येते क्षत्रिया प्रोक्ता महीपाल्या शास्तु प्राका' ।
सम्मुख बुद्ध पश्यन्ति शाक्यसिंहे नरोत्तमम् ॥
धर्म श्रुत्वा ततस्तेऽपि चिर प्राप्स्यन्ति सम्पदाम् ॥
नियत मोक्षकामास्तु शान्ति प्राप्स्यन्ति तेऽपि ताम् ।
इत्येते लोकविख्याता भूपाला क्षितिमण्डले ।
वर्णत' क्षत्रिय प्रोक्त चिह्नतो नामसञ्ज्ञित' ॥
पूजयिष्यति ते वाक्य मयैव कथित भुवि ।
त्वयैव व्याकृतो लोके कुमारो बालरूपिण' ॥
अजाताख्यो नामसौ नियत बोधिपरायण. ।
मयि वर्षशते परिनिर्वृते भुवि मण्डले ॥
निरालोके निरानन्दे अज्ञानतमसा वृते ।
भविष्यति तदा शून्या मेदिनी जिनवर्जिता ॥
तस्मिं काले महाघोरे कुसुमाह्वे नगरे तदा ।
अशोको नाम विख्यात' पार्थिवो भुवि पालक. ॥
तीव्रकारी सरोषी च निर्घृणोऽसौ भवेत् तदा ।
कल्याणमित्रमागम्य वीतराग महर्द्धिकम् ॥
भिक्षु शीलसम्पन्न निर्ज्वर गतचेतसम् ।
पूर्ववासनहेतु च पांशुदान्न महर्द्धिकम् ॥
नियत क्षेत्रसम्पन्न पार्थिवोऽसौ महाधन ।
धर्माधर्मविचारी च सघृणी कारुणिको हि सौ ॥
हेतुमुद्भावयामास वीतरागो महार्द्धिक. ।
त्वया हि नृपते. पूर्व अज्ञानाद् बालचापलात् ॥
जिने शाक्यसिंहस्य पांशु अञ्जलिना तदा ।
पात्रे भस्मे प्रतिष्ठाप्य प्राप्ता सम्पत्तयो दिवि ॥
देवलोक च्यवित्वा तु पितृलोकमिहागतम् ।
भुङ्क्ष्व राज्य महीपाल! जम्बूद्वीप सकाननम् ॥

आरा ग मन्त्रं यक्षस्य जम्भलस्य महात्मने ।
तता भूतरथ सिद्ध क्षितिपश्च महात्मन ॥
यक्षास्तस्य तिष्ठ ते आज्ञो दीक्षितमानसा ।
नागाश्चैव तिष्ठन्ते भव्या किङ्करहेतव' ॥
एव महर्द्धिका धर्मात्मा वलचक्री अभूत् तदा ।
यथेष्टगमन तस्य निपेद्धा न कचिद् भवेत् ॥
पूर्वस्थापितकाथ तु जिनानां धातुवरा भुवि ।
नगरे राजमुख्ये तु वने वेणुवने तदा ॥
गृह्य धातुधरे धातु कुशलालम्बनमानस ।
पूजयामास त स्तूप यथा पौराणमकारय ॥
गृह्य त धातुकुम्भ तु विभज्य शतधा पुन ।
क्षणेनैकेन मेधावी यक्षाणामाज्ञाविनिर्दिशेत् ॥
जम्बुद्वीप इम कृत्स्न स्तूपालङ्कृतभूपणम् ।
कारयन्तु भवन्तो वै धातुगर्भा वसुन्धराम् ॥
आज्ञामतीच्छते यक्षा अर्धरात्र तु यत्नत ।
अमानुषेय कृति कृत्वा शिलायष्टयोच्छ्रिता भुवि ॥
अनेकस्तम्भसहस्राणि रापयामास ते तदा ।
पूजनार्थं तु चैत्यानां चिह्नभूत च देहिनाम् ॥
कृत्वा तु विविधा स्तूपा लोकनाथेभ्य तायिषु ।
क्षणेनैकेन ते यक्षा नृपतेऽन्तिकमागता. ॥
प्रणिपत्य तता मूर्ध्ना वाचा निश्चारयन्त्यम् ।
यथाज्ञप्त कृत सर्व कि न पश्यसि भूते ॥
ततोऽसौ पार्थिव. क्षिप्र आरुरोह रथ तदा ।
विविधाकारपूजार्थं अनेकाकारशोभनाम् ॥
काञ्चन राजत ताम्र त्रिविधांस्तूपभूपणाम् ।
ततो भूतरथ क्षिप्र पूरयामास पार्थिव. ॥

क्षणेनैकन त देश यत्र ते धातुधरा जिना ।
विचित्राकारपूजाभि पूजयेत नराधिप ॥
शोभने मेदिना कृत्स्ना जिनधातुधरैस्तदा ।
प्रणिधिं चक्रिरे राजा धर्माशोको महात्मवान् ॥
अनेन कुशलार्थेन बुद्धा भमामनुत्तर ।
एव विदित्वा महात्मासो धर्माशोको नराधिप ॥
मृतोऽसौ देवतां याति नियत बोधिपरायण ।
अशीतिवर्षाणि सप्तं च पूजये धातुवरां भुवि ॥
जीवेद् वर्षशत सार्ध कृत्वा राज्यमकण्टकम् ।
स्वकर्मजनितास्तस्य व्याधिरुत्पन्नदेहजे ॥
तेनैव व्याधितो द खी मृत स्वर्गापगा भवेत् ।
महतीं सम्पदं प्राप्य अनुभूय दिवौकसाम् ॥
अनुपूर्वेण मेधावी बोधि प्राप्स्यति दुर्लभाम् ।
म त्रा सिद्ध्यन्ति तत्काले वज्राब्जकुलयोरपि ॥
जम्भलाद्यास्तथा यक्षा अस्मिं शासनवर्त्तिन ।
यक्षिण्यश्च समाख्याता हारीत्याद्या महर्द्धिका ॥
चक्रवर्तिसमुत्पादे मन्त्रा सिद्ध्यन्ति चक्रिण ।
जिनैस्तु कथिता ये मन्त्रा विद्याराजा महर्द्धिकाः ॥
उष्णीषप्रभृतय सर्व ये चा ये जिनभाषिता ।
उत्तमा साधनां कुर्यात् तस्मि काले सुशोभने ॥
उत्तमैर्नाधमा सा या उत्तमां गतिमाश्रुतै ।
दिलीपो नहुषश्चैव मा धाता सगरस्तथा ॥
साधयि वा तु ते म त्रा चाक्रिणा जिनभाषिताम् ।
तेजोराशिरतदा सिद्ध नहुषस्य महात्मन ॥
राजा सितातपत्रस्तु सिद्धस्तु मगरस्य वै ।
दिलीपस्य तथा मन्त्र सिद्धमेकमक्षरम् ॥

मान्धातस्य तथा लोके सिद्ध उर्णीषमुन्नत' ।
जयोर्णीषस्तथा सिद्धो धुन्धुमारे नृपोत्तमे ॥
कन्दर्पस्य तथा राज्ञा विजयार्णीष कथ्यते ।
प्रजापतिस्तस्य पुत्रो वै तस्यापि लोचना भुवि ॥
प्रजापते सुतो नाभि तस्यापि उर्णमुच्यति ।
लाभनो ऋषभपुत्रो वै स सिद्धकर्म दृढव्रत ॥
तस्यापि माणिचरो यक्ष सिद्धो हैमवते गिरौ ।
ऋषभस्य भरत. पुत्र सोऽपि मन्त्रान् तदा जपेत् ॥
साऽनुरूपेण सिद्धमन्तु महात्मा भुवि स्मृता ।
एते चाऽ ये च बहव पार्थिवा लोकविश्रुता ॥
साधयित्वा तु मन्त्राणा राज्य कृत्वा दिव गता ।
जिनेन्द्रैर्य तु उक्तानि निग्राराजा महर्द्धिका' ॥
ते सर्वे शोभने काले युगेऽशीतिसहस्रगे ।
सिद्धा साधयिष्यन्ति मन्त्रत न्त्रार्थकोविदाः ॥
एते चान्ये च बहव पार्थिवा लोकविश्रुता ।
ततोऽशीतिसहस्राणि वर्षाणां शतमेव वा ॥
राज्यं कृत्वा तत. स्वर्गं नियत बोधिपरायणा ।
मध्यमे तु तदा काले दिव्यामाश्चर्यमहर्द्धिका. ॥
मन्त्रा सिद्धिमेवायुर जपाणिसमान्विता ।
मन्त्रिभिर्नरमुख्यैस्तु भयान्ते सार्वभूमके ॥
राजा च ब्रह्मदत्तो वै वाराणस्यां महापुरे ।
सिद्धः अब्जपाणिस्तु लाकीशा लोकविश्रुत ॥
महावीर्या महात्मासौ अनिकारुणिको महान् ।
सत्त्वानां मन्त्ररूपेण ददृश धर्मदेशनाम् ॥
राज्ञा ब्रह्मदत्तेन अनुभूत मानुष सुखम् ।
ततोऽसौ सिद्धमन्त्रस्तु सन्देह स्वर्गमाविशेत् ॥

तस्यापि च सुतो धीमान पुण्यकर्मा ऽन्व्रत· ।
तस्यापि सिद्धो महावीर्या हर्यारव्येति विश्रुत· ॥
तेन म त्रप्रभावेन जित शक्र अभूत् तदा ।
तस्यापि सुत श्वतारव्या राजाभूत् सनन्दस्तदा ॥
तस्यापि वरदा मन्त्रा महाश्विता नाम नामत ।
साधयित्वा तु तां म त्र जीवेद् वर्षशतत्रयम् ॥
तेन मन्त्रप्रभावेन सुखावत्या स गच्छति ।
नियत बोधिमेवास्य य चान्ये व्याहृता मया ॥
मध्यमे तु तदा काले म यम त्रांतु साधयन् ।
अधमेऽतियुगे कष्टे मयि बुद्धत्वमागते ॥
मन्त्राः सिद्धि प्रयास्यान्ति त्वब्जाब्जकुलयोरपि ।
त्वया कुमार! म त्रा वे ये पूर्व कथिता भुवि ॥
तेऽपि सिद्धि प्रयास्यन्ति मन्त्रा वै भागहेतुताम् ।
इतराणि तु मन्त्राणि लौकिका त्रिविधा तथा ॥
कश्मला विकृतरूपाश्च अन्तरिक्षा तु खेचरा ।
भाम्या च मथ यक्षिण्य पिशाच्या त्रिविधास्तथा ॥
गरुडा किन्नराश्चैव प्रेता राक्षसभाषिता ।
पिशाचोरगरक्षाणां नागानां च महर्द्धिका ॥
मन्त्रा सिद्धिं प्रयास्यन्ति युगे कष्टे युगाधमे ।
कुमाररूपास्तु मन्त्रा वै कुमारिरूपास्तु सर्वदा ॥
तेऽपि सिद्धिं प्रयास्यन्ति तस्मि काले भयानके ।
त्रिविधास्तु तथा मन्त्रा त्रिप्रकारास्तु साधना ॥
त्रिविधेनैव काले न त्रिविधा सिद्धिरिष्यते ।
सक्षेपेण तु वक्ष्यामि कथ्यमानमातिविस्तरम् ॥
राज्ञे सौ शाकमुख्यस्य पृष्ठते त भवे नृप ।
विशोक इति विख्याता लाके धर्मानुचारिण· ॥

तस्य सिद्धा इमा मन्त्रा देवी पण्डरवासिनी ।
विशोक साधयित्वा तु आजहार दिवाकसाम् ॥
नाकपृष्ठे चिर राज्यमनुभूय स महानृप ।
पुनरेव ग॰ ॰न्मानुष्य अशोका हि ततिमाम् ॥
राज्य विविधसम्पत्ति अनुभूय महाद्युति ।
पूजयद् धातुवरां श्रीमां वर्षाणि पञ्चसप्तति ॥
ततो ज्वरेणाभिभूतोऽसौ भिक्षन्हो दिव गत' ।
तस्याप्यनन्तरे राजा शूरसेन' प्रक॰यते ॥
विघुष्टा धर्मचारी च शासनेऽस्मिन सदा हित' ।
तेनापि साधिता मन्त्रा देवीस्तूपमहाश्रिया ॥
तेनापि कारिता शास्तु स्तूपा सुमहती तदा ।
स्तूपैरलङ्कृता सर्वा समुद्रान्ता वसु धरा ॥
तस्य कर्मविपाकेन व्याधिरुत्पन्नदेहजा ।
पक्षमेक क्षपयित्वासो च्युतदेहो भविष्यति ॥
कृत्वा राज्य वर्षाणि दश सप्त च मानवी' ।
च्युतोऽसौ स्वर्गमायिष्ण नियत त्रायिषगायण ॥
तस्याप्यनन्तरो राजा नन्दनामा भविष्यति ।
पुष्पाख्ये नगरे श्रीमा मनाम्रो यो महाबल ॥
तेनापि साधिता मन्त्र ॥ ॥ पीठामत ।
तस्य म त्रप्रभाव तु महाभागा भा॰ ॰यति ॥
नीचमुख्यसमाख्याता तदा लोके भविष्यति ।
तद्धन प्राप्य स वी सो लोके पार्थिवतां गत ॥
भविष्यति तदा काले ब्राह्मणास्तार्किका भुवि ।
सिद्धयाभिमानलु॰ ॰ ये नगरे मगधवासिन ॥
भविष्यन्ति न स न्देहो नि॰ यागर्वितमानिन ।
तेभि॰ परिवारितो राजा ने ॥

धर्मशीलोऽपि धर्मा मा तेषां दास्यति त धनम् ।
कल्याणमित्रमागम्य पूजे धातुवरानसो ॥
येनत त तदाभ्यागमात् दानातिक्रमहेतुना ।
विहारा कारिता तेन षोडशाष्टौ च धीमता ॥

भविष्यति तदा काले नगरे पुष्पसाह्वये ।
मन्त्रिमुख्यो महात्मा वै घृणी साधु तथा द्विजः ॥
स भविष्यति धर्मा मा तस्या राज्ञोऽतिशायिनः ।
सोऽपि मित्रम वस्तु यक्षिणी वीरमती भुवि ॥
तेनापि कारितं श्रेष्ठ जिनानां धातुवरो भुवे ।
अतिप्राज्ञो हि सट्रो यक्षिण्यास्तु प्रभावत' ॥
तेन वासनकर्मेण पूर्ववासनचोदितः ।
अनुपूर्वेण मेधावी बोधि प्राप्स्यति दुर्लभाम् ॥
स्त्रीकृतेन कोपेण मृत्यु प्राप्स्यन्ति मानवा ।
वररुचिर्नाम विख्यात अतिरागी अभूत् तदा ॥
न दोऽपि नृपति श्रीमा पूर्वकर्मापराधत ।
विरागयामास स स्त्रीणां नगरे पाटलाह्वये ॥
विरक्तश्च ततस्तिस्तु गलगण्डो महाव्रत' ।
पूर्वकर्मापराधेन महारोगी भविष्यति ॥
महाकष्टेण दुःखार्त' अधेराजे भविष्यति ।
आयुस्तस्य च वै राज्ञ षट्षष्टिवर्षा तथा ॥
नियत श्रावके बोधौ तस्य राज्ञो भविष्यति ।
तस्याप्य यतम सख्य' पाणिनि नाम माणव' ॥
नियत श्रावकत्वेन व्याकृतो मे भविष्यति ।
सोऽपि सिद्धमन्त्रस्तु लोकेशस्य महात्मन ॥
साधयेत प्रज्ञाकामस्तु नाम ह्यन्तज्ञ द्विजः ।
तस्य राज्ञोऽपर ख्यात चन्द्रगुप्तो भविष्यति ॥

जप द्रयक्षसिद्धस्तु कारयेद राज्यमकण्टकम् ।
महायोगी सत्वरा भत्र नर्मात्मा ग गतीगति' ॥
अकल्याणमित्रमागम्य कृत आ।ण।। र नद्र ।
तेन कर्मविपाकेन । ।पपफाने: ग मूं। ह। ॥

अर्धरात्रे रुदित्वासो पुत्र स्थापयेद् भुवि ।
विन्दुवारसमाख्यात वाल दुष्टमन्त्रिणम् ॥

ततोऽसौ चन्द्रगुप्तस्य च्युत कालगतो भुवि ।
प्रेतलाक तदा लेभे गतिं मानुपवर्जिताम् ॥

मन्त्राभ्यासात् तदा युक्तो गतिं त्यक्त्वा दिवि गतम् ।
मन्त्रहेतुसमुत्पादात् कुशलालम्बनचेतनाम् ॥

प्रत्येकं बोधिमायाति सोऽनुपूर्वेण नराधिप' ।
राज्ञाथ बिम्बसारेण बालेनाव्यक्तचेतसा ॥

पुरा कारित चैत्य सिंहदत्तेन भवान्तरे ।
तस्य कर्मप्रभावेन दिव यातो ह्यनिन्दित' ॥

रश्च जन्मसहस्राणि अमरेभ्यो भुक्तवान् सुखम् ।
स्वर्गलोकाच्च्यवित्वा तु मनुष्ये ह्रोपपद्यते ॥

जातो राजकुले च द्रगुप्तस्य ीगा' ।
बाल एव तता राजा प्राप्त साप्ययमनल्पकम् ॥
मोढो धृष्टश्च मट्ट' मग भ्रापि विगान्विम् ।
स्वाधीन एव तद्र राज्य कुयाद्र नपाण सर्वति ॥
मन्त्रा केशिनी नाम सिद्धा तस्य नराधिपे ।
कुमार! त्वदीयम न तु सिाद्ध गच्छ्यु त तदा ॥
भविष्यति तदा काले म नासेद्धिस्त्वयोदिता ।
कुमाररूपी विश्वात्मा लाराना प्रभविष्णव' ॥
भविष्यति न सन्देहा मन्त्ररूपेण देहिनाम् ।
+ + + + + + + + + + + हितकाम्यया ॥

तस्मिं काले सत्त्वा सिद्धिर्भविष्यन्ति पठिता भुवि ।
मन्त्री तस्य राज्ञस्य बिन्दुसारस्य धीमतः ॥
चाणक्य इति विख्यातः क्रोधसिद्धस्तु मानवः ।
यमान्तको नाम वै क्रोधः सिद्धस्तस्य च दुर्मते. ॥
तेन क्रोधाभिभूतेन प्राणिनो जीविताद्धृता ।
कृत्वा तु पापकं तीव्रं त्रीणि राज्यानि वै तदा ॥
दीर्घकालाभिजीवी सौ भविता द्विजकुत्सितः ।
तेन मन्त्रप्रभावेन सदेहमासुरीं भजेत् ॥
आसुरीं तनुमाविष्ट दीर्घकाल स जीवयेत् ।
ततोऽसौ भिन्नदेहस्तु नरकेभ्यो विगच्छतः ॥
ततोऽसौ नारकं दुःख अनुभूयेह दुर्गतिः ।
विविधा नारका दुःखा अनिष्टां कर्मजा तदा ॥
कल्पमेकं क्षपित्वासौ क्रोधमन्त्रप्रचोदितम् ।
च्युतोऽसौ नरकाद् दुःखात् तिर्यगेभ्योपपद्यते ॥
नागयोनिं समापन्न भीमरूपी भविष्यति ।
नागराजो महाक्रोधी महाभोगो विषदर्पितः ॥
दारुण कर्मचारी च ।
च्युतोऽसौ दुष्टकर्मा तु यमलोकमगच्छत ॥
सुनिदा यमराजाग्रौ प्रेतराजो महर्द्धिकः ।
एवं तु दुःखसहस्राणि अनुभूय पुनः पुनः ॥
सोऽनुपूर्वेण दुर्मेधा मुक्तिमायात मानवः ।
मानुष्य जन्ममायातः भीमरूपी भविष्यति ॥
दरिद्र क्रोधनश्चैव अल्पशाख्यो भविष्यति ।
प्रत्येकबुद्धा ये लोके निराशाः खड्गचारिणः ॥
हीनदीनानुकम्प्यास्तु विचरन्ति महीतले ।
सत्त्वानां हितकाम्यर्थं प्रविष्टा पिण्डचारिकाम् ॥

ते तं दुर्मतिं दृष्ट्वा वै परचित्तनिराकृतम् ।
ते तत्र मनुबद्धास्तु कारुण्यात्तात्पर्यहेतव ॥
तेन कुल्माषखण्डास्तु गृहीता भक्ष्यहेतुना ।
क्रोधमन्त्राभिभूतेन क्षुधार्तात्मना नरा ॥
तेषां निर्यातयेद् भिक्ष तत्रैकस्य महात्मन ।
इद भो प्रव्रजिता ! सर्वे भक्षय ग प ग्रासुखम् ॥
तस्यानुकम्पा बुद्धेभ्य ऋद्धिं दर्शितवां तदा ।
ततोऽसौ विस्मयाविष्ट प्रभावोद्गतमानस ॥
प्रपतेत् सर्वतो मूर्ध्ना बुद्धेभ्य' खड्गकल्पिषु ।
आकाशेन गताः सर्वे वीतदोषा यथेप्सित ॥
तेनापि कुशलार्थेन प्रत्येका बोधिचिन्तिताम् ।
यादृशा हि महात्मान' शान्तवेषा महर्द्धिका ॥
तादृशोऽह भवेल्लोके मा दु खी मा च दुर्गति' ।
क्षीणकर्माविशेषस्तु च्युत स्वर्गोपग, सदा ॥
सोऽनुपूर्वेण धर्मात्मा प्रत्येक बोधि लप्स्यते ।
तस्मान्न कुर्यान्मन्त्रेभ्य' साधनमाभिचारुकम् ॥
बुद्धैर्बोधिसत्त्वैश्च प्रतिषिद्धमाभिचारुकम् ।
अनिकारुणिका बुद्धा बोधिसत्त्वास्तु महर्द्धिका' ॥
प्रभावार्थं तु म त्राणा दर्शितं सर्वकार्मिण' ।
चिन्तामणयो म त्रा भाषितास्तु तथागतै ॥
बालरूपा मूढचित्तास्तु क्रोधलोभाभिभूतगाः ।
परस्पर प्रयोज्यन्ते ये मन्त्रा आभिचारुक ॥
प्रतिषिद्ध तथा बुद्धैर्बोधिसत्त्वैस्तु धीमतै ।
सर्वप्रकार तु म त्राणां सत्त्वेभ्यो भोगवर्धनम् ॥
यत्त्विष्टमथ राज्य वै मदारक्षा धन्यहेतव ।
आकर्षण तु सत्त्वानां विविधा योनिमाश्रिताम् ॥

साधनीयास्तु म त्रा वै न जीनमुराराधत ।
तस्मि काले भविष्यन्ति भिक्षवो मे बहुश्रुता ॥
मातृचीनाख्यनामास्तु स्तात्र कृत्वा ममैव तु ।
यथा भूतगुणोद्देशे यथा भ्यागमभाषणा ॥
प्रसाद्य सर्वतश्चित्त बुद्धाना शासने रतः ।
म त्रसिद्धस्तु दुर्लक्ष्य मञ्जुघोषस्तवेव तु ॥
गुणवां शीलसम्पन्न धर्मवादी बहुश्रुत' ।
पुरा तिर्यग्गतेनैव इमां स्तोत्रमभाषत ॥
नृपाख्ये नगरे रम्ये खण्डाख्ये च वने वतु ।
सार्ध शिष्यगणेनैव विहरामि यथासुखम् ॥
तत्रस्थो वायस आसी मां चित्त सम्प्रसादयेत् ।
प्रसाद्य च मयि चित्त भिन्नदेहा दिव गत' ॥
देवेभ्यश्च च्यवित्वा तु मनुष्येभ्योपपत्स्यते ।
मनुष्येभ्योपपन्नस्तु प्रव्रजेच्छासने मम ॥
प्रव्रजित्वा महात्मासो यथाभूत हि मां तदा ।
स्तविष्यति तदा काले मातृचीनाख्य सव्रती ॥
स्तोत्रोपहार यथार्थ च नानादृष्टान्तहेतुभि' ।
प्रवर्तां सर्वभूतानां हितार्थैव सुभाषितम् ॥
अनुग्रहार्थ तु सत्त्वाना स्तोत्रचोदनतत्परः ।
भविष्यन्ति तदा काले युगा ते लोकनिन्दिते ॥
तेन कर्मविपाकेन भिन्नदेहो दिवि गत' ।
सोऽनुपूर्वेण मेधावी अनुभूय त्रिविधा सुखाम् ॥
बोधिं प्राप्स्यति सत्त्वश्रित्त्वमाधिमचिन्तियाम् ।
चतुर्थे वर्षशते प्राप्ते निर्वृते मयि तथागते ॥
नागाह्वयो नाम सो भिक्षु शासनेऽस्मिं हिते रतः ।
मुदिता भूमिलब्धस्तु जीवेद्व वर्षशतानि षट् ॥

मायूरी नामतो विद्या सिद्धा तस्य महात्मनः ।
नानाशास्त्रार्थधात्वर्थ नि स्वभावार्थतत्त्ववित् ॥
सुखावत्यां चापपन्न यन्ना गौ त्यक्तकलेवर' ।
साऽनुपूर्वेण बुद्ध त्व नियत सम्पपत्स्यत ॥
सङ्गनामा तदा भिक्षु' शास्त्रतत्त्वार्थकोविद' ।
सूत्रनीतार्थनेयानां विभज्य बहुधा पुन' ॥
लोकाभिधायी युक्तात्मा तुन्त्रशीलो भविष्यति ।
तस्य सिद्धा शालदूतीति कथ्यते ॥
तस्य मन्त्रप्रभावेन बुद्धिरुत्पन्न श्रेयसी ।
सङ्ग्रहे सूत्रतत्त्वार्थ शासनस्य चिरस्थिते ॥
जीवेद् वर्षशत सार्ध त्यक्तदेहो दिविं गत ।
अनुभूय चिर सौख्य दीर्घससारससरम् ॥
अनुपूर्वेण चात्मासौ बोधिप्राप्तो भविष्यति ।
एव बहुविधाकारो भिक्षवो मयि शासने ॥
प्रज्ञा धर्मशीलास्तु भविताभूत् तदा युग ।
अपश्चिमे तु तदा काले नन्दनामत ॥
सोऽपि मन्त्रार्थयुक्तात्मा तन्त्रज्ञोऽथ बहुश्रुत' ।
तस्य भद्रघट सिद्धः यक्षमन्त्रप्रचोदित ॥
महायानाग्रसूत्रे तु मया च कथिता पुरा ।
तस्मिं काले घटे तस्मिं उज्जहार महातपा ॥
तस्य दृष्टसत्त्वा तत्र पुस्तकेऽस्मिं मन्त्ररूपिणे ।
रक्षा न कारिता तत्र घटेऽस्मि यक्षसाधिते ॥
अनवमानात् स्मृतिभ्रष्टा घटो मूलकेन हृत ।
तोऽसौ सिद्धमन्त्रस्तु भिक्षुर्मन्त्रतपी अभूत् ॥
घट निरीक्षयामास नाभिपश्येत तत्र वै ।
ततोऽसौ क्रोधरक्ताङ्ग' निस्फूर्जन अभाषत ॥

आब्रह्मस्तम्बपर्यन्त शक्राद्यां समहेश्वराम् ।
मन्त्रेनाकृष्यमानेय नाह मन्त्री न मन्त्रराट् ॥
ये म ाा बुद्धपुत्रैस्तु मन्त्रा जिनवरैस्तथा ।
भापि ॥ निग्रहार्थाय दन्तान्तदमकापि वा ॥
त ा र्ये बुि ाास्ति यदि नाकृष्यामि चोरीणाम् ।
ततोत्थाय तता मन्त्री ि द्धकर्मदृढव्रत' ॥
यथा तु विहिते मन्त्रे प्रयोगाकृष्टहेतव. ।
प्रयोजयामास त दिक्षु क्षिप्राकर्षणतत्परः ॥
क्षणना स्मृतमात्रेण क्षिप्रस्मायतिह्यसो ।
हुङ्कारेकेण मात्रण ब्रह्माद्यामानयेद् भुवि ॥
आकृा सवदेवास्तु ब्रह्माद्या सशक्रका ।
हाहाकार प्रमुञ्चाना आर्त्ता भरवनादिन' ॥
किं करोम रिमानीता नाम य मन्त्रापराधिनः ।
शीघ्र च त्वरमाणस्तु भिक्षुर्धीमा विशारदः ॥
दिवौकसां मन्त्रयामास घट प्रत्यर्पयथ इतो इह ।
अन्यो य ये सुरा सर्वे स भिक्षु सम्प्रभापत ॥
क्षिप्र वदत भद्र वो ये नेनापहृतो घट' ।
निरीक्षयामास ते देवा न दास्यन्तेऽथ समन्तत ॥
ससन्नाहब्रति देवेश' केनायं घटकोऽपहृत ।
पश्यते चक्षिण श्रीमां बोधिसत्त्वो महाद्युति ॥
तस्यास्ति मुनो घोर' महारोपी सुदारुणः ।
निर्मितो विघ्नरूपेण विचेरु सर्वतो जगत ॥
तेनासौ घट नीत दवशः सम्प्रभापितम् ।
अस्ति वज्रकुले विघ्नः क्रीडते लीलया भुवि ॥
पूजितोऽहमिमेनेति तेनासो घटको हृत' ।
एवमुक्त्वा तु देवेश' पुनरेव दिवं गताः ॥

सर्वे विसर्जिता देवा' स्वमन्त्रेणैव ते तदा ।
क्षणेनैव न तत्रेर महर्नेमनगानपि ॥
आनयामास त विघ्नमवशात् सघटं तदा ।
ततस्तेन तु विघ्नेन प्रेताना घटमाददे ॥
ततो नीतेन तु विघ्नेन इमां वाचामभाषिता ।
प्रेतलोके घटो नीत न यय तत्र दोषिणः ॥
रुष्टो सोऽपि महामन्त्री त विघ्नमभ्यभाषत ।
गच्छ गच्छ महाविघ्न! मा भूयो एवमाचरेत् ॥
ततस्तेन तु ते प्रेता आनीतास्तत्क्षणादपि ।
क्षुभिताक्रान्तमनस' दीनाः मूर्च्छितमुखा हि ते ॥
आर्तस्वर च क्र देयुर्महाघोरतमा ॥ ने ।
चुक्रुशु करुणां वाणीं परित्रायस्व महात्मन ॥
घट वो इह आनीता यथेष्ट कुरुते वयम् ।
महाकारुणिको मन्त्री नपथु सम्प्रजायताम् ॥
करुणार्द्रेण मनसा इमा वाचामभाषत ।
किं दुःख भवतां लोके सम्प्रभाषथ मा चिरम् ॥
ते ऊचुर्दीनमनसा तुमुलारमत् सम्प्रभावते ।
त्रिपिताः प्रेतलोकेऽस्मि चिर काल महात्मनः ॥
• महाकारुणिको भिक्षुस्तेषामेव प्रददौ घटम् ।
ततस्ते तुष्टमनसाः गत्वरामालय गता ॥
तेषां चिन्तितमात्रेण अन्नपान भवेद् घटे ।
भविता चन्दनमालेऽस्मि भिक्षुर्नदको शुचि ॥
तस्मिं कालाधमे प्राप्ते जीवेद्ध वर्षशतत्रयम् ।
महात्मा नाभिनिष्क्रम्य सिद्ध प्राप्स्यति दुर्लभाम् ॥
भविष्यन्ति न रा देह तस्मि काले युगाधमे ।
राजा गोमिमुख्यस्तु शासना तर्पको मम ॥

प्राचिं दिशिमुपादाय कश्मीरे द्वारमेव तु ।
नाशयिष्यति तदा भूपः विहारा धातुवरांस्तथा ॥
भिक्षवः शीलसम्पन्नां घातयिष्यति दुर्मतिः ।
उत्तरां दिशमाभृत्य मृत्युस्तस्य भविष्यति ॥
अमानुषेणैव क्रुद्धेन सराष्ट्र पशुबान्धवः ।
आ।त। तोऽद्रिराण्डेन पाताल यास्यति दुर्मति ॥
अधो अथ गतिस्तस्य नरकान्नरकतर भृशम् ।
दु'खा दुःखतर तीव्र सम्मपत्स्यति दारुणम् ॥
अवीचिर्नाम विख्यात नरक पापकर्मिणा ।
मुच्यतेऽसौ महाकल्पं गोमिषण्डो दुरात्मनः ॥
अकल्याणमित्रमागम्य कृतं पापसुदारुणम् ।
तस्मात् सर्वप्रयत्नेन शासनेऽस्मिं तथागते ॥
प्रसाद्यमखिलं चित्त सम्प्रभोक्ष्यथ सम्पदाम् ।
बुद्धत्वनियत मार्गम् अष्टाङ्गपथयायिनम् ॥
गमिष्यथ तदा राज्ञे अशोक निर्जरसं पुरम् ।
तस्याप तरे महीपालः बुद्धपक्ष इति श्रुतः ॥
महायक्षो महात्यागी बुद्धानां शासने रतः ।
भविष्या। र्न म द्र नाम्म त। े युगाधमे ॥
अतिप्रीतो हि नृपतिः शास्तु' शासनतत्परः ।
विहारारामचैत्याश्च शास्तुर्बिम्बानुत्तमाम् ॥
वाप्य कूपाश्च+++++++++ अनेकधाः ।
कारयित्वा महाराजा दिव गच्छेत्तु गतायुषः ॥
तस्य सिद्धो महावीर्यः अनुजस्तुर्महीतले ।
पृथिवा पालना प्रार्थे बाभिसत्त्वस्य महात्मने ॥
तस्य म त्प्रभावेन जीवेद वर्षशतत्रयम् ।
तेन कर्मावशेषेण क्षिप्र बोधिमवाप्नुयात् ॥

तस्यापि च सुतो राजा महासेनो महाबलः ।
गम्भीरयक्षो विख्यात पृथिवीमाक्रम्यादिताम् ॥
सोऽपि राजाथ युक्ता मा शासन राज भविष्यति ।
विहारावसथचैत्यांश्च वापीकूपांश्च नैकधा ॥
कारयिष्यति न सन्देहो भूपतिः स महाद्युति ।
तेनापि साधितं मन्त्र मञ्जुघोषस्य धीमत' ॥
षडक्षरं नाम यद् वाग्य महार्थं भागवर्भगम् ।
तस्य मन्त्रप्रभावेन महाभोगी भवे त्वगो ॥
अनुपूर्वेण मेधावी क्षिप्र बोधिपरायण ।
विविधाकारकारांस्तु शासनेऽस्मिन तथागते ॥
भविष्यति तदा काले उत्तरां दिशिमाश्रुतः ।
नेपालमण्डले ख्याते हिमाद्रेः कुक्षिमाश्रिते ॥
राजा मानवेन्द्रस्तु लिच्छवीनां कुलोद्भव' ।
सोऽपि मन्त्रार्थसिद्धस्तु महाभोगी भविष्यति ॥
विद्या भोगवती नाम तस्य सिद्धा नराधिपे ।
अशीतिवर्षाणि कृत्वासौ राज्यं तस्करवर्जितम् ॥
ततः प्राणात्यये नृपतौ स्वर्गलोके जजगमतु ।
तत्र मन्त्राशु सिध्यन्ति शीतला शान्तिकपौष्टिका ॥
तारा च लोकविख्याता देवी पण्डरवासिनी ।
महाश्वेता परहितोद्युक्ता अखिन्नमनसां सदा ॥
इत्येवमादयो प्रोक्ता बहुधा नृपतयोस्तदा ।
अनेकधा बहुधाश्चैव नानारूपाविवर्णिताः ॥
मास्तुपूजकास्तेऽपि म्लेच्छराजा न है ।
वविपः सुदृपश्चैव भावसु शुभस्तुस्तथा ॥
भाक्रमः पदक्रमश्चैव कमलश्चैव कीर्त्यते ।
भागुप्तः वत्सकश्चैव + + + + + पश्चिमः ॥

महासै यो महावीर्यः तस्मिं स्थाने भविष्यति ।
कश्मीरद्वारपर्यन्तं षन्कलोद्य सकाविलम् ॥
योजनशतसप्त तु राजा भुङ्क्तेऽथ भूतलम् ।
सप्तसप्ततिसहस्राणि लक्षो द्वौ तस्य भूपते ॥
भविष्यति न सन्देहो तस्मिं काले युगाधमे ।
सोऽपि सिद्धमन्त्रस्तु जीवेद् वर्षशतत्रयम् ॥
साधिता केशिनी विद्या नराध्यक्षेण धीमता ।
आत्मना श्रेयसार्थं तु विहारां कारयेद् बहून् ॥
षडाशीतिसहस्राणि कुर्यात् स्तूपवरांस्तथा ।
महायानाग्रधर्मं तु बुद्धानां जननीस्तथा ॥
प्रज्ञापारमिता लोके तस्मिं देशे प्रतिष्ठिता ।
स राजा भिन्नदेहस्तु स्वर्गलोक गमिष्यति ॥
सोऽनुपूर्वेण क्षितीपेश बोधिं प्राप्स्यति मुत्तमाम् ।
तस्यान्तरे क्षितिपते' महातुरुष्को नाम नामत. ॥
धीमतः बहुमतः ख्यातो गुरुपूजकतत्पर' ।
सदा सोऽपि साधे स मन्त्र वै तारादेवीं महर्द्धिकाम् ॥
सोऽपि प्रसिद्धमन्त्रस्तु राज्यहेतो थ भूतले ।
महायक्षा महासैन्यः महेशाक्षोऽथ भूपतिः ॥
सम्मतो बन्धुवर्गाणां राजा सोऽपि भविष्यति ।
अष्टौ सहस्रविहाराणां तस्मिं काले भविष्यति ॥
तस्य मन्त्रप्रभावेन जीवेद् वर्षशतद्वयम् ।
यदासौ भिन्नदेहस्तु तुषितेभ्योपपद्यते ॥
सोन्मत्तो देवपुत्राणां बोधिसत्त्वो महर्द्धिकः ।
सोऽनुपूर्वेण धर्मात्मा बोध्यङ्ग समभिपूरत ॥
प्राप्नुयामतुलां बोधिं सोऽनुपूर्वेण यत्नत' ।
तत्र देशे सदा काल तिष्ठते प्रवर बहु ॥

जिनैस्तु कथित पूर्वं अधुना चर्यया भुवि ।
वीतरागै समाक्रान्तं नागैश्चापि महर्द्धिकैः ॥
लोकपालास्तथा यक्षाः शास्तु शासनरक्षकाः ।
भविष्यति तदा काले सद्धर्मो रक्षका भुवि ॥
एवं बहुविधाः प्रोक्ताः भूपाला लोकविश्रुताः ।
कथिताः कथयिष्यन्ति तस्मिं काले सुदारुणे ॥
पश्चाद्देशपर्यन्तं उज्जयन्यामतः परे ।
समुद्रतीरपर्यन्त लाडानां जनपदे तथा ॥
शीलाह्वो नाम नृपति' बुद्धानां शासने रत' ।
पुरीं वलभ्य सम्प्राप्तो धर्मराजा भविष्यति ॥
विहारां धातुवरां चित्रां श्रेयसां प्राणिनांस्तथा ।
कारयिष्यति शुक्तात्मा भूपतिर्धर्मवत्सलः ॥
पूजां च विविधाकारां जिनबिम्बां मनोरमाम् ।
पूजयेद्धातुवरां अग्र्यां लोकनाथेभ्यो यशस्विषु ॥
नासौ मन्त्रसिद्धस्तु केवलं कर्मजोत्तमः ।
तत्र देशे समाख्यातो भिक्षुः पिण्डचारिकः ॥
शीलवां बुद्धिसम्पन्नो बुद्धानां शासने रतः ।
कालचारी महात्मासौ प्रविष्टो पिण्डचारिकम् ॥
पश्यते राजकुल श्रेष्ठ विस्तीर्णं च जनावृतम् ।
प्रविष्टो तत्र भिक्षार्थी क्षुधया च समन्वितः ॥
तृषितो क्लान्तमनसो न लेभे पिण्डकं तदा ।
गृहीत्वासौ पुरुषैः क्षिप्र निर्ययुः तद्गृहात् परम् ॥
ततो सौद्विग्नमनसो रक्षितो राजभटैस्तदा ।
निर्ययुर्नगरात् तस्मात् स्वाश्रय तत्क्षणाद्‌ गतः ॥
क्षुधितो तृषितश्चैव दुःखी च दुर्मतिं गतः ।
ततोऽसौ भक्तच्छिन्नस्तु अर्धरात्रे समुपस्थिते ॥

प्राणत्यागं तदा चक्रुः यती सौ लघुचेतस' ।
प्रणिधिं च तदा चक्रे लाडानामधिपतिर्भवेत् ॥
ततोऽसौ कालगतो भिक्षुर्धराख्ये नृपतौ कुले ।
उत्पद्येत महात्मासौ शास्तुः शासनपूजकः ॥
दशवर्षाणि विंश च राज्य कृत्वा मकण्टकम् ।
लुब्धः स्वजनप्रयोगेण अजीर्णयतिमूर्छित. ॥
भिन्नदेहो ततो राजा काल कृत्वा दिविं गतः ।
देवा तुषितवरा नाम मैत्रेयो यत्र तिष्ठति ॥
धर्मश्रावी महात्मासौ तत्रासौ उपपत्स्यते ।
धर्मं शृण्वन्ति सत्कृत्य मैत्रेयस्य महाद्युतेः ॥
सोऽनुपूर्वेण बोधिं च प्राप्स्यति दुर्लभाम् ।
शीलाख्ये नृपतौ वृत्ते चपलस्तत्र भविष्यति ॥
वर्षार्धपक्षमेक तु पञ्च मासां तथैव तु ।
राज्य कृत्वा विभिन्नोऽसौ शस्त्रिभिः शस्त्रजीविभिः ॥
स्त्रीकृतेनैव तु दोषेण शस्त्रभिन्नो अधो गत' ।
तस्याप्यनुजो ध्रुवाख्यस्तु ध्रुवः स्थावरतां गतः ॥
सेवक कृपणो मूर्खः लाडानामधिपतिर्भवेत् ।
शेषा नराधिपाः सर्वे मूर्धान्तास्तु सेवकाः ॥
तेषां च पूर्वजा वंशाः शीलाह्वोपरते सदा ।
भविता भूपतयः सर्वे अम्भोजे तीरपर्पगा' ॥
नृपः इन्द्रो सुचन्द्रश्च धनुः केतुस्तथैव च ।
पुष्पनामो ततः प्रोक्ता वारवत्यां पुरोद्भवः ॥
वलभ्यां पुरिमागम्य आश्रमस्ग'
प्रभनामा सहस्राणि विष्णुनामा
अनन्ता नृपतयो प्रोक्ता यादवानां कुलोद्भवाः ।
तेषामपश्चिमो राजा विष्णुनामा भविष्यति ॥

ऋषिशापाभिभूतस्तु सपौरजनबान्धवः ।
अस्त गते नृपो धीमां उदके प्लाविता पुरी ॥
द्वारवत्या तदा तस्य महोदधिसमाश्रिता ।
उत्तरां दिशि सर्वत्र नानारम्भनितम्बयोः ॥
अनन्ता नृपतयः प्रोक्ता नानाजातिसमाश्रृताः ।
शकवंश तदा त्रिंशत् मनुजेशा निबोधता ॥
दशाष्ट भूपतयः ख्याता सार्धभूतिकमध्यमा ।
अन्ते नागसेना तु विलुप्ता ते परे तदा ॥
ततो विष्णुहरश्चैव कुन्तनामाजितः परः ।
ईशानसर्वपङ्क्तिश्च ग्रहसुग्र तथापरः ॥
ततस्ते विलुप्तराजानः भ्रष्टमर्याद सर्वदा ।
विष्णुप्रभवौ तत्र महाभोगो धनिनो तदा ॥
मध्यमात् तौ भकाराद्यौ मन्त्रिमुख्यौ उभौ तदा ।
धनिनौ श्रीमतौ ख्यातौ शासनेऽस्मिं हिते रतौ ॥
जप्तमन्त्रौ तथा मन्त्रे कुमारस्त्वयि मन्त्रराट् ।
ततः परेण भूपालो जाताना मनुजेश्वरौ ॥
सप्तषष्टशता त्रीणि श्रीकण्ठावासिनस्तदा ।
आदित्यनामा वैश्यास्तु स्थानमीश्वरवासिनः ॥
भविष्यति न सन्देहो अन्ते सर्वत्र भूपतिः ।
हकाराख्यो नामतः प्रोक्तो सार्वभूमिनराधिपः ॥
तत्र देशे इमे मन्त्रा सिद्धिं गच्छेयु वै तदा ।
धर्मराजेन ये प्रोक्ता विद्या शान्तिकपौष्टिका ॥
विविधां भोगविषयां सम्पदां विविधांस्तथा ।
नाना च रूपधारिण्यो यक्षिण्यश्च महार्द्धिकाः ॥
भविष्यन्ति तत्र वै सिद्धा तस्मिं काले युगाधमे ।
दक्षिणां दिशिमाश्रित्य ससमुद्रां वसुन्धराम् ॥

राजा श्वेतसुचन्द्रश्च सातवाहन एव तु ।
महेन्द्र शङ्करश्चैव वल्लभोऽथ महीपति ॥
सुकेशिकेशिश्च विख्याता दक्षिणां दिशि ।
मङ्गलो वल्लभ. प्रोक्तो गोविन्द बृन्दखेतुः ॥
सुत्पात' पोतश्चैव महेन्द्र' च द्र एव तु ।
गोपेन्द्रो इन्द्रसेनश्च प्रद्युम्नो माधवस्तदा ॥
गणशङ्करश्चैव व्याघ्र सिंहो तथा बुध' ।
बुधः शुद्धस्तथा कुम्भ' निकुम्भश्चैव कीर्त्यते ॥
मथितः सुमितश्चैव ।
बलः पुलिनश्चैव सुकेशि' केशिनस्तथा ॥
अनन्ता बहवो ख्याता भूपाला दक्षिणां दिशि ।
अतीतानागता चापि वर्त्तमाना निबोधिता ॥
नानामृत्युभवे ह्येते नानाव्याधिसमाप्लुता ।
शस्त्रसम्पातदुर्भिक्षैः मृताः केचिद् दिविं गताः ॥
इत्येते नृपतय सर्वे कथिता विपुलस्तथा ।
मेह द्रान्त नृपोताख्यातः तथासहतिस्तथा ॥
भविष्यति तदा अभूत् ।
तस्मिं काले तदा देशे मन्त्राणां सिद्धिमिच्छताम् ॥
साधनीया इमा मन्त्रा क्राधाद्याः कुलिशोचिता' ।
आभिचारुककर्मेषु वश्यार्थे च तथा हितम् ॥
मञ्जुश्रियोऽथ माहात्मा वे कुमारो बालरूपिणः ।
सिध्यते च तदा देशे कलिप्राप्ते च तदा युगे ॥
पर्वताविन्ध्यमाश्रुत सागरे लवणोदके ।
कार्त्तिकेयेति समाख्यातः सत्त्वानां वरदायकः ॥
आज्ञां भो बोधिसत्त्वेन मञ्जुघोषेण धीमता ।
सत्त्वानां हितकाम्यर्थं निवसेद् दक्षिणां दिशि ॥

कार्तिकेयस्य ये मन्त्रा' कथिता मञ्जुभाणिना ।
तस्मि देशे तदा सिद्धिः भविष्यति न सशयः ॥
श्रीपर्वते तदा देशे विन्ध्यकाक्षनितम्बयोः ।
द्वीपेष्वेव च सर्वत्र कलिङ्गाद्रेषु कीर्त्यते ॥
त्रैगुण्या म्लेच्छदेशेषु समन्ततः ।
अम्भोधेः कुक्षितीरान्ता' नृपा ख्याता अनन्तका. ॥
कामरूपकलाख्या हि हिमाद्रे' कुक्षिमाश्रिताः ।
बहवो नृपतयो प्रोक्ता उद्रसन्धिषु सर्वदा ॥
नानाम्लेच्छगणाध्यक्षा शास्तुपूजकतत्पराः ।
इन्द्रो सुचन्द्रमहेन्द्रश्च भूपाल म्लेच्छवासिनः ॥
क्ष्मापालौ उभौ तत्र षोडशाब्दौ शासने रता ।
पूजकाः शास्तुबिम्बानां त्वत्प्रसादा ॥
भविष्यन्ति न सन्देहो प्रसन्ना शासने जिने ।
बहवो नृपवराः प्रोक्ताः पूर्वायां दिशिमाश्रिताः ॥
अतीतानागता ये तु वर्तमानाश्च सर्वदा ।
आद्य नृपवरं वक्ष्ये गौडानां वशजो भुवि ॥
जातोऽसौ नगरे रम्ये वर्धमाने यशस्विनः ।
लोकाख्यो नाम सौ राजा भवति गौडवर्धनः ॥
मामानुत्पन्नलोकेऽस्मि भवितासौ धर्मचिन्तकः ।
बहवः क्षितिपा' क्रान्ता विविधा जीवकर्मिण. ॥
मध्यकाले समास्त्वासा मध्यमा मध्यधर्मिणः ।
अनन्ते व युगे नृपेन्द्रा शृणु तत्त्वतः ॥
समुद्राख्यो नृपश्चैव विक्रमश्चैव कीर्त्तितः ।
महेन्द्रनृपवरो मुख्य सकाराद्यो मतः परम् ॥
देवराजाख्यनामासौ युगाधमे ।
सिद्धाख्ये नृपः श्रेष्ठः बुद्धिमान् धर्मवत्सलः ॥

तस्याप्यनुजो बलाध्यक्ष' शासने च हिते रतः ।
प्राचीं समुद्रपर्यन्तां चैत्यालङ्कृतशोभनाम् ॥
करिष्यति न सन्देहः कृत्स्नां वसुमतीं तदा ।
विहारारामवापीश्च उद्याना मण्डवकां सदा ॥
करिष्यति तदा श्रीमां सङ्क्रमां सेतुकारकः ।
शास्तुर्बिम्बान् तदा पूजेत् तत्प्रसन्नांश्च पूजयेत् ॥
कृत्वा राज्यं महीपालो निःसपत्नमकण्टकम् ।
जीवेद् वर्षा षट्त्रिंशत्तृशाह प्रव्रजेनृप' ॥
ततोत्मानं घातयेद् राजा ध्यायन्तः सम्प्रमूर्च्छितः ।
पुत्रशोकाभिसन्तप्त॰ यतिहत्तिसमाश्रुतः ॥
ततोऽसौ भिन्नदेहस्तु नरकेभ्योपपद्यत ।
त्रीणि एक च दिवसानि उषित्वा नरकं गतिम् ॥
देहमुत्सृज्य दिवि गच्छेत् सदा नृपः ।
देवानां सुकृतिनां लोकः शुद्धावास इति स्मृतः ॥
देवराजा भवेत् तत्र शुद्धात्मा बोधिनिम्नगः ।
शतशः सहस्रशश्चैव अनुभूय दिवि सुखम् ॥
पुनरेव मानुष्यं प्राप्य बुद्धो भूयो भवान्तरे ।
तेनैव कारित कर्म अन्यजन्मेषु देहिनाम् ॥
पुरीमुज्जयनीं ख्याता मालवाना जने तदा ।
तत्रायनीमुख्यः वणिजो यो महाधन ॥
बुद्धानामसम्भवे काले शून्ये लोके निरास्पदे ।
प्रत्येकबुद्धा लोकेऽस्मिं विहरान्ति महर्द्धिका ॥
सत्त्वानां हितकामाय विचरन्ति महीतले ।
पुरी उज्जयिनीं प्राप्य प्रविश पिण्डचारिका ॥
वर्गचारिणो महात्मानः र॰थायामवतरतत् ।
वाण्याजेयस्तुस्तदा सैव दृष्ट्वा तु सम्मुखां मुनिम् ॥

निमन्त्रयामास तत्रा भक्तेन स्वगृह चैव नयेत् तदा ।
नीत्वा मुनिवरां क्षिप्रमागनेन निमन्त्रयेत् ॥
सज्जीभवध्व भवत भक्तकालोऽयमुपस्थित ।
तेऽपि तूर्णा महात्मानो न वाचां भाषिरे तदा ॥
पात्र च नामयामास त्रापिजे यस्य सर्वदा ।
वणिजा इङ्गितज्ञाश्च बुद्धिमन्तो भवेत् तदा ॥
पात्र च पूरयामास विविधाकारभोजनैः ।
तदासौ स्वहस्तेनैव तेषां प्रायच्छ यत्नतः ॥
गृहीत्वा तु ततः सर्वे प्रजग्मुः सर्वतोनभम् ।
दीपमालेव दृश्यन्ते व्योममूर्त्तिसमाश्रिताः ॥
ततोऽसौ हृष्टरोमस्तु संवेगबहुलस्तदा ।
भूम्यां च पतितस्तत्र ऋद्ध्या वर्जितमानसः ॥
प्रणिधिं च तदा चक्रे प्रव्याहारवभ यथा ।
अनेन कुशलमूलेन यन्मया प्राप्तमद्यतः ॥
एषा मुनिवरा मग्र भवेत् बुद्धो ह्यनुत्तर ।
दशजन्मसहस्राणि चक्रवर्त्ता तदा भुवि ॥
ततोऽसौ च्युतदेहस्तु कोपिपष्टिदिवौकसाम् ।
अनुभूय चिर सौम्य त्यस्त्वा ज म दिवौकसाम् ॥
मानुषाणां तदा जन्म प्राप्नुयात् परवशा इह ।
तस्य राजकुले ज म भवतीह तु सर्वदा ॥
बालाख्यो नाम सो नृपतिर्भविता पूर्वदेशक ।
आजन्मसहस्राणि चिरमोऽथमनावृतम् ॥
प्राप्नुवन्ति या नृपति श्रीमां सर्वज्ञत्वं च पश्चिमम् ।
एव बहुविध मत्वा सम्पदो विपुलास्तथा ॥
को नु कुर्यात् तदा शास्तु पूजनाध्येषणास्तथा ।
काराश्च श्रेयसी युक्ता बोधिमार्गवियोजनीम् ॥

तस्यापरेण नृपति गौडानां प्रभविष्णव ।
व रव्यो नामत प्रोक्त सोऽपि रत्यन्तधर्मवाम् ॥
तस्यापरेण श्रीमां उकाराख्येति विश्रुत ।
तत परेण विश्लेष तेषामन्या यतेष्यते ॥
महाविश्लेषणा ह्येते गौडा रौद्रचेतस ।
ततो देव इति ख्यातो राजा मागध स्मृत ॥
सोऽप्यतहतविध्वस्तरिपुभि समता वृत ।
यस्यापरेण चन्द्राख्यः नृपतित्व कारयेत् तदा ॥
सोऽपि शस्त्रविभिन्नस्तु पूर्वचोदितकर्मणा ।
तस्यापि सुतो द्वादश गणना जीवेन्मासपरम्परम् ॥
सोऽपि विभिन्नशस्त्रेण बाल एव अभत् तदा ।
तेषां परस्परोपविघ्नचित्ताना रौद्राणामहिते रताम् ॥
भविष्यति तदा काले भकाराख्यो नृपपुङ्गव ।
अग्रणीर्गौडलोकानां महाव्याधिसमाकुल ॥
तेनैव व्याधिना आर्त्त' काल कृत्वा अधो गत ।
तस्यापरेण दकाराख्य' कतिपाया दिवसा दश ॥
भविता गौडदेशेऽस्मिं गङ्गातीरसमाश्रत ।
तस्यापरेण भकाराख्यस्त्रीणि दिवसानि कारयन् ॥
ततो गोपालको राजा भविता राजेन्द्रसत्तम ।
प्रियवादी च सो राजा घृणी चैव महाबल ॥
स्त्रीवश. कृपणो मूर्ख. जितशत्रुर्भवेद् युवाम् ।
कल्याणमित्रमागम्य महात्यागी भवे[ तदा ॥
विहारांश्चैत्यवरां रम्यामारामां विविधास्तदा ।
वाप्योऽथ जलसम्पन्ना सत्रागारा सुशोभनाम् ॥
सेवतो बहवस्तस्य यश कीर्त्यार्थमुद्यत ।
देवायतनरम्या वै गुणावसथकारिण. ॥

पापण्डीभिः समाक्रान्त नानातीर्थिकवासिभिः ।
आक्रान्तः सो दिशः सर्वा समुद्रातीरजगंगाः ॥
क्रिपी भोगी प्रमादी च स राजा धर्मवत्सल. ।
भविष्यति न सन्देह' स प्राचीं दिशि मूर्जित' ॥
सधातीसारसयुक्तवार्द्धिक्ये समुपस्थित' ।
गङ्गातीरमुपाश्रित्य राज्य कृत्वा तु वै तदा ॥
विंशत् वर्षाणि सप्तं च जन्मनाशीतिको मृतः ।
ततोऽसौ भिन्नदेहस्तु तिर्यगेभ्योऽपिपद्यते ॥
नागराजा ततः श्रीमान् धर्मवत्सलः ।
येनास्य कारितं चैत्य शास्तुबिम्बं मनोरमम् ।
विहारां कारितवांश्चात्र सङ्घस्यार्थे तदा भुवि ॥
तेन कर्मविपाकेन अन्तिमे च भवे श्रिते ॥
बुद्धत्व नियतं मार्गं प्राप्नुयादचल पदम् ।
ततः परेण गौडानां तीर्थिकाक्रान्तपुर भुवि ॥
ता पूर्वदेशेऽस्मिन् नगरे तीर्थिकसमाह्वये ।
भगवाख्य नृपे ख्यातः गोडानां प्रभविष्णव' ॥
अभिषिक्तो दक्षिणात्येन प्रतिना प्रभविष्णुना ।
राज्य कृत्वा तु वै तत्र पश्चिमां दिशमागत. ॥
प्रविश्य नगरीं रम्यां साकेता तु यथेप्सितः ।
अरिणा भूतस्तु पुनरेव निवर्तते ॥
प्राचीं समुद्रपर्यन्तां तस्करैश्च समावृत' ।
शस्त्रप्रहारविध्वस्तमृतोऽसौ प्रेततां गतः ॥
त्रीणि वर्षाणि कृत्वासो भूपालो राज्यमल्पकम् ।
ततो दस्युभिर्ग्रस्त' मृतः प्रेतमहार्द्धिकः ॥
त्रीणि वर्षाणि तत्रैव प्रेतेभ्यो राज्यमकारयेत् ।
ततोऽपि सो त्यक्तदेहस्तु प्रेतलोकां सुदारुणाम् ॥

तस्मान्मुक्तजन्मान स्वर्लोक च सदा व्रजेत् ।
तस्याधरेण नृपतिस्तु समुद्राख्यो नाम कीर्त्तित ॥
त्रीणि दिवसानि दुमभ राज्य प्राप्स्यति दुर्मतिः ।
तस्याप्यनुजो विख्यात, भस्मभाख्यो नाम नामत' ॥
प्रभु प्राणातिपातरागुक्त महासावशरारिण ।
निर्घृणी अप्रमत्तश्च स्वशरीरे तु यत्नत ॥
परलोकार्थिने नासौ बलिसत्त्वदिहैव तु ।
अकल्याणमित्रमागम्य पाप कर्म कृत बहु ॥
द्विजेराक्रान्ततद्राज्यं तार्किकैः कृपणैस्तथा ।
विविधाकारभोगांश्च मानुषा पितरास्तथा ॥
विविधां सम्पदां सोऽपि प्राप्तवान् नृपतिस्तथा ।
सोऽनुपूर्वेण गत्वासो पश्चिमां दिशि भूपति ॥
कश्मीरद्वारपर्यन्त उत्तरां दिशिमाश्रुतः ।
तत्रापि जितसङ्ग्रामी राज्य कृत्वा तु वै तदा ॥
द्वादशाब्दानि सर्वत्र मासां पञ्चदशस्तथा ।
पृथिव्यामार्तरोगोऽसौ मूर्छितश्च पुन, पुन' ॥
महादु खाभिभूतस्तु भिन्नदेह अधोगत ।
तेषां परस्परतां द्वेषे लुब्धानां राज्यहेतुनाम् ॥
महाशस्त्रोपसम्पात कृत्वा ते तु परस्परम् ।
अभिषिच्य तदा राज्य सकराख्य बालदारकम् ॥
चिह्नमात्र तु तं कृत्वा पुनरेव निवर्त्तते ।
यैर्द्विजातिमुख्यानां भिन्नास्तेऽपि परस्परम् ॥
मागधां जनपदां प्राप्य पुरे उदुम्बराह्वये ।
द्वै बालौ द्विजातिमुख्यश्च अभिषेच्य स्वय भुवि ॥
ततोऽनुपूर्वेण गत्वासौ प्राचीं दिशिमाश्रुत ।
गौडां जनपदां प्राप्य नि'सपत्ना वै तदा ॥

घातितौ बालमुख्यौ तौ कलिङ्गेषु दुरात्मना ।
अकल्याणमित्रमागम्य कृत प्राणिवधो बहुम् ॥
पूर्वसम्मानिता ये तु नृपैर्विग्रहमानिभि. ।
घातयामास सर्वेषां गौडाना जनवासिनाम् ॥
सोमाख्याऽपि ततो राजा एकवीरो भविष्यति ।
गङ्गातीरपर्यन्त वाराणस्यामत परम् ॥
नाशयिष्यति दुर्मध शास्तुर्बिम्बां मनोरमाम् ।
जिनैस्तु कथित पूर्व धर्मसेतुमनल्पकम् ॥
दाहापयति दुर्मेधः तीर्थिकस्य वचे रतः ।
ततोऽसौ क्रुद्धलुब्धस्तु मिथ्यामानी ह्यसमतः ॥
विहारारामचैत्यांश्च निर्ग्रन्थां वसथां भुवि ।
भेत्स्यते च तदा सर्वा वृत्तिरोधमकारक ॥
भविष्यते च तदा काले मध्यदेशे नृपो वरः ।
रकाराद्योतयुक्तात्मा वैश्यवृत्तिमचञ्चलः ॥
शासनेऽस्मिं तथा शक्त सोमाख्यससमो नृप ।
सोऽपि याति तदान्तेन नग्नजातिनृपेण तु ॥
तस्याप्यनुजो हकाराख्य एकवीरो भविष्यति ।
महासैन्यसमायुक्त' शूर' क्रान्तविक्रमः ॥
निर्धारये हकाराख्यो नृपतिं सोमविश्रुतम् ।
वैश्यवृत्तिस्ततो राजा महासैन्यो महाबल' ॥
पूर्वदेश तदा जग्मु पुण्ड्राख्य पुरमुत्तमम् ।
क्षत्रधर्म समाश्रित्य मानरोपमशीलिन' ॥
घृणी धर्मार्थिको विद्वां कुर्यात् प्राणिवधं बहून् ।
सत्त्वानुपीडनपरो निग्रहायैव सो रत' ॥
पराजयामास सोमाख्य दुष्टकर्मानुचारिणम् ।
ततो निषिद्ध' सोमाख्यो स्वदेशेनावतिष्ठत' ॥

निवर्तयामास हकाराख्य म्लेच्छराज्ये मपूजितः ।
तुष्टकर्मा हकाराख्यो नृपः श्रेयसा चार्थधर्मिणः ॥

स्वदेशेनैव मयात' यथेष्टगतिनापि वा ।
तैरेव,कारित कर्म राज्यहर्षासमन्वितैः ॥

अधुना प्राप्तवां भोगां राज्यवृत्तिमुपाश्रृताम् ।
पूर्वं मत्येकबुद्धाय भक्ताच्छादनदत्तवाम् ॥

पादुकौ च तदा दत्तौ च्छत्रचामरभूषितम् ।
तस्य धर्मप्रभावेतौ महाराज्यतृदेवतौ ॥

भुक्त्वां भोगसम्पत्तीः देवमनुष्यसर्वदा ।
सोमाख्यो द्विजाढ्यो महाभोगी भवे ह्यसौ ॥

भोगां द्विजातिषु दत्त्वा वै राज्य कृत्वा वै तदा ।
सार्ध सप्तमं तथा ॥

वर्षा दश सप्त च मासमेक तथापरम् ।
दिवसां सप्तमष्टौ च मुखरोगसमाकुल' ॥

कृमिभिर्भक्षमाणस्तु काल कृत्वा अधोगति ।
अमानुषाक्रान्तविध्वस्त तत् पुर च अभूत् तदा ॥

मानुषेणैव दोषेण ज्वरार्तो व्याधिमूर्च्छितः ।
मृतो मन्त्रप्रयोगेण राजासौ कालगतस्तदा ॥

अवीचिर्नाम विख्यात नरक पापकारिणा ।
तत्रासौ उपपद्येत पापकर्मान्तचारिण' ॥

महाकल्प तदा नरके पच्यतेऽसौ दुष्टचेतसः ।
ततो टट हहव चैव सञ्जीव कालसूत्र तु ॥

असिपत्रवन घोर अनुभूय पुन पुन ।
तिर्यक्प्रेतलोक च पुनस्तथा ॥

एव जन्मसहस्राणि ससारे ससरतः पुनः ।
नासौ विन्दति सौख्यानि दु खभाजी भवेद् सदा ॥

तस्मात् सर्वप्रयत्नेन शासनेऽस्मिं तथागते ।
प्रसाद्यमखिल चित्त मन्त्रश्च निर्जरसम्पदम् ॥

बुद्धे नारापरागं च भव ।। भवति नर्मता ।
बुद्धे प्रासाद कर्तव्य धर्मराष्ट्रे च वै तथा ॥

भवति लोके अग्रस्तु चिर ते पूजरा नृपा ।
महेशाख्यमहेराज्य महाभोगा धनेश्वरा ॥

प्राप्नुयाद्व विविधां भोग्यां सम्पदां विपुलां नृपा ।
पूजयित्वा तु लोकाग्र्या लोक ईश्वरतां व्रजेत् ॥

शक्रत्वमथ याम्यत्व ब्रह्मत्व च पुन' पुन ।
प्रत्येकबुद्धा बुद्धत्व श्रावकत्व च वै भुवि ॥

प्राप्नुवन्ति त्रियानमगत्व द्वौ यातौ नि स्पृहतां गत ।
एव ह्यचिन्तिया बुद्धा बुद्धज्ञानोपचिन्तिय॰ ॥

अचिन्तिया हि फल तेषा विपाको भवत्यचिन्तिय' ।
अत परेण सोमाख्यो नृपतौ अप्यस्तमिते भुवि ॥

अ यो यक्षोभशीलस्तु गान्तज्ञो भविष्यति ।
सदा उद्यतशस्त्रास्तु अन्यो यापि नपेक्षिण ॥

दिवसा सप्तमव त मासमेक तथापरम् ।
गणज्य तदा तत्रे भविष्यति सदा भुवि ॥

गङ्गातीरे एतस्मिं विहाराभ्युषितमालये ।
तत परेण सुतस्तस्य सोमाख्यस्य च मानवे ॥

मासा षष्ठां दिवसा पञ्च साधाहे सुनिशात्यन्तु ।
वैश्यवर्णशिशुस्तत्रा ॥

नागराजसमाह्वयो गौडराजा भविष्यति ।
अन्ते तस्य नृपे तिष्ठं जयाद्यावर्णतद्विशौ ॥

वैश्यैः परिवृता वैश्य नागाह्वयो समन्तत ।
दुर्भिक्षोपद्रवास्तेऽपि परचक्रोपद्रुतास्तत्रा ॥

तेषां राज्यमसम्प्राप्त महाम्कम्माकुला ।
ते त भ्रष्टमर्यादा ॥
तषां पञ्चकमेक वै भुङ्क्ते तत्र समाकुलाम् ।
प्राणात्यय तदा चमु कृ त्रा प्राणतश्च बहून् ॥
पूर्वकर्मपराधेन ते जना नेशगच्छय ।
अन्यो यक्षोभशीलास्तु भविष्यति तदा भभून् ॥
प्रभविष्णुस्तदा तेषां क्षत्रवृत्तिसमाश्रित ।
भविष्यति न सन्देह गौडतन्त्रे नराधिप ॥
शस्त्रभिन्ना तथा केचिद् व्याधिभिश्च समाकुला ।
काल कृत्वा ततो याता नरकेभ्यो नराधिपा ॥
स्त्रीप्रधान शिशुमात्र पुरस्र नराधिप ।
पक्षमेक तथा वै शस्त्रभिन्नो हतस्तदा ॥
महादुर्भिक्षसम्पात परचक्रभयाकुलम् ।
प्रान्त्या ज ापदा व्यस्ता उत्रस्ता गतमानसा ॥
भविष्यति न सन्देह तस्मिन् देशे नराधिपा ।
मधुराया जातवशान्त्य' वणिक् सूर्यो नृपो तर ॥
सोऽपि पूजितमूर्त्तिस्तु मागधाना नृपा भवेत् ।
तस्याप्यनुजा भकाराख्य प्राच्य ।देजि समाश्रित' ॥
तस्यापि सुत' पकाराख्य प्राग्देशेष्वेव जायत ।
क्षत्रिय अग्रणी प्रोक्त तालरव्यानुसारिण ॥
दश वर्षाणि सप्त च व धनस्थमधिष्ठित ।
गोपाख्येन नृपतिना तदा मुक्तोऽसौ भगवाह्वये ॥
पश्चाद्देशसमायात अकाराख्या महानृप ।
प्राच्यं दिशिपर्यं त गङ्गातीरमतिष्ठत ॥
शूद्रवर्णो महाराजा महाभै यो महाबल ।
सा त तीर समाश्रन्य तिष्ठते च समन्तत ॥

पूर्वां गौडजने स्यात नीचामति विजन ।
समाक्रम्य राजानौ निधन च महावल ॥
ततो ३ भविष्यो तत तागा ा त नगारा ।
राजा मात्रप्रास्नत रा त न च मयाजन ॥
शूद्रवर्णे नृप. स्यात पुरेव निवर्तयम् ।
गङ्गातीरपर्यन्त नगरे न द्मगाह्वये ॥
मागधानां तदा राज्य स्थापयामास त शिशुम् ।
काशिन पद प्राप्य वाराणस्यमत पुरे ॥
प्रविशेच्छूद्रवर्णस्तु महीपालो महाबल ।
महारोगेण दु खार्त अभिषेचे स त तदा ॥
अभिषिच्य तदा राज्य प्रहारय बालदारकम् ।
महारोगाभिभूतस्तु भूमावावर्त वै तदा ॥
ततोऽर्थ निःश्वस्य यत्नेन भिन्नदेहोऽपि तीर्येत
तिर्यभ्ये वरा मासा अष्ट सप्त च वै तदा ॥
ततोऽसौ मुक्तजन्मान देवेभ्यो मुपपद्यते ।
विविधां देवसम्पत्ति विशजन्मानि व तदा ॥
ततोऽनुपूर्वेण धर्मात्मा पलोर बाधिमानुयात् ।
तेनैवापार्जित कर्म पूर्वजन्मेषु ज मनि ॥
प्रत्येकबुद्धा महात्मा वै वसै सामभिन्नाद्रित ।
उपानह नामयामास हन्यश्वरथहेतुना ॥
भोज। न तदा तस्य तस्मा त्व प्रयत्नधी ।
तेन कर्मविपाकेन नेवराना आगतु ॥
भविता देवलोकेऽस्मि विशत्कोऽस्यास्तु जन्मत ।
भुविमायात राजासौ भविता इह ज मनि ॥
परैरुपार्जित राज्य अनुभोक्ता भविष्यति ।
तस्यापि च सुतो राजा वाराणस्यां तु प्रतिष्ठित ॥

समन्ताद्भ्रतविभ्रस्तनि ष्ठराज्यो भविष्यति ।
द्विजकान्तमभूयिष्ठ तद्र् राज्य रिपुभिस्तदा ॥
प्रमादी कामचारी च स राजा गृहाभिद्रुत ।
अपश्चिमे तु काले वै पश्चाच्छत्रुहतो मृत ॥
मागधो नृपतिस्तेषा अन्यो यात्ररोधिन' ।
सोमाख्ये नृपते वृत्ते प्रागदेशे सैम तत ॥
गङ्गातीरपर्यं त वाराणस्यामत' परम् ।
भविष्यति तदा राजा पकाराख्य क्षत्रियस्तदा ॥
योऽसौ शूद्रवर्णेन अकाराख्येन पूजित' ।
नगरे नन्दसमाख्याते गङ्गातीरे तु समाश्रिते ॥
भविता क्षत्रियो राजा पूर्वकर्मैस्तु चोदित ।
तेनैव कारितं कर्म कृत चाप्यनुमोदितम् ॥
अतिक्रान्ते तदा काले कनकाह्वे शास्तुसम्भवे ।
वाराणस्यां महानगर्यां श्रेष्ठिरासी महाधन ॥
वणिज स सुतो बाल बालिशैस्तु समावृत ।
पांसुक्रीडनमर्थाय रथ्यायां प्रतिपद्यते ॥
स्वगृहे स्तूपवर दृष्ट्वा पितामात्राभिपूजितम् ।
तदेव मनसा वर्त स्तूपं कृत्वा तु पांसुना ॥
पूजां च कारयामास निर्माल्यकुसुमैस्तदा ।
गन्धवासाग न क्राप तद्र व ाद्रगनिम्भृति' ॥
क्रीडते बालस्तत्र शिशुभि परिवारित ।
जिने कनकशास्त्रग शासनाग्र तन्नैकत ॥
वीतदोषस्तु युक्तात्मा ातुकमुक्तभी ।
तदासौ वीतदोषस्त पिण्डपातमहिम्ना ॥
प्रविशते च तदा नगरीं वाराणस्यां शुभाभनाम् ।
वीतरागस्तदादेश यत्र ते बालिशा भुवि ॥

यत्र ते शैशव सर्वे समन्तात् परिवारिता ।
एहि भिक्षु इहागच्छ व द स व शास्तुचैत्यकम् ॥
अस्माभिः कारितं यत्नात् न त्ज पश्यसि शोभनम् ।
तत श्रेष्ठिसुतो बाल गृहीत्वा तृणवर्तितम् ॥
क्रीडया बन्धयामास वीतराग महार्द्धिकम् ।
समन्वाहरति तत्रासौ वीतरागो महर्द्धिकः ॥
पश्यते भुवि तत्रस्थ चैत्य कारितक हि तैः ।
वालिश मूर्ध्नि मास्रुज्य पत्र वोच महात्मधीः ॥
गुच्च त्ारक गच्छामा यत्र त्ज कारितं कृतिः ।
आगता च तत सर्वे यत्र धातुधर भुवि ॥
वादित्वा वीतरागा महात्मासौ शिशुभिर्भेतन्मासमेः ।
पुनरेव प्रस्थितो वीरः पिण्डकार्थं यथेप्सतः ॥
ततः श्रेष्ठिसुतो बालः गृहीत्वा वीतरागातिकम् ।
स्वगृह नीतवाँ ह्यासीदू भोजनार्थं च कारयेत् ॥
तत श्रेष्ठिमुख्याऽसौ दृष्ट्वा त बालिशम् ।
गृहीत्वा चीवरा ते तु वीतराग महर्द्धिकम् ॥
भीतो हृष्टरोमश्च गृह मे आगतोऽग्रजः ।
पादयोर्निपतित क्षिप्र मुञ्चापयति बालकम् ॥
गृहीत्वा तु सुत तस्य क्षमापयामास यत्नतः ।
पात्र त गृहीत्वा वै जिने अग्रजिने हिते ॥
पूरयामास त पात्र शालिव्यञ्जनभक्षकैः ।
सुत चामन्त्रयामास गृह्य मन्त्र प्रयच्छ भो ॥
ततो बालोऽथ मप्रज्ञो हस्तौ प्रक्षाल्य यत्नतः ।
गृहीत्वा पात्रपूर तु वीतरागाय नामयेत् ॥
नामयित्वा तु त क्षिप्र पादयोर्निपतितो भुवि ।
वीतरागो गृहीत्वा तु भुक्तवाम् ॥

वीतरागो तदा ह्यासीन् मुगतसंस्पर्श च लब्धवाम् ।
अपरस्तत्र बालो वै मात्सर्याविष्टमानस ॥
नेवल रोपनिचेन वा ।गगा परेऽहनि ।
प्रभूत खाद्यभोज्य च गृहीत्वा त प्रयच्छत ॥
यन्नास्ति कुशल किञ्चित् त्वयि दत्वा तु पिण्डकम् ।
अनेन श्रेष्ठिसुतस्याह भविता ह्याढ्यनामो भुवि ॥
ततस्ते तीर्थिका सर्वे द्विजातिवनिता तदा ।
सन्निपत्य तदा सत्र कलह नि दक कृत्वा ॥
बालिशस्त्व न जानासि मुण्डकाना कुतो गति' ।
आत्मना अस्थिता ह्येते परेषां कुत्र निर्वृति' ॥
तस्य बालकसत्वस्य द्वेषस्तु पञ्च नादशम् ।
नाशयामास एतेषा शास्तारेणोपवर्णिताम् ॥
धर्मसेतु सदा कीर्ति विहारा चैत्यवरा भुवि ।
श्रेष्ठिमुख्यसुतस्यैव आघात नैव कारयेत् ॥
एतेषा मुण्डकाना तु न्दत्वा दान कुता गति ।
कुगतिग्रस्तचित्ताना विघात कारयाम्यहम् ॥
यो सा वाद्यतमो बालो सोमाख्योऽपि नृपो ह्यसौ ।
अनुभूय चिर दुःख विपाक तस्य नैष्ठिकम् ॥
श्रेष्ठिमुख्यस्य पुत्रोऽसौ भिन्नदेहो दिवि गत' ।
अनुभूय चिर सौख्य दिवौकसानां तदा तदा ॥
च्युतोऽसौ देवलोकेऽस्मिम् ।
तदाजन्मे वन्ध सेत्स्यति सर्वदा ॥
तज्जन्मोपगतो मर्त्य' क्ष्मापति. भविता पुन ।
पुनश्च पतित. कर्मेण तत्र तत्र तदा तदा ॥
भविता ज मलोकेऽस्मि नृपतित्व कारयेद् भुवि ।
निर्माल्यदान यस्तूपे निवेद्य सो बालचापलात् ॥
तेनास्य भोगा क्लिष्टा वै क्लिष्टान्नानस्य तत् फलम् ।
दुःखेन भोगास्तु मासास्तु नमरा धीर सो नृप ॥

अस्थैर्या बालभावाच्च चलचित्ततया च सदा ।
कुर्यात महतीं पूजां शास्तुर्धातुवरे भुवि ॥
तेन कर्मविपाकेन राज्यैश्वर्यं यथा व्रजन् ।
भूत्वा भवति राजा अभूत्वा प्रतिगच्छति ॥
उदीच्यमतीत्य यो सो नृपतित्व कारयेद् भुवि ।
यो सो मुक्तश्चीवन्ध पुनर्मुक्तश्च बालक ॥
तेन कर्मविपाकेन बद्धा मुक्तश्च बालक' ।
पश्चाज मशतानैव बद्धो मुक्तश्च बालकः ॥
अपश्चिमे तु तदा ज म बन्ध छेत्स्यति सर्वग ।
पञ्चपञ्चाशवर्षस्तु राष्ट्रमश्नुते सोऽपि वा ॥
प्राचीं समुद्रपर्यन्ता राजासौ भविता भुवि ।
विन्ध्यकुक्षिनिविष्टाम्तु म्लेच्छास्तस्कराः ॥
सर्वे ते वशवर्तिं स्यात् पकाराख्ये नृपतौ भुवि ।
हिमाद्रिकुक्षिसन्निविष्टा तु उत्तरां दिशिमाश्रृताम् ॥
सर्वा जनपदां भुङ्क्ते राजासौ क्षत्रियस्तदा ।
पांसुना कृत्वा स्तूप अज्ञानाद् बालभावत' ॥
मागधेषु भवेद् राजा निःसपत्नमकण्टक. ।
सैमामटवीपर्यन्तां प्राचीसमुद्रमाश्रृतः ॥
लौहित्यापरतो धीमां उत्तरे हिमवांस्तथा ।
पश्चात् काशिपुरी रम्यां शृङ्गाख्ये पुर एव वा ॥
अत्रान्तरे महीपाल शास्तुशासनदायक' ।
पञ्चकेसरिनामानो जित्वा नृपतिनो सौ ॥
स्व राज्यमकारयत् ।
सर्वास्तां सिंहजास्तेऽपि ध्वस्तोन्मूलिता तदा ॥
हिमाद्रिकुक्षिप्राच्यां भो दशानूपः तीरमाश्रयेत् ।
सत्त्वा जनपदां भुङ्क्ते राजासौ क्षत्रियस्तदा ॥

अभिवर्धमानजन्मस्तु भोगास्तस्य च वर्द्धताम् ।
वार्धिक्ये च तदा मोक्ते भोगा निश्चलतां व्रजेत् ॥
अशीतिवर्षाणि जीवेयु सप्त सप्त तथा परान् ।
ततो जीर्णाभिभूतस्तु काल कृत्वा दिवं गत ॥
देवलोकेऽस्मिन चिरसौख्यमनुभूय तथा नृप ।
पुनश्च्यवति कर्मेण पूर्वसङ्क्लेशितेन तु ॥
तिर्यक्षु न्वसे मासं नागराजमहर्द्धिक ।
ततोऽसौ भिन्नदेहस्तु मानुष्येष्वुपपद्यते ॥
क्षत्रियो श्रीमतो जतो वणिग्जीवी विशारद ।
कल्याणमित्रमागम्य मोक्षगामी जिनशासन ॥
साधयेद् विद्याराज्ञीं तारादेविं महर्द्धिकाम् ।
सिद्धम तस्त जिनो नागी यथप्रगतिचारण ॥
विद्याधराणां तदा राजा भविता सुगतस्तदा ।
चक्रवर्तिस्तदा ख्यातो नाम्नासौ चित्रकेतव ॥
विद्याधराणां तदा कम ख्यातोऽसौ गतिमास्तथा ।
अशीतिवर्षकोट्यानि नवमप्तानि नेनदा ॥
दिव्यमानुष्यमान्येन भविता चक्रवर्तिन ।
परिवारस्तस्य कन्यानां पष्टिकाख्या मजायत ॥
ततोऽसौ भिन्नदेहस्तु तारादेव्यानुचादित ।
देवानामधिपतिं गच्छेत् तत्र धर्म च देशयत् ॥
सोऽनुपूर्वेण महीपाल क्षिप्र नाभपगागण ।
पकाराख्ये च नृपता उक्तो तदा काले युगाधमे ॥
भिन्न परस्पर तत्र महाविग्रहमाश्रिताः ।
भृत्यस्तस्य तु समाह राज्यैश्वर्यमकारयेत् ॥
ततोऽनुपूर्वेण समाहाद् वकाराख्यो नृपतिस्तथा ।
सोऽप्यहतविध्वस्त प्रक्रमेत दिशास्तत ॥

०

स एव शूद्रवर्णैस्तु व्यङ्ग कुत्सित एव तु ।
अधर्मभूयिष्ठ दुःशीला विग्रहे च मना रत' ॥
हिनानिगणमाध्ना सगना प्रव्रजितास्तथा ।
स हापयति सवो व निग्रहे च सदा रत ॥
तीव्रशासनकर्ता च तस्करो घातकस्तथा ।
निषिद्धा सर्वदुष्टानां पापण्व्रतमाश्रिताम् ॥
विनिर्मुक्ता च ज्ञाता च राज्य कृत्वा तु वै तदा ।
दशवर्षाणि सप्त च जीवेद् भूपतिस्तत्र वै ॥
कुष्ठदु खाभिभूतस्तु काल कृत्वाथ तिर्यत् ।
तिर्यग्भ्या नागराजस्तु महाभागी विशारद ॥
मूर्त्तिमा परमबीभत्सी स्फुटाटापी च वै तदा ।
अनुभूय चिर दु ख धर्मतस्तस्य नैष्ठिकम् ॥
एवम्प्रकारा' कथिता भूपाला लोकवर्द्धना ।
विदिता सर्वलोकेऽस्मि प्राच्या च स्थितदेहिनी ॥
पकाराख्यस्य नृपतो वशाद् वगजोऽपर' ।
क्षत्रिय शगिका त त्रिसमुद्राधिपतिस्तदा ॥
भविता प्राच्यदेशेऽस्मि महासे यो महाबल ।
शास्तुधातुधरैर्दिव्यर्विहारावसथमन्दिरैः ॥
उद्यानविविधैर्वाप्यै कूपमण्डपसङ्क्रमै ।
सत्रागारतथानित्य शोभापयति मेदिनीम् ॥
भक्तोऽसौ जिनवरा श्रेष्ठां उत्तम यानमाश्रितः ।
शास्यप्रव्रजितेनैव स तदा निष्ठितो ह्यसौ ॥
वर्जयेद् दक्षिणां सर्वां दक्षिणां चैव प्रभावयेत् ।
नाम्ना फकारविख्यात' स्मृतिमाश्चैव विशारदः ॥
राज्य कृत्वा तु भूपाल वर्षाण्येकविंशति ।
ततोऽसौ विषूचिकाभिश्च काल कृत्वा दिवि गतः ॥

सोऽनुपूर्वेण मेधावी द्विज नाभिपरायण ।
तस्यैव शेषत्रशास्तु परार्थीनायतनवृत्ता ॥
तत' परेण भूपाला गापान्ता दासजीविन ।
भविष्यति न स देहो छिजातिकृपणा जना ॥
अधर्मिष्ठ तदा काले निर्नष्टे शास्तुशासने ।
मन्त्रवादेन सत्त्वानां कुशलार्थी नियोजयेत् ॥
कुमारेण तु ये प्रोक्ता मन्त्रा भागवर्द्धना ।
साधनीया तदा काले राज्यैश्वर्येण हेतुना ॥
न साध्या उत्तमा सिद्धि तस्मि देशे तु वै तदा ।
धर्मचक्रे तथा रम्ये महाबोधिवने तथा ॥
यत्रासौ भगवां शान्ति निरोपधि च प्रविष्टवां ।
तत्र साध्यौ इमौ मन्त्रौ तारा भृकुटी च देवता ॥
समुद्रकूले तथा नित्य विस्फूर्ज्या सरितान्तरे ।
गङ्गातीरे तु सर्वत्र साधनीयाब्जसम्भवा ॥
योऽसौ बोधिसत्त्वस्तु चन्द्रनामाथ विश्रुत ।
स वै तारमिति प्रोक्ता विचाराज्ञी महार्द्धका ॥
स्त्रीरूपधारिणी भूत्वा देवी विनेरु' सर्वतो जगत' ।
सत्त्वानां हितकाम्यार्थं करुणार्द्रेण चेतसा ॥
सहां च लोकधातुस्थां तैम्भ्याख्यमिति वर्तते ।
महर्द्धिको बोधिसत्त्वस्तु दशभूम्यानन्तरप्रभु ॥
विनेय' सर्वसत्त्वानां तारा देवी तु कीर्त्यते ।
अयत्नसिद्धिमेवास्य रक्षावरणगुप्तये ॥
यत्नेन साध्यते देवी भोगैश्वर्यविवर्द्धना ।
बोधिसम्भारहेतु च ॥
अनुबद्धा तदा देवी करुणाविष्टा हि देहिनाम् ।
मन्त्ररूपेण सत्त्वानां बोधिसम्भारकारणा ॥

सर्वेषां तप्रिपुप्रथर्थं प्रजीयां ?ि ामाश्रितः ।
महद्या ? पुन ? ? श्रा मना ? ? ना पुन ॥
भ्रमते वसुमतीं कृत्स्नां चत्वारो द्विपर्ययाम् ।
पूर्वेण तत' सिद्धि' वाराणस्या परेण वा ॥
सक्षेत्रस्तस्य देव्या तु पूर्वदेश प्रकीर्तित' ।
सिद्धयते यक्षराट् तत्र जम्भलस्तु महाद्युति ॥
भोगकामे तदा सत्त्वे तस्मि काले युगाधमे ।
यक्षराट् ताराद्देव्या तु सा येतौ पुण्यिकामत' ॥
क्रोधनास्तु तथा मन्त्रा साध्यतां दक्षिणापथे ।
म्लेच्छतस्करद्वीपेषु अम्भाधेर्मे य एव वा ॥
सिध्यते च तदा तारा यक्षराट् चैव महाबल' ।
हरिकेले कर्मरङ्गे च कामरूप कलशाह्वये ॥
विविधा दूतिगणा॰ सर्वे यक्षिण्यश्च महर्द्धिकाः ।
मञ्जुघोषेण ये गीता मन्त्रा भोगहेतव' ॥
तत्र देशे यथा सिद्धि नान्यस्थानेषु तथा भवेत् ।
पूर्वे दिशि विदिक्षुश्च मन्त्रा विविधहेतव' ॥
कथितास्तु तदा काले साधनीयास्तु देहिभिः ।
मध्यदेशे तथा मन्त्री भूपाला विविधास्तथा ॥
विस्तरां सत्त्वदोषल्या अल्पबुद्धिं निबोधताम् ।
सक्षेपा नृपतिमुख्याना सङ्ख्या तेषा निगद्यते ॥
मकाराद्यो नकाराद्य' पकाराद्यश्च कीर्त्यते ।
दकाराद्यश्च इकाराद्य राकाराद्य भकाराद्य ॥
ग्रहाख्यश्च कीर्त्याख्य हकाराद्यश्च घुष्यते ।
शकाराद्यश्च भवेत् तदा ॥
जकाराद्यो बकाराद्यो लकाराद्य' सोमचिह्नितः ।
हकाराद्यश्चैव प्रख्यातः अकाराद्य पुनस्तथा ॥

सकारो लकाराग्श स्याग्यया लोकविद्विपः ।
सकाराद्यो मकाराग्य लोरागा मभविष्णव ॥
क्रमतः क्रमिन नि. ब्राह्मणाश्च वैश्यक्षत्र ।
अधर्मकर्मा भूयिष्ठा विदुग्ग स्त्रीषु लोलुपा' ॥
प्रभूतपरिवारा महीपालास्तस्मिन् काले युगाधमे ।
भविष्यन्ति न सन्देह म गदश नराधिपा ॥
विंशद् वर्षाणि शत चैव आयुषा युगाधमे ।
मनुष्याणां तदा काले दीर्घमायुरिति कीर्त्यते ॥
तेषां मध्योत्कृष्टाना अन्तरा उच्चनीचता ।
अल्पायुषो नृपतय गर्भे कथिता तु तदा युगे ॥
नदीगङ्गा तथा तीरे ।०माद्रे र नितम्बयो ।
कामरूपे तथा देशे भविष्यन्ति तथा नृपा ॥
आद्ये मध्ये तथा ते च भङ्गदेशेषु कथ्यते ।
आद्य हत्सुधानश्च कर्मराजा स कीर्त्तित' ॥
अन्नेऽङ्गपति तन्द्र च शुभनिर्भूतिरेव च ।
सदहो भवदश्च कामरूपे अजातय ॥
सुभूमृगकुमारान्ता वैशाल्या नकारयो' ।
तत्रासौ मुनिर्जात' कपिलाह्वे पुरोत्तमे ॥
शुद्धान्ता शाक्यजा प्रोक्ता नृपा आन्त्येक्षसम्भवा ।
शुद्धोदनान्तविख्याता शास्त्र शाक्यवर्द्धनाम् ॥
अल्पवीर्यास्तु मन्त्रा वै कथिता लोकपुङ्गवै ।
जिनप्रोक्तास्तु ये मन्त्रा सर्वे चेटगणास्तथा ॥
तथा विविधा दूतिगणा. सर्वे वज्राब्जकुलयोरपि ।
साध्यमानस्तु सिध्यन्ते मन्त्रतन्त्रार्थकोविदै. ॥
सर्वे ते लौकिका मन्त्रा. सिध्यन्तेऽत्र मध्यतः ।
विशेषतो मध्यदेशस्था. साधनीया जिनभाषिता ॥

विविधाकारचिह्नैस्तु विविधाकारकारणै॰ ।
त्रिविधप्रयोगप्रयुक्तास्तु त्रिविधा सिद्धिर्देहिनाम् ॥
मध्यदेशे तथा मन्त्रा साध्या वै भोगवर्धनाः ।
रक्षाहेतुपरित्राण वश्याकर्षणदेहिनाम् ॥
अतीतानागता प्रोक्ता मध्यदेश नराधिपा॰ ।
विविधाकाराचिह्नैस्तु विविधायुष्यगोत्रत ॥
सर्वे नरपतय प्रोक्ता उत्तमाधमम यमा॰ ।
त्रिप्रकारा तथा सिद्धिः त्रिधा कालेषु योजयेत् ॥
त्रिविधास्तु तथा मन्त्रा॰ कथिता मुनिवर्गैस्तथा ।
अनन्ता नृपतयः प्रोक्ता मध्यदेशेऽथ पश्चिमे ॥
उत्तरापरपूर्वैस्तु विदिक्षु सर्वतस्तथा ।
द्वीपेषु बहि॰ सर्वेषु चतुर्धा परिचिह्नितैः ॥
अनन्ता महीपतय॰ प्रोक्ता अनन्ता मन्त्रसाधनाः ।
अनन्ता दिशमाश्रित्य अनन्ता मन्त्रसिद्धय॰ ॥
निग्रहानुग्रहार्थाय शासनेऽन्तर्हिते मुनौ ।
मन्त्रा नृपतिषु काले वै मञ्जुघोषेण भाषिता ॥
क्रीडारक्षविकुर्वार्थे कालचर्या तु कथ्यते ।
मन्त्रमाहात्म्यसत्त्वानां गतियोनिनृपाह्वये ॥
देशकालसमाख्यात मन्त्रसाधनालिप्सुनाम् ।
प्रसङ्गा नृपतय॰ कथिता शासना तर्धिते पथे ॥
मन्त्राणां गुणमाहात्म्य फलमन्ते च बोधितः ।
कथिता द्वे परे याने नृपा पूर्वेनिबोधिता॰ ॥
प्रतिष्ठितास्तु न सन्देह॰ तस्मिं काल युगाधमे ।
कथिता नृपतय सर्वे ये तु दिशमाश्रुता॰ ॥
प्रव्रज्या ध्रुवमास्थाय शाक्यप्रवचने तदा ।
शासनार्थं करिष्यन्ति मन्त्रवादसदारता ॥

अस्तं गते मुनिवरे लोकैकाग्रसुचक्षुषे ।
तेषां कुमार! वक्ष्यामि शृणु"कैकमनास्तदा ॥

युगान्त चष्ट लोके शास्तुप्रवचने भुवि ।
भविष्यन्ति न सन्देहा यतयो राज्यवृत्तिन' ॥

तद्यथा भातृचीनाम्य कुसुमागाम्यश्च निश्रुतः ।
मकाराख्ये कुकाराख्य अत्यन्तो धर्मवत्सल ॥

नागाह्वश्च समाख्यातो रत्नमकभवनामन' ।
गकाराख्य कुमाराख्य' वकाराख्योऽर्थचिन्तकः ॥

अकाराख्यो महात्मासो शास्तुशासनदु र ।
गुणसम्पतो मतिमाम् लकाराख्य, प्रकीर्तित ॥

रकाराद्यो नकाराद्य' प्रकीर्तित, ।
बुद्धपक्षस्य नृपतौ शास्तुशासनदीपक ॥

अकाराख्यो यति ख्यातो द्विज प्रव्रजितस्तथा ।
साकेतपुरवास्तव्य आयुपाशीतिकस्तथा ॥

अकाराद्यस्तथा भिक्षु' रागी सौ दाक्षिणां दिशि ।
षष्टिवर्षायुषो धीमान् काव्याख्य' पुरवासिन ॥

थकाराद्यो यतिश्चैव विख्यातो दक्षिणां दिशि ।
परप्रवादिनिषेद्धा च मन्त्रसिद्धिस्तथा यति ॥

अपर' प्रव्रजित श्रेष्ठ' सैह्रिरापुरवास्तव्यो ।
अनार्यो आर्यसञ्ज्ञी च सिंहलद्वीपवासिन ॥

परप्रवादिनिषेद्धासो तीर्थ्यानामतदूपक ।
भविष्यन्ति युगान्ते वै तस्मि कालेऽथ भैरवे ॥

वकाराद्यो यति' प्रोक्ता लकाराद्यश्च कीर्तित ।
रकाराद्यो विकाराद्य, भिक्षु' प्रव्रजितस्तथा ॥

भविष्यति न स देह शास्तुशासनतत्पर ।
बालार्कौ नृपतो ख्याते मकाराद्यो यतिस्तथा ॥

विहारारामचैत्यांश्च वाप्यकूपाश्च सर्वदा।
शास्तुबिम्बा तथा चित्रा सेतु सङ्क्रमाश्च वै ॥
भविष्यन्ति न सन्देह शास्तुभिक्षा येग स्मृत ।
ततः परण मकाराद्य• ककाराद्यश्च कीर्तितः ॥
नकाराद्य सुदत्तश्च सुपेण सेनकीर्तितः।
दत्तको दिनकश्चैव परसिद्धा तद्रूपक ॥
वणिक्पूर्वो वैश्यपूर्वा च उभो दीनार्थचिन्तको।
चकाराद्यो यति ख्यात रकाराद्यमत परे ॥
भकाराद्यः प्रथितश्राद्ध शास्तुबिम्बार्थकारक•।
मकाराद्यो मातमान् जातो यति श्राद्धस्तथैव च ॥
विविधा यतय प्रोक्ता अनन्ताश्च भविता तदा।
सर्वे ते यतयः ख्याता शास्तुशासनदीपका ॥
निर्नष्टे च निरालोके शासनेऽस्मिं तदा भुवि।
करिष्यति न सन्देहः शास्तुबिम्बां मनोरमाम् ॥
सर्वे वै व्याकृता बोधौ अग्रप्राप्ताश्च मे सदा।
दक्षिणीयास्तथा लोके त्रिभवान्तकरास्तथा ॥
मन्त्रतन्त्राभियोगेन ख्याता कीर्तिकरा• स्मृता'।
अधुना तु प्रवक्ष्यामि द्विजानां धर्मशीलिनाम् ॥
मन्त्रतन्त्राभियोगेन राज्यवृत्तिमुपाश्रिता।
भवति सर्वलोकेऽस्मिं तस्मिं काले सुदारुणे ॥
वकाराख्यो द्विज' श्रेष्ठ आढ्यो वेदपारगः।
सेमां वसुमतीं कृत्स्नां विचेरुवादकारणात् ॥
त्रिसमुद्रमहापर्यं त परतीर्थानां विग्रहे रत'।
षडक्षर मन्त्रजापी तु अभिमुख्यो हि वाक्यत ॥
कुमारो गीतवाद्यामीत् सत्त्वानां हितकाम्यया।
एतस्यै कल्पविमरान्महित बुद्धितन्द्रितः ॥

जय' सुजयश्चैव कीर्त्तिमान् शुभमत पग ।
कुलीनो धार्मिकश्चैव उग्रत' साधु माधव ॥

मधु समधुश्चैव सिद्ध नमस्तथा ।
रघव' शूद्रवर्णस्तु शकजातास्तथापरे ॥

तेऽपि जापिन' सर्वे कुमारस्येह वाक्यत ।
ते चापि साधक सर्वे बुद्धिमन्तो बहुश्रुता ॥

आमुखा मन्त्रिभिस्ते च राज्यवृत्तिसमाश्रिता ।
तस्यापरेण विख्यात विकाराख्यो द्विजस्तथा ॥

परे पुष्पसमाख्याता भवितासौ क्रोधसिद्धक ।
निग्रह नृपतिषु चक्रे दरिद्रात् परिभवाच्च वै ॥

मञ्जुघोष इह प्रोक्त क्रोधराद् स यमान्तक ।
सत्त्वानामथ दुष्टानां दुर्दान्तदमकोऽथ वै ॥

अहितानिवारणार्थाय हितार्थायापबृहने ।
अनुग्रहार्थैव सत्त्वानां तनुप्राणापरोधिने ॥

सो हि माणवको मूढ दरिद्र क्रोधलोभित ।
आवर्त्तयामास त क्रोध नृपतेः प्राणोपरोधिन' ॥

तस्यापरेण विख्यात' सकाराख्यो द्विजस्तथा ।
मन्त्रार्थकुशलो युक्तात्मा ॥

प्रभु बहुतर' ख्यातो मन्त्रजापी भवत् तदा ।
साधयामास त मन्त्र वै वश्यार्थ नान्यकारणम् ॥

वशीभूतेषु भूतेषु धनमन्तो भवति तत ।
तत परेण वै ख्यातो द्विजो धर्मार्थचिन्तक' ॥

शकाराख्यो मत अन्ते भवितासौ माल्वे जने ।
प्रसन्ने शासने ह्यग्रो मन्त्रजापी हि वै भुवि ॥

वेताडग्रहदुष्टां च ब्रह्मराक्षसराक्षसाम् ।
सर्वपूतनभूतांश्च क्रव्यादां विविधांस्तथा ॥

सत्र त वशिनस्तस्य त्नपा स्थावरजङ्गमा ।
सर्वे ते वशिनस्तस्य द्विजाचेन्द्रस्य त ग्राहिते ॥
अत परेण विख्यात द्विजा दक्षिणापथे ।
वकाराद्य' समाख्यात शास्तुशासनत पर ॥
विहारारामचैत्यैस्तु वास्तुनिम्ने मनोरम ।
अलङ्करोति राजा च मेदिना द्विरामुद्रगाम् ॥
तस्यापरेण विख्यातः द्विजश्रेष्ठा महाधन' ।
भकाराद्यस्तथा ख्यातो दक्षिणां दिशिमाश्रुतः ॥
मन्त्ररूपी महात्मा वै नियत बोधिपरायणः ।
मध्यदेशे तथा ख्यात सम्पूर्णा नामत द्विज ॥
विनयः सुविनयश्चैव पूर्णा मधुरवासिन' ।
भकाराद्यो धनाध्यक्षो नृपतीना मन्त्रपूजक' ॥
इत्येते द्विजातय' कथिता शास्तुशासनपूजका' ।
सन्त्यान्त आदिमुख्याश्च विविधायतनगोत्रजा' ॥
नानादेशे द्विजातीनां पूजका ते परिद्विजाः ।
नानाती र्थाश्च गोत्राश्च विविधाचारगोचरा ॥
सम तान्यतय' प्रोक्ता मानवाश्च बहुश्रुता ।
धर्मराजा स्वय बुद्ध' गवमत्त्वात्थसारक ॥
सर्वेषां चैव भूताना तन्त्राना च कीर्तिता ।
चत्वारोऽपि महाराजा सर्वेष्वन्येषु कीर्तिताः ॥
विरूढो विरूपाक्षश्च धृतराष्ट्रोऽथ यक्षराट् ।
शक्रश्च अथ देवाना नियतायु प्रकीर्तित ॥
सुजामा देवपुत्रश्च सुनिर्मिता वशवर्तिनः ।
राजा सन्तुषित प्रोक्त कामधात्वीश्वरोऽपर' ॥
शक्रास्त्र एकनाम्नास्तु कामधात्वीश्वरास्तथा ।
एकाश्रया सदा तेऽपि एकजापा महर्द्धिका ॥

अनन्ताः कथितास्तेऽपि नानारूपधरा गुग ।
अतः ऊर्ध्वं समा सर्वे तेऽपि महर्द्धिका ॥
एत्र सङ्गा सुरश्रेष्ठा आ मज्ञाता प्रकीर्तिता ।
न तेषां प्रभविष्णु स्यात् तुल्यवृत्तिसमाश्रया ॥
अत' अवीचिपर्यन्त न राजा तत्र निश्चत ।
नरकाष्टौ षोडशोत्सिद्धो सपर्यन्ता तऽपि कीर्तिता ॥
अनृपाः कर्मराजान यमराजा प्रोना विभु ।
सुवर्णः पक्षिणां राजा गरुत्मा स महर्द्धिकः॥
किन्नराणां द्रुमो स्यातः भूताना रुद्र उच्यते ।
विद्याधराणां नृपो विद्या चित्रकेतुर्महर्द्धिक• ॥
असुराणां तथा हेतौ वेम चित्रिथात्तम ।
ऋषीणां व्यास इत्युक्तः सिद्धानां च महारथ ॥
नक्षत्राणां सोम निर्दिष्ट• ग्रहाणां भास्करस्तथा ।
मातराणां तथा राजा ईशानमभिकीर्तित' ॥
द्विवशानां प्रतिम प्रोक्तः राशीना कन्य उच्यते ।
सरितां सागर प्राक्तः मेघाना तु सुपुष्कर ॥
ऐरावतो हस्तीनामश्वानां हरिवरस्तथा ।
तिर्यराजाथ सर्वत्र प्रहान्त परिकीतित ॥
अनन्ता गतय प्रोक्ता राजानश्च अनन्तका
समन्तात् सर्वतस्तेषु बुद्धो लोके नरोत्तम ॥
उत्तमां कुरुमाद्य प्रभविष्णुस्तेषु न त्रिश्रो ।
द्वीपेष्वेव परेतेपु पूर्वापरयतस्तथा ॥
जम्बूद्वीपनिवासिस्यां पूर्वाया स नराधिपा ।
अनन्ता च क्रिया प्रोक्ता चतुर्द्वीपा सनराधिपा ॥
सक्षेपा कथिता ह्येते कथ्यमानाततिविस्तरा ।
प्रभूता भूतपतयो मुख्यां त्रिदेवासुरजन्मिनाम् ॥

अन तल्लोकधातुस्था अन ता गुणविस्तरा ।
अन ता कथिता ह्यत्र कल्पेऽस्मिं भूनिवासिन ॥
कथिता मन्त्रसिद्ध्यर्थे देशकालसमात्ययात् ।
सिद्ध्यन्ते मन्त्रराजानो विविधा दूतगणास्तथा ॥
एप धर्म समासेन कथिता मुनिपुङ्गवैः ।
अधुना कथित ह्येतत् शुद्धावासोपरिस्थितै' ॥
मञ्जुश्रियो महावीरः पप्रच्छ लोकनायकम् ।
य एप कथिता कर्म कथ चैन धारयाम्यहम् ॥

पेयाल विस्तरेण कर्तव्य सर्वेपा नृपतीना कर्म स्वक जातकं महापरिनिर्वाणसूत्र मञ्जुश्रियस्य कुमारस्य मुनिश्रेष्ठ ।

अभापत बोधिसत्त्वार्थमन्त्राणां च सविस्तराम् ।
बोधिमार्गार्थबोध्यर्थ धर्मसूत्र इति स्मृत ॥
विसर कल्पम त्राणां कर्म आयूपि भूनृणाम् ।
नृपतीनां तथा कालमायुपे परिकीर्तनम् ॥
धर्मसङ्ग्रहण नाम पिटक बोधिपरायणम् ।
मन्त्रतन्त्राभियोगेन कथित बोधिनिम्नगम् ॥
धारयस्त्व सदा प्राज्ञ मन्त्रतन्त्रार्थपूरकम् ॥ इति ॥

आर्यमञ्जुश्रियमूलकल्पाद् बोधिसत्त्वपिटकावतसकान्म
हायानवैपुल्यसूत्रात् पटलविसरात एकपञ्चाश-
राज याकरणपारवत
परिसमाप्त इति ।

अथ चतु पञ्चाश पञ्लनिसग ।

अथ भगवां शाक्यमुनि' पुनरपि शुद्धावासभवनमवलोक्य मञ्जुश्रियं कुमारभूतमामन्त्रयते स्म । अय मञ्जुश्री धर्मपर्याय । अस्मिं स्थाने प्रचरिष्यति । तत्राह स्वयमेवं वेन्तिव्य । सर्वबोधि सत्त्वगणपरिवृतः श्रावकसङ्घपुरस्कृत सर्वदेवनागयक्षगरुडगन्धर्व किन्नरमहोरगसिद्धविद्याधर' मानुषामानुषै' परिवृता विहरेऽह वेदितव्य' । तथागतोऽत्र रक्षावरणगुप्तये तिष्ठतीति । दशानुशसा मञ्जुश्री' कुमार वेदितव्य. । यत्र स्थानोऽय धर्मकोशस्तथागतानां पुस्तकगतो वा लिख्यति वाचयिष्यति धारयिष्यति सत्कृत्य मनसिकृत्य विविधैश्चामरपूर्णच्छत्रध्वजपताकाघण्टाभिर्वाद्यमाल्यविलेपनै धूपगन्धैश्च सुगन्धिभि पूजयिष्यति मानयिष्यति सत्करिष्यति एकाग्रमनसो वा चित्त धत्से । कतमे दश । न चास्य परचक्रभय दुर्भिक्षो वा । न यास्य तत्र महामार्योपद्रव भवति, अमानुषभयो वा । न चास्याग्निभय भवति सर्वमत्यर्थिकभया वा । न चास्य तत्रानावृष्टिभय भवति अतिवृष्टिभयो वा । न चास्य तत्र महावातमण्डलीभय भवति सर्वक्रव्यादभयो वा । न चास्य शक्रभय भवति सर्वधूर्ततस्करभयो वा । न चास्य मृत्युभयं भवति, यमराजोपनीतभय वा । न चास्यासुरभयं वा भवति, सर्वदेवनागयक्षग धर्वासुरभयो वा । न चास्य मन्त्रभय भवति, सर्वगरविषभय वा । न चास्य रोगभयं भवति ज्वरातीसारजीर्णाङ्गमत्यङ्गभयो वा । इमे दशानुशसा वेदितव्या, यत्रायं महाकल्पनिशरे धर्मकोशस्तथागतानां पुस्तकगतो तिष्ठेन, लिखनवाचनपूजनधारणस्वाध्यायाना वा कुर्म ।

गुह्यतमोऽय धर्मकोशस्तथागताना म श्रानुवर्तनतया पुनरेषां सर्वत. आचार्यसमयानुप्रविष्टानाम् । असमयज्ञानां न प्रकाशितव्यः । यत् कारणम् । रहस्यमेतत् । गुह्यवचनमेतत् । सर्वज्ञवचनमेतत् ॥

मा हैव सत्त्वा प्रतिक्षेप्स्यन्ते, अवज्ञस्यन्ति, न पूजयिष्यन्ति, न सत्करिष्यन्ति, महदपुण्य प्रसविष्यन्ते, गुह्यनिवरण सत्त्वोपघातननृपतिसूचन आयु प्रमाणोपघातापसर्गिकाक्रियां करिष्यन्तीति न परे-

पामारोचयितव्य च । समयरहस्यगुह्यमन्त्रचर्यानुप्रविष्टानां सत्त्वानां तथागतशासनाशिक्षाया सुशिक्षितानां सुव्यवस्थितानां धर्मार्थकोविदामायतनधातुसमयानुप्रवेशधर्मस्थितानां सत्यसन्धानां दृढव्रतमन्त्रागतानां सत्त्वचर्यामार्गानुप्रविष्टकारुणिकानामेतेषां सत्त्वानामारोचयितव्यम्, न परेषामिति ॥

अथ खलु मञ्जुश्री कुमारभूतो बोधिसत्त्वोत्थायासनादेकांशमुत्तरासङ्ग कृत्वा, दक्षिण जानुमण्डल पृथिव्यां प्रतिष्ठाप्य, कृतकरतलाञ्जलिपुटो भगवन्तमेतदवोचत् । को नामाय भगवन्! धर्मपर्यायः, कथ चैन धारयाम्यहम् ।

भगवानाह— सर्वबोधिसत्त्वविस्फूर्जनबोधिसत्त्वपिटक इत्यपि धारय । आश्चर्याद्भुतधर्मोपदेशपरिवर्त्त इत्यपि धारय । सर्वमन्त्रकोशचर्यानुप्रविष्टबोधिसत्त्वानिर्देश इत्यपि धारय । महायानवैपुल्यनिर्देशाद्भुत इत्यपि धारय । आर्यमञ्जुश्रियमूलकल्प इत्यपि धारय । सर्वधर्मार्थपूरणनिर्देश इत्यपि धारय इति ॥

सर्वलोका समग्रा वै धर्माधर्मविचारकाम् ।
विचेरु' सर्वतो यस्त्व बोधिसत्त्वो महार्द्धिकः ॥

न पश्यसे पर गुह्यमेत धर्मवर वरम् ।
मन्त्रन त्रार्थसूत्राणां गतिदेशनिरत्ययम् ॥

न पश्यसे वर वीर! धर्मबोधिपरायणम् ।
यादृशोऽय गन्थसूत्र नेयार्थभूषितम् ॥

विविधाकारमन्त्राल्यो मन्त्रतन्त्रानुवर्तनम् ।
न भूत विद्यते कश्चिद्द्व य कल्पविसरादिह ॥

महाराज्ञा महाभोगां सम्पदांश्च दिवौकसाम् ।
प्राप्नुयात् पुष्कलां कीर्त्तिं दिव्या मानुषिकां तथा ॥

अक्षाणा वर्जयेदष्टां क्षणांश्चैव सम्भावयेत् ।
बुद्धत्व नियतं तस्य त्रिधा जनगतिस्तथा ॥

इद सूत्र धारणात् पुन्य अनुशसा स्यादिमे तथा ।
न चास्य सर्वकाये वै न विष न हुताशनम् ॥

न वेताडा ग्रहा ोर न पूतना मातरा हि ये ।
तेन चोरराक्षसा ॥

पिशाचा नास्य हिंस्येयु यस्य मन्त्रमिम पठेत् ।
धारयेद्वापि पूजयद वा न पुन पुन विविधा ॥

नान्य पूज्य पूज इम पूजयेद् वा विशारद ।
स इमां लभते मर्त्या मनुशसामिहादिता ॥

आतुरो मुच्यते रोगान दु खिता सुखिनो भवेत् ।
दरिद्रो लभते अर्थान बद्धो मुच्येत व धनात् ॥

पतित' ससारदु खेऽस्मिन गतिं पञ्चकयोजितम् ।
क्षेम शिव च निर्वाण माप्नुयादचल पदम् ॥

प्रत्येकबोधिबुद्ध व श्रावकत्व च नैष्ठिकम् ।
इदं सूत्र वाचयित्वा लभते बुद्धवर्तिताम् ॥

गङ्गासिकताप्रख्यानामनन्त्य जिनवरास्तथा ।
पूजित्वा लभते पुण्य तत्सर्वमिद सूत्र पठनादिह ॥

यावन्ति केचिल्लोकेऽस्मिन् क्षेत्रकोटिमचि तका ।
तावन्तु परमाणवाऱ्यां बुद्धानां पूजयेत् सदा ॥

विविधा अन्नपानैश्च ग्लानिप्रत्ययभेषजैः ।
विविधासनशय्यासु दद्यु' सर्वत सदा ॥

चीवरैर्विविधैश्चापि चूर्णचीवरभूषणै' ।
छत्रोपानहपटैः सुगन्धमाल्यविलेपनै ॥

धूपन विविधैर्वापि दीपैश्चापि सम तत ।
तत् पुण्य प्राप्नुया जन्तुर्धारणाद् वाचनादिदम् ॥

प्रत्येकबुद्धजे लोके श्रावका सुमहर्द्धिकः ।
बोधिसत्त्वा महात्मानो दशभूमिस्थिता परा' ॥

तत्प्रमाणाद् भवेत् सर्वे तेषां पूजां तथैव च ।
तत् पुण्य प्राप्नुया मर्त्य यस्य पुस्तक गत करे ॥

यावन्ति लोके कथिता लोकधातुसमाश्रृता ।
सर्वसत्त्वा समाख्यातास्ते सर्वे विगतज्वरा ॥
तेषा च पूजा सत्कृत्य कृति ज तु पुन पुन ।
तत् पुण्य प्राप्नुयाद्धीमा पूजन्ना धर्मपरमिमम् ॥
न शक्य कल्पकोटीभि रत्न जिनवरै सदा ।
पूजये लोकनाथाना धर्मराज ग ररम् ॥
चिन्तामणि च रत्नार्थेमिम धमवर भवेत् ।
पठनाद् धारणान्मन्त्रा कल्पेऽस्मिन मञ्जुभाषिते ॥
भवेत् कामदुह तस्य महाभोगार्थसम्पद ।
अखिन्नमनसा भूत्वा यो ह्मा साधयेत् भुवि ॥
मन्त्रान् तत्त्वार्थनेयार्थ सफला मुनिभाषिता ।
क्रियाकालसमायोगात् साधयेद् विश्वधरा भुवि ॥
तस्य सर्वदिशा ख्याता सपूर्णा रत्नसम्पद ।
सफला गतिमाहात्म्या वर्णिता साधुवर्णिता ॥
योऽस्मान् कल्पवरा लेक मन्त्र धारये नृप ।
सफला राजसम्पत्ति दीर्घमायुष्यसम्पदाम् ॥
विविधा भोगचर्या वा प्राप्नुया नृपवरोपराम् ।
न चास्य हन्यते शस्त्रैर्न विषै. स्थावरजङ्गमैः ॥
परविघ्नकृतेश्चापि मन्त्र वेताडसाधनम् ।
दूषितैर्वसुधालोके परकृत्यपरायणे ॥
न हुताशनभय तस्य ना वैरग्रहापरै. ।
काय न हन्यते तस्य नृपतेर्वा जन्तुनोऽपि वा ॥
य इम सूत्रवराग्र तु धारयेद् वाचयेत् तथा ।
राजा च कृतया भूर्ध्नो सङ्ग्रामे समुपस्थिते ॥
छत्र शिरसि मावेद्य नमस्कुर्यात् पुन पुन. ।
न तस्य दस्यवो हन्युर्नानाशस्त्रसमुद्यताम् ॥

हस्तिस्कन्धसमारूढ कुमाराकारसम्भवम् ।
मयूरासनसुस्त सङ्ग्रामे अवतारयेत् ॥
दृष्ट्वा त विद्विष' सर्व निवर्तन्तेयुस्ते परे जना ।
बालरूपं तथा दिव्यकुमारालङ्कारभूषितम् ॥
सौवर्ण राजत वापि रागत्यभ्वजपूजितम् ।
आरोप्य ध्वजपताका पु गुन्यस्त गुरामाहितम् ॥
सङ्ग्राम रिपुसङ्कीर्ण नानाशास्त्रसमुद्यतम् ।
युधि प्राप्त समस्त ये तस्मि कालऽवतारयेत् ॥
नश्यन्ते दृष्टमात्र वै मुह्य ते वा समन्तत ।
मानुषामानुषाश्चापि रूपाश्चापि सुरेश्वरा ॥
सिद्धविद्याधराश्चापि स ग्नन्त्रसमाश्रिता ।
राक्षसा सत्त्ववन्तोऽपि कम्प्रानामारा ॥
क्रव्यादा विविधाश्चापि यक्षकूष्माण्डपूतना ।
न शक्यन्ते दृष्टमात्र वै ध्वजमुच्छ्रितमस्थितम् ॥
कुमार विश्वकर्माणमनाकाररूपिणम् ।
मञ्जुघोष महा मा  भूम्या पा पानम् ॥
महाराजा क्षत्रियो ा  ा भू ा ाामिन ।
श्राद्धो विमतिरा देह िग ा धर्मवत्न ॥
उत्पाद्य सोगतीं शुद्धा  ग्णा ााानगाम् ।
प्रक्रमु मभिकामा वे ि याप ाागहान्ताम् ॥
निर्दिष्टं प्रवचने ह्येता धर्मधातग ाजिन ।
कल्प प्रयोग मन्त्राणा त त्युक्तमभूत ॥
असङ्ख्यैर्जिनवरे पूर्व भगधातुसमाश्ने ॥
कथित धर्मकोश तु मानुषा तु भवते ॥
देवासुरे पुरा युद्धे वर्तमान भयावह ।
तदा पुरो ह्यासति हतमे योऽथ त्रिदशे ॥

एकाकिनस्तदा सत्त्वा विनश्येव महीतले ।
मुनिश्रेष्ठ तदा पृच्छेत् काश्यप त जिनात्तमम् ॥
किं कर्त्तव्यमिति वाक्यमाजहार शचीपति ।
निर्जितोऽसुरैर्घोरैरहमत्र ममाश्रृत ॥
एवमुक्त मघवा शतक्रतुर्दिवौकस' ।
प्रणम्य शिरसा मूर्ध्न पादयोर्मुनिपुङ्गवे तदा ॥
निषसेदु पुरा ह्यासीत् कौशिकोऽथ सहस्रदृक् ।
एवमुक्तो मुनिश्रेष्ठ' काश्यपो ब्राह्मण अभूत् ॥
आजहार तदा वाणिं कलविङ्करुतस्वनाम् ।
पूर्व जिनवरैर्गीत कुमारो विश्वसम्भव ॥
मञ्जुश्री महात्मासौ दुर्लक्षो लक्षमूर्जित ।
भूतकोटिसमाख्याता गम्भीरार्थदेशिकः ॥
नि'प्रपञ्च निराकार नि स्वभावमनालयम् ।
धर्मादिदेश सत्त्वेभ्यस्तत् स्मरिष्व सुरेश्वर ॥
ततस्ते नु स्मर्ता से स्मृत नरागतो ता ।
आगतस्तत्क्षणात् तत्र कुमारा विश्वरूपिण ॥
यत्र सो भगवा तस्थु मघवाशीव सुरेश्वर ।
आगता भापत म त्रा व ि द ना जिनवर तदा ॥
प्रणम्य जिनवरा सर्वा काश्यप च महाद्युतिम् ।
इमा म त्रामभाषेत कु मारजा मुने तदा ॥
नम' सर्वबुद्धबोधिसत्त्वेभ्योऽप्रतिहतशासनेभ्यः ।

ॐ हन हन सर्वभयान् सान्योत्सान्य त्रासय मोहय छिन्द भिन्द ज्वल ज्वल हुँ हुँ फट् फट् स्वाहा ।

समनन्तरभाषितेय मन्त्रा कुमारभूतेन मञ्जुश्रियेण बोधिसत्त्वेन महासत्त्वेन । इय महापृथिवी पड्विकार प्रकम्पिता सशैलसागरपर्यन्ता । सर्वाश्च बुद्धा भगवत। क्षेत्रानन्तापर्यन्ता सलोकधातुदिशपर्यन्ता सर्वश्च बुद्धैर्भगवद्भिरधिष्ठितानि च इमानि म त्रपदानि ॥

वा वदेयु न मन्त्रा न चौपधयो नापि सत्त्वानां पि तेषां माहात्म्यविस्तरमृद्धिविकुर्वण वा नापि विकल्पविस्तरमनार्यभाषितमिति कृत्वा उत्सृज्य त्यजन्ते अवगच्छन्ति न अनुसरति वा श्रोतुम्, तस्मात् स्थानादपक्रमन्ते महान तेषामपुण्य भविष्यतीत्याह ॥

ये नरा मूढचित्ता वै प्रतिक्षेप्स्यन्ति वरामिमम् ।
धर्मं मुनिवरगीतं जिनपुत्रैश्च धीमतै ॥
तेनका नरक यान्ति सोत्सेध सतिर्यगम् ।
कालसूत्रमथ सञ्जीव क्षुरधारां गूथमृत्तिकाम् ॥
कुणप क्षारनदीं प्राह्य क्वरधारा पुनस्तत' ।
असिपत्रवन घोरमववहहव तथा ॥
अटट लोकविख्यात नरक पापकर्मिणाम् ।
गच्छते जना तत्र ये नरा धर्मदूषका' ॥
अवीचिर्नाम तद् घोर प्रख्यात लोकविश्रुतम् ।
कुत्सितमय' प्राकारविक्षिप्तमावासं पापकर्मिणाम् ॥
पच्यन्ते ते जनास्तास्मिन यो धर्मं क्षेपयेदिमम् ।
अवीचिपर्यन्तसर्वां तां गोत्मवा समूलजाम् ॥
अनन्तां नरकभूम्यन्ता गतेऽसौ विमति' सदा ।
प्रतिक्षिप्ता धर्मगन्जेस्य इद सूत्र सविस्तरम् ॥
लोके कुत्सता यान्ति ।
अवीच्यन्ता नरकान या। त विवशवैगस्तदा ॥
यो हि समूत्रकल्पाख्य म तन्त्रभूपितम् ।
सिद्धिचित्रगतालभ्य भूतकाम्यिनाव ाम् ॥
शरीर धर्मधात्वर्थमनाल्म्बनभावनम् ।
विस्तर पटलोत्कृष्ट सकल्प कल्पविस्तरम् ॥
मञ्जुघोषसुविन्यस्त सम्पच्छ्रीमातपूजितम् ।
मूलकल्पमनल्प वै कथित बहुविस्तरम् ॥

प्रतिलेख्या च धर्मेणोपरतु जिनानां भानुपूजितम् ।
यद्द समसमायामां यद्गिन्नमनाथनाम् ॥
जाग्रत यद्या गत्य शाद्द्यससगाकुल ।
गत्र गत्र गतिमाति क्गतिग्गत्र जागते ॥
मी ोम्राहि मत तत तभापपद्यते ॥ इति ।

अथ मञ्जु ी कुमारभूता ता भगवत्तो महागत्त्व उत्थायासना देवांशमुत्तरासङ्ग कृत्वा दक्षिण जानुमण्डल पृथिव्यां प्रतिष्ठाप्य कृताञ्जलिपुट उत्फुल्लनयन ानिमिष गत गर्वांगा शुद्धावासभवनस्तान् देवपुत्रान ोकाश्च भूतसङ्घा सन्निपतिता धर्मश्रवणाय विदित्वैव शाक्यमुनि भगव तमेतमाह —

"आश्चर्य भगव ! यावत् परम सुभाषितोऽय धर्मपर्याय । तद्भगव ! भविष्यत्यनागतेऽध्वनि सत्त्वा विषमलोभाभिभूता सत्त्वा पञ्चकषायोद्रिक्तमनसोऽश्राद्धा कुहका खटुका कुशीला ते म त्राणां गतिमाहात्म्यपूजित काल्देशनियम म त्रचर्याहोमजपनियमकल्पविशगां न श्रदास्यन्ति । अभूद्दक्तिमिति कृत्वा प्रतिक्षेप्स्यन्ते । क्लिष्ट मनसा भूत्वा काले कारण्या त । त दु खां तीव्रां खरां कटुकां वेदना वेदयिष्यति । महानरकोपपन्नाश्च ते भविष्यन्ति । तेषां भगव ! द ग्यितानां सत्त्वाना कथ प्रतिपत्तव्यम् ! महाकारुणिका व बुद्धा भगवन्त ॥"

अथ भगवा शाक्यमुनिर्मञ्जुश्रिय कुमारभूत मूर्ध्नि परामृश्यामन्त्रयते स्म — "साधु साधु खलु पुनस्त्व मञ्जुश्री ! यस्त्व सर्वसत्त्वानामर्थ हिताय प्रतिपन्न । साधु पुनस्त्व मञ्जुश्री ! यस्त्व तथागतमेतमर्थ प्रश्नयि । तेन हि त्व मञ्जुश्री ! शृणु । साधु च सुष्ठु च मनसि कुरु । भाषिष्येऽहं ते सर्वसत्त्वानामर्थाय हिताय सुखाय लोकस्यार्थाय देवमनुष्याणा च सर्वम त्रचर्यानुप्रविष्टोऽभिमार्गनियुक्ता नातुपरमूल्यापाभयलिलिप्सूना मरणकालसमये च स्मर्तव्याऽत्र ा परमरहस्य कुमार ! त्वदीयमूलकल्पपटलविसर कतम

"नम सर्वतथागतेभ्योऽर्हद्भ्यः सम्यक् सम्बुद्धेभ्य । ॐ कुमारूपिणि निश्वसम्भव आगच्छागच्छ । लहु लहु भ्रू भ्रू हूँ हूँ जिन जित् मञ्जुश्रीय सुश्रिय तारय मां सर्वदु'खेभ्य फट् फट् शमय शमय । मृताद्भवोद्भव पाप मे नाशय स्वाहा ।"

एप मञ्जुश्री' त्वदीय परमहृदय सर्वशान्तिकर सर्वपापक्षय सर्वदुःखप्रमोचनमायुरारोग्यैश्वर्यपरमसौभाग्यसाम्यसञ्जननं सर्वविद्याराजसत्तेजनं च समन तरभाषिते शाक्यमुनिना बुद्धन भगवता । इय महापृथिवी सशैलसागरसत्त्वभाजनसन्निचयपर्यन्ता पड्विकार प्रकम्पति भाभूत् । सर्वाश्च गतय प्रेततिर्यग्यमलोकसर्वसत्त्वदु खानि प्रतिप्रस्रब्धानि । अय च विद्याराजा मञ्जुश्रीर्मनासि कर्तव्या । न च तस्मिन् समये सद्धर्मप्रतिक्षेपेण चित्त भवेयु' । न च मारा पापीयांसः अवतारं लप्सन्ते । सर्वविघ्नविध्वंसकाश्चापक्रम ते । एव च चित्तमुत्पादयितव्यम् । किं मया शक्य बुद्धाना भगवतां अचिन्त्यबुद्धा बोधिधर्मा चि तयितु वा प्रतिक्षेप्तु वा बुद्धा भगवन्तो ज्ञास्यन्ती ति ॥

आर्यमञ्जुश्रीमूलकल्पाद् बोधिसत्त्वपिटकावतसकात्
महायानवैपुल्यसूत्रात् पञ्चाशत्तिम अनुशसाविगर्हणप्रभावपटलविसर
परिसमाप्त इति ।

---

आर्यमञ्जुश्रिय पटस्याग्रत यस्योद्दिश्य श्वेतसर्षपाणामष्टशत जुहोति ; स वशो भवति । स्त्रीवशीकरण अष्टशत जुहुयात्, सा वशा भवति । कृष्णचतुर्दश्यां श्वेतपुष्पाणामष्टसहस्रेणार्यमञ्जुश्री उद्दिश्य हन्तव्य., राजपत्नी वशा भवति । अपतितगोमयेन शिवालिङ्ग कृत्वा तस्याग्रतो गोमयेन त्रिशूलेन श्वेतसर्षपाणां दधिमधुघृताक्तानां सप्ताहुतिं जुहुयात् । दिवसत्रय यस्योद्दिश्य स वशो भवति । कुमारी वश्यार्थं अरुणपुष्पाणां अष्टसहस्रेणार्यमञ्जुश्रीर्हन्तव्य । सा वशा भवति । मधूच्छिष्टमयीं पुत्तलिकां कृत्वा आत्मन उरु स्थाप्य अष्टसहस्र । यस्योद्दिश्य स वशो भवति । पटस्याग्रत शुक्लपुष्पाणां अष्टशत निवेदयेत् । यमिच्छति स वशो भवति । शङ्खनाभिराच नागरुमेकीकृत्य पीषयेत् । अष्टसहस्राभिमन्त्रित कृत्वा अन्नेन वा पानेन वा यस्य दीयते स वशो भवति । ब्राह्मणीवशीकरणे पटस्याग्रत बिल्वकुसुमानामष्टसहस्र जुहुयात्, सा वशा भवति । भस्मानां सप्तजप्तेन यां स्त्रियं चूर्णयति, सा वशा भवति । स्त्रिया पुरुषस्य वाग्रत' स्थित्वाष्टसहस्र जुहुयात्, स वशो भवति । चतुरङ्गुलकाष्ठिकां अष्टसहस्राभिमन्त्रितां तया यमाकर्षति, स वशो भवति । श्वेतपुष्पाणां अष्टशत अष्टसहस्र निवेदयेत् । तत्रैक पुष्प गृह्य स्त्रियं दृष्ट्वा आवर्त्तयेत् । आगच्छति स वशो भवति । क्षीरयावकाहार' पक्षमेक वल्मीकमृत्तिकामय वा प्रतिकृति कृत्वा तत्रोपविष्टस्तावज्जपेद् यावद् वासुकिश्चलित सिद्धो भवति । आत्मद्वान्दशमस्य भक्त ददाति । अतीतमनागत प्रत्युत्पन्न कथयति । क्षीरयावकाहार शतसहस्र जपेत् । भोगान लभति । मासेन भिक्षाहार शुक्लचतुर्दश्यामेकरात्रोपित पटस्याग्रतो महतीं पूजां कृत्वा प्रतिमाया पादौ गृह्य तावज्जपेद् यावच्चलिताचलितेवान्दश्या भवति । सर्वसिद्धानां राजा भवति । मासाहारमुत्पद्यते । पञ्चवर्षसहस्राणि जीवति । गङ्गानदीमवतीर्य लक्षमेक जपेत् । पश्चात् तत्रैव पटे वालुकामय चैत्य कृत्वा मधु क्षीर चेकत कृत्वा जुहुयात् । सर्वनागा आगच्छन्ति । यद् ब्रवीति तत् सर्व कुर्वन्ति । पर्वतशिखरमारुह्य पट प्रतिष्ठाप्य तैलाक्त

चन्दशकलिकां जुहुयात् । यक्षा आगच्छन्ति । यद् ब्रवीति तत् सर्वं कुर्वन्ति । वन पट प्रतिष्ठाप्य मधुपिप्पली चकत कृत्वाष्टसहस्र जुहुयात । सर्वविद्याधरा आगच्छन्ति । आज्ञाकरा भवन्ति । एकवृक्षे मतीत्य समुत्पान्नगर्भचैत्यप्रतिष्ठाप्य लक्षमेक जपेत् । लक्षपरिसमाप्तौ पोषधिकेन रूपकारेणाश्वत्थकाष्ठमय तृशूल लक्षणापेतं कृत्वा सपाताभिहूत कृत्वा पौर्णमास्या सुगन्धगन्ध समुपलिप्य यथा विभवत पटस्याग्रत पूजां कृत्वा दक्षिणहस्ते कृत्वा सकलां रात्रिं साधयेत् । यावज्ज्वलतीति । ज्वलित महादेवो भवति । भूताधिपति भवति । दुर्दान्तदमक अप्रतिहत' सर्वसत्त्वेषु । समुद्रमवतीर्य लक्ष जपेत् । सागरप्रभृति यमिच्छति नागराजन त पश्यति । मणिरत्न वा ददाति । तेन गृहीतेन विद्याधरो भवति । सर्वनागविद्याधराणां राजा भवति। पोपधिकेन कर्मकारेण ताम्रघटक कारयेत् । प्रातिहारकपक्षे पूर्णमास्यामुदारां पूजां कृत्वा पटस्याग्रत प्रतिष्ठाप्य तावज्जपेद् यावज्ज्वलितः । तत. तस्मिं हस्त प्रक्षिप्य यमिच्छति तत् सर्वं प्रादुर्भवति । भद्रघटसाधनम् । समुद्रगामिनी नदीमवतीर्य लक्ष जपेत् । यस्यां मृण्मय वालुकामय वा पूर्णमास्या चैत्य कृत्वा, तत्रैव पट प्रतिष्ठाप्य महतीं पूजां कृत्वा स्फटिकमणिमृण्मया वा दक्षिणहस्तेन गृहीत्वा पर्यङ्कोपविष्ट तावज्जपेद् यावज्ज्वलतीति। चिन्तामणिधारी विद्याधरो भवति । सधातुके चैत्ये पट प्रतिष्ठाप्य लक्ष जपेत् । प्रातिहारकपक्षपूर्णमास्या विधिवत पूजां कृत्वा प्रदीपमाला च उदारां कृत्वा दक्षिणहस्तेन ध्वज शुक्लवस्त्रावलम्बित गृह्य तावज्जपेद् यावज्ज्वलति । ध्वजविद्याधरो भवति । सर्वत्राप्रतिहत । प्रातिहारकपक्षे पूर्णमास्यां पटस्याग्रत महतीं पूजा कृत्वा भगवत्या प्रज्ञापारमितापुस्तक सुग न्धगन्धे प्रलिप्य सुगन्धपुष्पमालाभि वपयित्वा वामहस्तेन गृह्य पर्यङ्कोपविष्टस्तावज्जपेद् यावज्ज्वलति। विद्याधरराजा भवति। यत्रेच्छति तत्र गच्छति । बोधिसत्त्वचर्याचारी भवति । कुमारीं प्रासादिकां सुस्नातालङ्कृता कृत्वा पटस्याग्रत यथाविभवत पूजां कृत्वा वामहस्तेन गृह्य स्थितस्तावज्जपेद् यावत् तया सह ज्वलति । तयैव सार्ध विद्याधरा भवति । एवलिङ्गस्योपरि हस्त दत्वा ताव

जपेद् यावत् सत्त्वाया न पश्यन्ति । अदृश्यः सर्वसिद्धानामगम्यः अन्तर्धानिक भवति । त्रयोदश्यां चन्द्रग्रहे सूर्यग्रहे वा हरितालं बोधि वृक्षपत्रान्तरित कृत्वा महेश्वरायतने सधातुके चैत्यै तावज्जपेद् यावद् धूमायति । तिलक कृत्वा अन्तर्हितो भवति । क्षीरयावकाहारं समुद्र-तटे वृक्षमूले सहस्र जपेत् त्रिसन्ध्य सप्तरात्रम् । समुद्गानि रत्नानि पश्यति । यथेष्ट गृह्णीयात् । मुद्राहार पर्वतशिखरमारुह्य अष्टसहस्र जपेद् विंशतिरात्रम् । पर्वतगतानि मणिरत्नानि दर्शन भवति । ततो हस्तशिरसि कृत तस्योपरि उपविष्ट अष्टसहस्र जपेत् । एव दिवसानि सप्त । स वशो भवति ॥

राजान राजमात्र वा वशीकर्तुकामं तस्य मधूच्छिष्टकेन प्रति कृतिं कृत्वा निर्धूमाङ्गारेषु क्षिपेत् सप्तरात्र स वशो भवति । वस्त्रकामः श्वेतपुष्पाणां अपरिमर्दितानां सकृत् परिजप्य उदके क्षिपेत् सप्तरात्रम् । अष्टसहस्र वस्त्रयुग प्रतिलभेत । गोघृत अष्टसहस्र जप्त्वा स्त्रियामाद द्यात् । विशल्या भवति । नवनीताष्टशतजप्तेनाभ्यक्त अग्नि प्रविशति । न च दह्यते । तेनैव चाभ्यक्तो जल प्रविशति स्तम्भितो भवति । जपमानो यावदुत्साह भिक्ष भक्षयति । आयम प्रदेशमात्र खड्ग कृत्वा सधा तुके चैत्ये पट प्रतिष्ठाप्य उदारा पूजां कृत्वा अश्वत्थपत्रैः प्रदक्षि णावर्त्तैः खड्ग प्रतिष्ठाप्य तावज्जपेद् यावज्ज्वलित इति । तेन गृहीत सपरिवारोत्पतति । विद्याधरसहस्रपरिवृत अभेद्य सर्वविद्याधराणां वर्षकोटि जीवति । कृतपुरश्चरण कृष्णाष्टम्या कृष्णचतुर्दश्यां वा पटस्योदारां पूजां कृत्वा सङ्घोद्दिष्टकां भिक्ष भोज्य मन शिलायां भूमौ पद्म शतपत्र लेख्य पद्मकर्णिकायां उपविश्य तावज्जपेद् यावद् भूमि भित्वा पद्ममुत्तिष्ठति । पद्मपत्रेषु चापविष्टाः विंशतिविद्याधरा प्रादुर्भवन्ति । तैः परिवृत उत्पतति । यावन्त मत्वा पश्यति यैश्च दृश्यते तैः सार्धं गच्छति । स च पद्म अनेकरत्नालङ्कृतो भवति । विमातुरकल्प जीवति । भिन्नदेहे स्वेच्छया उपपत्ति गृह्णाति । पानीये अष्टसहस्राभिमन्त्रितेन शुष्कवृक्षं सिञ्चेत् । पुष्पति फलति च । शु-ष्कनदीमवतीर्य जपेद् उदक भवति । नदीमतरणे जपेत् । श्रान्तस्य

स्थला भवति । राजान राजमात्र वा वशीकर्तुकामेन पटस्याग्रत• कृष्णाष्टम्यामारभ्य पुष्पाणामष्टसहस्र निवेदयेत् । लवणाहुतिं चाष्ट सहस्र जुहुयात्। नियतं राजा वशी भवति । तामेवाष्टमीमारभ्य गोरो चना त्रिसन्ध्य अष्टशतिकेन जपेद् यावदेकादशी । तेन तिलक कृत्वा य वीक्ष्यति स वशो भवति। यदिच्छे दारकदारिका वशीकर्तुकाम पटस्याग्रत• सिद्धार्थकानां अष्टसहस्र जुहुयात् । तासां पादपांसु गृह्य पुत्तलिकां कृत्वा यस्य नामग्रहण करोति स वशा भवति । मेधा- र्थिना गव्यघृत गृह्य चन्द्रग्रहे सूर्यग्रहे वा ताम्रभाजने प्रक्षिप्य ताव ज्जपेद् यावत् त्रिविधा सिद्धि । ऊष्मायमाने श्रुतिधरोऽय यच्छृणोति त गृह्णाति । धूमायमाने रसरसायनम्।ज्वलितेन जातिस्मरो भवति। अर्कपुष्पाणा लक्षं जुहुयात् । दीनारलक्ष ददाति। पटस्याग्रत अर्कपु ष्पाणामष्टसहस्र निवेदयेत् । दीनारशत लभते । पटस्याग्रत शालि तन्दुलानां घृताभ्यक्ताना अष्टसहस्र जुहुयात् । पञ्च दीनारां लभते। कृतपुरश्चरण' पटस्याग्रत' दधिमधुघृताक्ताना अष्टसहस्र जुहुयात् । दीनारशतत्रय लभते । कृष्णतिलानामष्टसहस्र जुहुयात् । दीनारशता धिक लभते ॥

कुलपतिं वशीकर्तुकाम पटस्याग्रत अर्कसमिधानामष्टसहस्र जु हुयात् त्रिसन्ध्य सप्तरात्रम् । कुलपतिर्वशीभवति । लोकपत्य वशी कर्तुकाम' पटस्याग्रत• दूर्वासमालानामष्टसहस्र जुहुयात् सप्तरात्र त्रिस न्ध्यम् । कालपत्य करोति यावज्जीवम् । आर्यसङ्घ वशीकर्तुकामेन अर्कपुष्पाणा पटस्याग्रत अष्टसहस्र निवेदयेत् सप्तरात्रम् । यदर्थं कुर्यात् तमन्विच्छति । सततजपेनार्थं लभते । गुग्गुलुगुलिकाना पटस्याग्रत• अष्टसहस्रं जुहुयात् । सुवर्णसहस्र लभते । पटस्याग्रत कुन्दुरुधूप अ ष्टसहस्र जुहुयात् सप्तरात्रम् । निधान लभते । पटस्याग्रत अर्ककाष्ठ समिधानां दधिमधुघृताक्तानां त्रिसन्ध्य हस्रं जुहुयात् । दीनार सहस्र लभते । शत्रुवशीकरणे पोपधिक पटस्याग्रत' त्रिसन्ध्य राज सर्षपाणां अष्टसहस्र जुहुयात् सप्ताहम् । सर्वशत्रवो वशा भवन्ति। लाक्षाहुतानां अष्टसहस्र जुहुयात् सप्ताहम् । सर्वजनप्रियो भवति ।

शालितन्दुलानां अष्टसहस्र जुहुयात् त्रिसन्ध्यं सप्ताहम् । कार्षापणशतं लभति । कृतपुरश्चरण कृष्णाष्टम्यां कृष्णचतुर्दश्यां वा मृतकपुरुष अक्षताङ्ग गृह्य स्नानालङ्कृत कृत्वा सुगन्धपुष्पधूपैरभ्यर्च्य वाम-पाणिनाग्निमाक्रम्य मन्त्रके आहन्तव्य । तत उत्तिष्ठति । पुरुष लोहमये खड्गे आहन्तव्य । जातरूप सुवर्ण लभति । अथ न च्छति वक्तव्यम् — 'छर्दस्व' इति । ततश्चि तामणि निर्गच्छति । त शिरसि कण्ठे वा कृत्वा अन्यत्र वा बद्ध्वा य चिन्तयति त प्रादुर्भवति । शुक्र प्रतिपदमारभ्य अहोरात्रोषित समुद्रगामिनिं नदीं असमात्रमुदकमव तीर्य जातीपुष्पाणां दशसहस्राणि प्रवाहयेत् । दशनापक लभते, सुवर्णसहस्र वा । शुक्रप्रतिपदमारभ्य समुद्रगामिन्या नद्या पद्मानां दशसहस्राणि निवेदयेत् सप्तरात्रम् । निधानसङ्घाटक लभते । कृतपु रश्चरण तामेव नदीमवतीर्य पुष्पाणां दशसहस्राणि प्रवाहयेत् सप्ता हम् । दश ग्रामाण्यालभते । अशोकपुष्पै चणकमात्रा गुटिकां कृत्वा पटस्याग्रत दधिमधुघृताक्तानां त्रिसन्ध्य अष्टसहस्र जुहुयात् सप्तरात्रम् । यं मृगयति त लभते । अपामार्गसमिधानामेष विधि' । सुवर्णसहस्र लभते अशोकगुटिकाव्यतिमिश्रै अपामार्गतन्दुलै. पटस्याग्रत त्र्यक्तानां दशसहस्राणि जुहुयात् । नामग्रहणेन राजकन्य लभति मासमात्रेण । राजान समन्त्रिण वशीकर्तुकाम' पटस्याग्रत' अशोकसमिद्भिरग्नि प्रज्वाल्य अशोकपुष्पाणामेव दधिमधुघृताक्तानां दश सहस्राणि जुहुयात् । स मन्त्री वशमागच्छति । पटस्याग्रत' अग्निं प्रज्वाल्य अपामार्गसमिद्भिः शतपुष्पां दधिमधुघृताक्ता दशसहस्राणि जुहुयात् । स्वगृहे निधान प श्यति । समुद्रगामिन्यां नद्यां कटीमात्रमुदकमवतीर्य दशसहस्राणि नि वेदयेत् । ये तां जिघ्रन्ति । नामहस्तेन मुष्टिं बध्वा लक्ष जपेत् । तत सिद्धो भवति । मुक्त्वा दृश्यति । सधातुके चैत्ये नदीतटे वा पर्वते वा पटं प्रतिष्ठाप्य पद्मानां लक्ष जुहुयात् । श्रिय पश्यति । एतेनैव वि-धिना नीलोत्पलानां लक्ष जुहुयात् । विधानां पश्यति । गुग्गुलुगुलि-कानां लक्ष जुहुयात् । दीनारलक्ष लभते । सुगन्धपुष्पाणां लक्षं जुहु यात् । वस्त्राणां कोटिं लभते । गुग्गुलुधूपेन अष्टशतिकेन मनोभिल

षितां च पूरयति । तिलसर्षपाणां पटस्याग्रत प्रतिदिनमष्टसहस्र जु हुयात् दिवसत्रयम् । पञ्चविंशतिदीनारां लभते । अनेनैव विधिना सप्तरात्रं जुहुयात् । दीनारशत लभति । लवणमयीं प्रतिकृतिं छित्वा छित्वा जुहुयात् अष्टसहस्रम् । यमिच्छति स वशो भवति स्त्री वा पुरुषो वा । उभयार्द्र हस्तसर्षपाणां घृताक्ताना अष्टसहस्र जुहुयात् दिवसत्रयम् । सर्वविघ्नोपशमनम् । उदके एकपाद प्रक्षिप्य स्थले एक एव तावज्जपेद् यावदुदकस्थ पाद लघुर्भवति । तत पापा मुक्तो भ वति । अर्ककाष्ठैरग्निं प्रज्वाल्य राजिकानामष्टसहस्र जुहुयात् सप्ताहम् । कर्मावरणं क्षीयते । ब्राह्मी गुडूची पिप्पलीचूर्ण समभागानि कृत्वा मधुना सहार्यमञ्जुश्रियस्याग्रत एकविंशतिवारान् परिजप्य लिहेत् स प्ताहम् । मेधावी भवति । द्विसप्तरात्र परममेधावी भवति । द्विमास्योगेन श्रुतिधरो भवति । पटस्याग्रत प्रतिमाया ना अष्टसहस्र जप कृत्वा पश्चात् पिबेत् । एव दिनेदिने मौनी जपेत् । मेधावी भवति । बद्धो रुद्धो वा जपेनैव मुच्यति । चौरां दृष्ट्वा जपेत् । चोरैर्न मुष्यति । तैलमष्टसहस्रा भिमन्त्रित कृत्वा शिर म्रक्षयेत् । सर्वजनप्रियो भवति । भगवतो बुद्धस्या ग्रत' ये स्पृशन्ति ते सर्वे वश्या भवन्ति । अनेनैव मन्त्रेण शस्त्राहतस्य पुरुषस्य तैलमष्टसहस्राभिमन्त्रितेन म्रक्षयेद् व्रणा नश्यति । न वेदना भवति । अनेन लोष्ट परिजप्य सप्तवारां जले प्रक्षिपेत् । मकरकच्छ पादीनां तुण्डबन्धः कृतो भवति । पूर्णमास्यां त्रिरात्रोषितो नाभि मात्रमुदकमवतीर्य शुक्लपुष्पाणामष्टशत निवेदयत् । पञ्चदीनारमूल्यं वस्त्रयुग लभते । च द्रग्रहे सधातुके चैत्ये गुञ्जाना श्लक्ष्णचूर्णीकृतानां घृतमधुमिश्रा गुडिकां कारयेत् । सप्ताश्वत्थपत्रान्तरितां हस्तेनावच्छाद्य तावज्जपेद् यावज्ज्वलति । भक्षयेच्छ्रुतिधरा भवति । अनेन सर्वातु राणां कर्माणि कुर्यात् । शूलदाघरम्स्त्रीमूत्रकृच्छ्राजरगृध्रभिन्यं तैलं परिजप्य निरोगो भवति । शुक्लप्रतिपन्मारभ्य त्रिरात्रोषित अश्वत्थप त्रवृक्षस्याधस्ताद् यूथिकाकलिकानां घृतदधिक्षीराभ्यक्ताना शतसहस्र जुहुयात् । रूपकशत लभते । अथ न सिद्ध्यति कर्मकुर्यात् रूपक शतं लभते पश्यति वा पिशाचज्वरभूतग्रहविनाशक सूत्रेण मोक्षयति ।

नार्या अप्रसवमानाया तैलमष्टशत परिजप्य नाभिं कटिप्रदेश वा म्रक्षयेत् । विशल्या भवति । कुम्भीरधारण लोहशताभिमन्त्रितेन अ नन्ता वेतसी ब्राह्मी वचा बृहती- मधुसयुक्ता सधातुके चैत्ये चन्द्रमप श्यता तावज्जपेद् याव मुक्त इति । फरफरायते । भक्षयित्वा श्रुति धरो भवति । सङ्ग्रामे प्रतिसराष्टशताभिमन्त्रित कृत्वा ग्रन्थि हस्ते बध्वा अहतबलो भवति । अहोरात्रोपितेन भगवतोऽग्रत' साधयि तव्य । समुद्रगामिनीं नदीमवतीर्य गत्वा क्षीरयावकाहारेण पक्षमु पोष्य विकसितानां श्वेतपद्माना उदके निवेदयेत् । निधान पश्यति । पञ्चगव्येन कायशोधन कृत्वा शुक्लप्रतिपदमारभ्य यावत् पूर्णमासीति कृतपुरश्चरण अन्ते त्रिरात्रोपित. कुमारीकर्तितसूत्र गृह्य सधातुके चैत्ये प्रतिमाया वा गृहे दशसहस्राभिमन्त्रितेन हस्ते ब वा अन्तर्यो भ वति । सधातुके चैत्ये पटं प्रतिष्ठाप्य पद्मानां त्रिंशत्सहस्राणि जुहु यात् । खदिराङ्गारैरग्निं प्रज्वाल्य स्वरूपेण पश्यति । य मृगयति त लभते । प्रतिपदमारभ्य यावत् पञ्चदशीति । त्रिरात्रोपित सधातुके चैत्ये उदारां पूजा कृत्वा उदुम्बरीभि समिधाभि अग्निं प्रज्वाल्य घृताहुतिं जुहुयात् । ग्राम लभते । समुद्रगामिन्या नदीतीरे स्तूपसहस्रं कारयेत् । प्रतिदिनमेकैकस्य स्तूपस्य गन्धपुष्पधूपादीं दत्वा अष्ट सहस्राभिमन्त्रित कारयेत् । यावत् पश्चिम स्तूप ज्वलति । ततो ज्ञात व्यम् भगवां महाबोधिसत्त्वमागच्छति । आगच्छमानस्य पथि वीप्रकम्प. सुगन्धग धवायवो वान्ति । तावज्जपेद्, यावत् स्वरूपेण तिष्ठति । स य वर याचते त लभते । भगवतोऽग्रत. खदिरपत्रख ण्डिकानां अष्टसहस्रं जुहुयात् । प्रतिदिन दीनारमेक लभते । अटव्यां गत्वा भिक्षाहार' दधिमधुघृताक्तानां अरण्यगोमयानां विंशतिसहस्राणि जुहुयात् । यावद् वृक्षदेवता सिंहरूप कृत्वा आगच्छति । स च निदान ददाति । न गृहेतव्यम् । स्वयमेवमुपतिष्ठस्वेति । राज्य धन वा यरत्नानि वा ददाति । नित्य रत्नत्रयोपयोज्य भोग दातव्यम् । अरण्य प्रविश्य शित्वा दशसहस्र जपेत् । शतसहस्र जपेत् । पुनरपि शतसहस्र जपेत् । अगरुकाष्ठप्रतिमाग्रतः भगवतः वत्सलण्डकाना मधुघृताक्तानां सप्तसह स्राणि जुहुयात् । कपिला कामधेनुरागच्छति । यदि नागच्छति पुनरपि

नत्सलण्ड विंशतिमहस्राणि जुहुयात् । आगता च सिद्धा भवति ।
पुरुपसहस्रस्य क्षीरं ददाति । पटस्याग्रत घृतमभ्याक्तानां जातीपुष्पा
णां अष्टसहस्र जुहुयात् । पण्मासा दीनारमहस्र लभते पणमहस्र
वा । विकसितपद्मानां दधिमधुघृताक्तानां शतसहस्र जुहुयात् सधा
तुके चैत्ये बुद्धाभिप्रसन्ना देवता वरदा भवति । आर्यमञ्जुश्रियस्य
पूजां कृत्वा गौरसर्पपाणां सप्ताभिमन्त्रितानां सङ्ग्रामे प्रकिरे । शा
न्तिर्भवति । प्रतिहारकपक्षे शुक्लत्रयोदश्यां गन्धपुष्पैं पूजा कृत्वा
विकसितानां पद्मानां घृताक्तानां अष्टसहस्र जुहुयात् । भस्मं च गृही
त्वात्मन ललाटे तिलक कृत्वा ग्राम नगर प्रविशेत् । सर्वे वशा भ
वन्ति । कृष्णचतुर्दश्या प्रभृति यावत् पञ्चदशीति एकरात्रोपितेन वृक्ष
स्याधस्ताच्चतुर्हस्तमात्र मण्डलकमुपलिप्य, गन्धपुष्पधूप दत्वा आर्यम
ञ्जुश्रियस्य पूजां कृत्वा यक्षाणां बलि दत्वा मानुपास्थि गृहीत्वा
त्रिशूल कारयेत् । वामहस्तेन प्रक्षिप्य सप्तरात्रत्रिरात्रोपितेन वा जा
तीपुष्पाणामष्टसहस्र जुहुयात् । तेन शूल ज्वलति । तत सिद्धो भव
ति । इच्छया य निर्मिणोति त लभति । दिव्य गृह चन्द्रसूर्यग्रहे
सधातुके चैत्ये प्रतिमाया वा गृहे कपिलाया समानवत्साया गोघृत-
पल गृह्य सौवर्णभाजने स्थाप्य भगवत पूजा कृत्वा चन्द्रमपश्यता
दर्शनापरिच्छाद्य तावज्जपेद् यावदूष्मायति । फेनायति । ज्वलति ।
ऊष्मायमान पीत्वा सर्वसत्त्ववशीकरणम् । फेनायमान पीत्वान्तर्धान
भवति । ज्वलमानं पीत्वाकाशेन गच्छति । पण्मासकृतपुरश्चरण
गोमूत्रयावकाहारिणा मौनव्रतिना नित्यजापेनायाचित सुवर्णशत ल
भते । प्रतिहारकपक्षमारभ्य मत्र मत्र भगवता आर्यमञ्जुश्रियस्याग्रत
पूजा कृत्वा गन्धपुष्पादीनां ददता अष्टाङ्गपापधसमन्वागतन पूर्ण सव
त्सरे सिद्धो भवति । भगवानस्य पट्टबन्ध करोति । आर्यमञ्जुश्रि
यस्य पूजा कृत्वा प्रतिपदमारभ्य यावत् पौर्णमासी दिन दिनऽधि
कपूजा कार्या । भिक्षवश्च भोजयितव्या । सिद्धोऽस्मीति नाड्निस्स
रति । घृताहुतीनां शतसहस्र जुहुयात् । परस्य शान्तिर्भवति ।
प्रातिहारकपक्षे भगवतो बुद्धस्य पूजा कृत्वा उदारा आर्यमञ्जुश्रियस्य
गन्धपुष्पदीपधूपादीन् दत्वा शङ्खपुष्पीपुष्पाणां इङ्गुदतैलाक्तानां शत-

सहस्र जुहुयात् । ग्रामनगरहस्त्यश्वरथगामहिषाश्च भवति । सप्तरात्रं क्षीरयावकाहार पोषधिकेन आमलितघृतेन पात्र पूरयित्वा शुक्ल त्तिना दीप प्रज्वाल्य कुमारकुमारिकाणा दर्शापयेत् । तत्रैनान्पश्या ग म्यश्च पश्यति । सर्वोपद्रवेभ्य भय न भवति । नित्यजापिना बोधि वृक्षसमिधाना नवनीताक्तानामष्टसहस्र जुहुयात् । पटस्याग्रत. तथा कु शसस्तरे स्वपेत् । स्वप्ने विंशतिसाहस्रिक द्रव्य पश्यति । अर्थभाग रत्नत्रयोपयोज्यम् । पटस्याग्रतः शुक्लप्रतिपदमारभ्य यावत् पौर्णमा सीति । अत्रान्तरे दिने दिनेऽष्टसहस्र जपेत् । गन्धपुष्पधूपादिभि' पूजा कृत्वा अन्ते त्रिरात्रोपितेन मौनव्रत कुर्वता मन्त्र जपता प्रातिचार केभ्यो बलि हस्ते दत्वा महापथ गत्वा भूत क्रूर निवेदयेत् । प्रतीच्छेति वक्तव्य । गौरसर्षपाणा द्रोण गृहीत्वा दश दिशाऽधस्ताच्च क्षिपेत् । एकविंशतिवारानभिमन्त्र्य पर आत्मान प्रकाशयेत् । तथैव कृष्णाष्ट म्या गन्धकुटि प्रविश्य भगवतोऽग्रतः सहस्र जपेत् । गन्धपुष्पादिभि र्बलिविधान कृत्वा तत स्वप्ने पश्यति भगवानार्यमञ्जुश्री. । वशाख मासे कृष्णपक्षे पोषधिकेन क्षीरयावकाहार. सधातुके चैत्ये गन्धपु ष्पदीपादिभि' पूजा कृत्वा भिक्षवश्च दिने दिने भोजयितव्या । भि क्षव अकालमूलफलशश्चत्वार सलिलपूर्णा' स्थापयितव्या' । सर्वा पधिर्नीजानि प्रक्षिप्य रात्रौ एकैकमष्टसहस्राभिमन्त्रित कृत्वा अका कौलीने पुत्रदारदारिका स्थापयेत् । राज्यम् । पश्चाभ्यन्तरया कृष्णा ष्टम्या भगवत आर्यमञ्जुश्रियस्य च पूजा कृत्वा श्मशानाग्नि प्रज्वा ल्य शतपुष्पाणा ष्टसहस्र जुहुयात् । अन्नपान अक्षय भवति । तमेव भस्म ग्रहाय आत्मन परस्य वा ललाटे पुण्ड्रक कृत्वा सङ्ग्रामेऽवत रेत् सर्व वशा भवन्ति । बन्धनाच्च निगडात् प्रमोच्यत । अग्निगता नाशयति । मालतीपुष्पाणा दधिमधुघृताक्ताना शतसहस्र जुहुयात् । षण्मास गामूत्राहार । दीनारसहस्र लभत । शुक्लप्रतिपदमारभ्य नी लोत्पलाना अष्टसहस्र जुहुयात् । यस्य नाम्ना जुहोति स वशो भवति । पञ्चकालकाना त्रिमन्त्र्य अष्टसहस्र यस्य नाम्ना जुहोति स वशो भव ति । प्रातिहार्यकपटं पटस्याग्रत' क्षीरयावकाहार त्रिसन्ध्य पञ्चदश्या तावज्जपेद यावद्भगवानागच्छति । दीपशिखा वर्द्धते । पृथिवी

कम्पते । पर्ने ना प्रज्वलति । गिझेति वाद नि-नगति । दीनारमहस्र लभति । निगपरिभिनति । पणभाग कृतपुरश्चरणो गधातुके चैत्ये भगवत आर्यमञ्जुश्रियस्याग्रत पणाग्रा भ्यन्तरेण दीनाराणा पञ्चसहस्राणि लभति । मधातुके चैत्ये पूजा कृत्वा शतमहस्र जपत् । रूपकसहस्र प्रतिलभति । मधातुके चैत्ये शतसहस्र जपेत् । सर्वकामप्रदो भवति । सर्वव्याधिषु प्रशमन कर्तुकामेनाष्टशतमहस्राभिमन्त्रित कृत्वा, कन्याकर्त्रितसूत्रक बन्धितव्यम् । सौभाग्य गतिलभते । व्याधिश्च प्रशमति । समुद्रगामिनीं नदीमवतीर्य कृष्णतिलाना अष्टमहस्र निवेदयेत् । धनधान्य प्रतिलभते । मधातुके चैत्ये शुक्लप्रतिपन्मारभ्य पञ्चदश्यां त्रिरात्रापितेन उदुम्बरकाष्ठेरग्नि प्रज्वाल्य राजसर्षपाणा दधिमधुघृताक्ताना शतसहस्र जुहुयात् । पञ्चग्रामाणि प्रतिलभते । राजवृक्षमसिद्धिरग्निं प्रज्वाल्य श्वेततिलाना दधिमधुघृताक्ताना शतसहस्र जुहुयात् । पञ्चदश्या त्रिरात्रोपित यदि ते तिला दिशि विदिश गच्छन्ति । तत' सिद्धो भवति । सर्वसत्त्वा वशीकरोति । आयमञ्जुश्रियस्याग्रत पूर्व शतसहस्र जपेत् । ततः चन्द्रग्रहे घृतमष्टपलानि दत्वा तावज्जपेद यावत् फेनायति पीत्वा श्रुतिधरो भवति । कुन्दकक शतमहस्र जुहयात् । अयाचित पुराणमेक लभते । आर्यमञ्जुश्रियस्याग्रत' प्रतिदिनमष्टशतं सुगन्धपुष्पाणां निवेदयेत् । श्रीमा भवति । अपामार्गसमिधाना दधिमधुघृताक्ताना गतिदि । अष्टमहस्र जुहुयात् । ग्राम लभते । बहुपुत्रिकासमिद्भिरग्नि प्रज्वाल्य, अष्टाष्टमहस्र जुहुयात् । तेन भस्मना तिलक कुर्याद् अन्तर्हितो भवति । यदि न भवति त्रिरपि साधयेत् । चन्द्रग्रहे नदीतीर गत्वा बिल्वसमिद्भिरग्नि प्रज्वाल्य बिल्वपुष्पाणा घृताक्ताना शतमहस्र जुहुयात् । यक्षकुमारी आगच्छति । अर्धरात्रे पुनरपि अष्टमहस्र जपित्वा तत एका आगच्छति । या वाचा उच्यते त करोति । निधिस्थाने मन्त्रमष्टसहस्र जपेत् पुष्पधूपगन्धादिभि पूजा कृत्वा तत कृष्णचतुर्दश्यां बलिविधान कृत्वा जपेत् । पिशाचा आगच्छन्ति । तत खनेत् । निधान उत्तिष्ठति । गृहीत्वात्मना त्रयाणा रत्नाना दातव्यम् । एवं पद्मबन्धमपि कर्म । भगवतोऽग्रत विभीतककाष्ठैरग्नि प्रज्वाल्य तिल-

तण्डुलाना प्रतिदिवस अष्टसहस्र जुहुयात । गण्डा वशा भवति । अमा त्यवशीकरणा गारसर्षपा जुहुयात् वशो भवति । राजवशीकरणे स र्जरस जुहुयात् । वशो भवति । पुरुषस्त्रीवशीकरणे घृतमेव जुहुयात् । अगस्तिकाष्ठैरग्नि प्रज्वाल्य दीपवर्तीना पटस्याग्रत' दीनारशत ल भते । क्षीराहारेण पलाशसमिधाना जुहुयात् । प्रतिदिन त्रि कालम् । सुवर्णशत लभति । समुद्रगामिनी नदी गत्वा शतशतसहस्र जुहुयात । यावद रत्नानि प्रतिलभते ग्रहतव्यम् । रत्नत्रयापयोज्यं भागो देय । वैशाखपूर्णमास्यामकला रात्रि जपेत् । आनन्तर्याण्मुच्यति । बोधिवृक्षमूले भगवत आर्यमञ्जुश्रियस्य पूजा कृत्वा अपामार्गसमि धाना दधिमधुघृताक्ताना जुहुयात् । आत्मानमुद्दिश्य । सर्वपापैर्मुक्तो भवति । सप्त सप्त मरिचानि अभिमन्त्र्य अकाकोलीने भक्षयेत् । पञ्चा शच्छ्लोकशतानि गृह्णाति । तच्च यावज्जीव धारयति भगवता बु- द्धस्याग्रत शतसहस्र जप कृत्वा पन्नगबन्ध करोति । जले वैकङ्कतस मिधाना दधिमधुघृताक्तानामार्यमञ्जुश्रियस्याग्रत शतसहस्र जुहुयात् । अर्धरात्रे पञ्च दीनारशतानि प्रतिलभते अथ रत्नत्रयोपयोज्यम् । कुमुदानि दिन दिनेऽष्टसहस्र जुहुयात् । विनायकर्मुक्तो भवति । का र्त्तिकशुक्लपक्षे क्षीरयावकाहार' शाकाहारो वा पापधिक पञ्चदश्यां त्रिरात्रोपितो वैकङ्कतफलाना घृताक्ताना लक्ष जुहुयात् । रूपकसहस्र प्रतिलभते । ग्रामस्वामी भवति । अथ रत्नत्रयापयोगम् । शुचौ भूप्र देशे गोचर्ममात्र मण्डलमुपलिप्य तन्मध्ये पद्माकारा वेदि कृत्वा ग न्धपुष्पधूपविचित्रबलि कृत्वा वैकङ्कतसमिधाना सुगतवितस्तिप्रमाणा ना लक्ष जुहुयात् । अग्न्याकारा नीलवर्णा अर्चिषो निश्चरन्ति । सा धक प्रदक्षिणीकृत्य पुनरप्यग्निकुण्डे प्रविशन्ति । एव सिद्धो भव ति । सर्वसाधनेषु अग्निरवाहितव्यम् । एव सिद्धो भवति । गङ्गा यामसमात्रमुदकमवतीर्य लक्ष जपेत् यावदाकाशादित्यमण्डल दृश्य ति । तत' भगवा सिद्धो भवति । यदि न पश्यति न सिध्यति एकवाराहि गत्वा गन्धपुष्पधूपबलिनिधान कृत्वा सकला रात्रि ज पेत् । यावदुश्वशति । ततः सिद्धो भवति । सर्वसाधनेषु सा च

वक्तव्या । रूपकशत मे दिने दिन ददाति । रात्र्ययीकर्तव्यम् । अ न्यथा न ददाति । पलाशकाष्ठैरग्नि प्रज्वाल्य अरण्यगोमयानां दधिम धुघृताक्तानां अष्टसहस्र जुहुयात् । गोशत लभति । मातुलङ्गफलानां अ ष्टसहस्र जुहुयात् पलाशाग्नौ । यावद् गणपतिरागच्छति । स वक्त व्य' — 'मम दिने दिने दीनारमेक देहि' । ददाति । सर्वं व्ययी कर्तव्य । भगवत' पादौ स्पृशति वक्तव्य तत् सिद्धा भवति । अ थवा न ददाति बिल्वफलाना दधिमधुघृताक्ताना सधातुके चैत्ये पट स्याग्रतः एकरात्रोपितः वैकङ्कतसमिधाग्नि प्रज्वाल्य अष्टसहस्र जुहु यात् । अनेन कर्मणा श्रीमां भवति । विषयाधिपतिर्भवति । किङ्किरातपु ष्पाणि दिने दिने अष्टसहस्र जुहुयात् । दिनानि सप्त । अष्टौ पण प्रति लभते । शान्तिक कर्तुकामो लाजाहुतीना अष्टसहस्र जुहुयात् । शान्ति भवति । पुष्टिमिच्छता क्षीरवृक्षसमिधानामाग प्रज्वाल्य त्रिसन्ध्य तिल तण्डुलानामष्टसहस्र जुहुयात् । दिवसानि त्रीणि । पुष्टिर्भवति । आम्रका ष्ठैरग्नि प्रज्वाल्य दूर्वाङ्कुराणा अष्टसहस्र जुहुयात् । विवादे उत्तर वादी भवति । अस्तमिते व्रीहितुषाणा नाम गृहीत्वा वामहस्तेन जुहु यात् । सप्तरात्रं वशो भवति । राजसमिद्भिरग्नि प्रज्वाल्य तिलतण्डु लानां अष्टसहस्र त्रिसन्ध्यं जुहुयात् । दिवसानि त्रीणि अर्थं ददाति । गङ्गायामुसलशब्दरहिते शुचौ प्रदेशे उभयकूलगृहीत्वा मृत्त सचतुरश्रा सप्तहस्तां वेदिकां कृत्वा मध्ये सहस्रपत्र पद्म कृत्वा तस्योपरि सुगतनित स्तिप्रमाण पञ्चलोहितक चक्र प्रतिष्ठाप्य मण्डलमध्ये पटस्याग्रत मा धयितव्य' गन्धपुष्पै श्वेतचन्दनैर्च्चयित्वा मन्दारकरक्तपुष्पमालां दत्त्वा ततो गन्धादिभि पूजा कृत्वा घृतप्रदीपमाला सप्त देया चतु र्दिशं चत्वारो घृतकुम्भा प्रज्वालयितव्या । चतुर्दिश चत्वार कल शा' सर्वबीजपूर्णका रत्नानि च प्रक्षिप्य स्थापयितव्या । कुन्दुरु-अ गरुश्रीपिष्टक गुग्गुलु धूपो देय । बलिविधान कृत्वा चतुर्दिश पूर्वो क्तेन दधिभक्तोऽपूपक देयम् । दक्षिणभूतकूर उदकमिश्र देयम् । पश्चि मायां दिशि कुरकुडक्षीरपूर्णक देयम् । उत्तरायां दिशि पायसपूर्णक बलिमुपहरेत् । तत' पलाशसमिद्भिरग्नि प्रज्वाल्य अपामार्गसमिधानां

सप्ताभिमन्त्रितानां घृतानामष्टसहस्रं जुहुयात् । नाम ग्रहाय । वशो भवति । राजवृक्षसामद्भिरग्निं प्रज्वाल्य लवणमयीं प्रतिकृतिं कृत्वा शिरादारभ्य एकैकमाहुतं सप्ताभिमन्त्रितां यावच्चरणाविति नाम ग्रहाय अष्टसहस्रं जुहुयात् । राजा वशो भवति । शुक्लपक्षदशम्यामष्टम्यां वा पोषधिकोऽहोरात्रोपितोऽपतितगोमयं गृह्य गोचर्ममात्रस्थण्डिलमुप लिप्य सधातुके चैत्ये आर्यमञ्जुश्रियस्य रजतमये वा भाजने कपि लाया गो समानवत्सायाः कुमारीमथितं नवनीतं गृह्य कुशपिण्डको पविष्ट वामहस्तेन भाजनं गृह्य दक्षिणहस्तेनानामिकायामङ्गुल्या आ लोडय तावज्जपेद् यावद् धूमायति । तत् पातव्यम् । मेधावी भवति । सकृदुक्तं गृह्णाति । अथ धूमायति वशीकरणम् । अथ ज्वलति अन्तर्धानं भवति । वहुपुत्रिका अष्टसहस्रं जुहुयात् । तेन भस्मना उदककुम्भा श्चत्वारः । समिश्रीकृत्वा कारयितव्या । अष्टशताभिमन्त्रिता वाचां दक्षिणहस्ते बध्वा यावत् सर्वत्रोत्तरवादी भवति । अपराजितपुष्पा णामष्टसहस्रं जुहुयात् । सङ्ग्रामेऽपराजितो भवति । कुमारीकर्ति- तसूत्रेण सप्ताभिमन्त्रितेन ग्रन्थय' कर्तव्या वन्धितव्या । स्थावर जङ्गमा विषा नात्र प्रभवन्ति । दारुणेन सर्पेण दष्टस्य नाम ग्रहाय स प्ताभिमन्त्रितमुदकचूर्णकं पानाय देयम् । मृताऽप्युत्तिष्ठति । तथैव चतु र्दिशाभिमन्त्रितं कृत्वा पानाय देयम् । तक्षकेनापि दष्टो जीवति । स्तन गण्डिकायां सप्ताभिमन्त्रितया मृत्तिकया लेपयेत् । मुच्यति । वेदना न भवति । मार्युपद्रवे नगरमध्ये वा अर्धरात्रौ स्थण्डिलकमुपलिप्य शुक्ल बलिं कृत्वा क्षीरवृक्षसमिद्भिरग्निं प्रज्वाल्य क्षीराहुतिसहस्रं जुहुयात् । मार्युपशमयति । अथ नापशमयति । ततोऽन्यतमस्मिन् दिवसे मध्याह्ने लाया श्लेष्मातकसमिद्भिरग्निं प्रज्वाल्य सिद्धार्थानामष्टसहस्रं जुहुयात् । सद्यो मारं प्रशमयति । अनेन विधिना कृतेन विषमवन्ध यावन्त' सत्त्वा ते तस्य वशा भवन्ति । कूष्माण्डवशीकरणे कूष्माण्डभगिधानामष्ट सहस्रं जुहुयात् । मा(र)मुपशमयति । प्रेतवशीकरणे तिलपिष्टकानामष्ट सहस्रं जुहुयात् । प्रेता वश्या भवन्ति । पिशाचवशीकरणे श्मशानचेल कानामष्टसहस्रं जुहुयात् । पिशाचा वशा भवन्ति । यक्षवशीकरणे वन

वृक्षसमिधाना दधिमधुघृताक्तानामष्टसहस्रं जुहुयात् । यक्षा वशा भवन्ति । अपस्मारोजेहारवशीकरणे ऊर्णाहुतीनामष्टसहस्रं जुहुयात् । वशा भवन्ति । घृताक्तानां गुग्गुलुगुलिकानामष्टसहस्रं जुहुयात् । महादेवानुचरा ग्रहा वशा भवन्ति । वीरक्रयक्रीतां मनःशिलां गृहीत्वाराजवृक्षसमिद्भिरग्निं प्रज्वाल्य तावज्जपेद् यावद्भिरणा भवति । ततः समानवत्सायाः गोः कपिलायाः कन्यामथितेन नवनीतेन कृत्वा तस्मिन् घृते निर्वापयेत् । एवं दधिपूर्णभाजने मधुचूर्णे च । ततः अनेनैव रक्षा कृत्वा समुद्गके स्थाप्य चन्द्रग्रहे त्रिरात्रोषितेन सधातुके चैत्ये आर्यमञ्जुश्रियस्याग्रतः पूजां कृत्वा उत्तरामुखेनाश्वत्थपत्रचतुष्टये स्थाप्य तावज्जपेद् यावदूष्मायति । धूमायति । प्रज्वलति । वशीकरणान्तर्धानमाकाशगमनमिति । एवं अञ्जनहरितालरोचना चेति । रोचनया अयं विशेषः — शुक्लपञ्चदश्यां पद्मपत्रे स्थाप्य आर्यमञ्जुश्रियस्याग्रतः करसम्पुटेन गृहीत्वा तावज्जपेद् यावत् त्रिविधा सिद्धिः । एते च कर्मा मूलपटस्याग्रतः कर्तव्यानि । सप्तरात्रं पञ्चलोहेन पद्मं कृत्वा कुङ्कुमरोचनकर्पूरमुदके पिष्ट्वा पद्मं म्रक्षयित्वा ततः शुक्लाष्टम्यामुपोषधिकेन त्रिःकालस्नायिना शुचिवस्त्रप्रावृतेन सधातुके चैत्ये आर्यमञ्जुश्रियस्याग्रतः दक्षिणेन हस्तेन गृहीतेन तावज्जपेद् यावत् प्रज्वलति । ततस्तेन गृहीतेन विद्याधरो भवति । दशवर्षसहस्राणि जीवति । एवं कटकमकुटशृङ्खला चेति । एवं शैलरक्तचन्दनं गुग्गुलं च धावर्तमलं गिरिकर्णिकातुषं व्रीहिकुष्ठतगरं मधु पिप्पली तुरुष्कं चैकतः कृत्वा समभागानि कारयेत् । ततः कपिलायाः समानवत्सायाः गोः क्षीरं गृह्य कन्यामथितेन नवनीतेन मर्दयित्वा गुलिकां कारयेत् । अक्षतैलेन दीपा दातव्यः । ततः उपोषधिकेन शुक्लचतुर्दश्यामहोरात्रोषितः अश्वत्थपत्रान्तरिता गुलिका कृत्वा आर्यमञ्जुश्रियस्याग्रतस्तावज्जपेद् यावद् धूमायति । सत्त्वानां दत्वा आत्मना मुखे प्रक्षिपेत् । अन्तर्हितो भवति । अथ ज्वलति आकाशगामी भवति । अपरो विधिः । सधातुके चैत्ये पटस्याग्रतः पोषधिकेनोदारां पूजां कृत्वा अर्कसमिद्भिरग्निं प्रज्वाल्य दधिमधुघृताक्तानां खदिरसमिधानामष्टसहस्रं जुहु-

यात् । शुक्लचतुर्दश्यामारभ्य यावत् पञ्चदशीति । सिद्धा एव सिद्धो भवति । एवं पापाविवर्जितं लक्षं जप्तव्यम् । एवं कर्माणि भवन्ति । अनया पूर्वसेवया सिद्धा भवति । अथ राजानं राजमात्रं वा वशीकर्तुकामो भगवतः पूजां कृत्वा राजवृक्षसमिधानां दध्नुघृताक्तानां अष्टसहस्रं जुहुयात् । चतुर्दशीमारभ्य यावत् पञ्चदशीति । अनेन कर्मणा दुःशीलस्यापि सिद्धिर्भवति । चतुर्वर्णं वशीकर्तुकामः पायसं दधि यावज्जमाधाय पेयक्रमशो चेति जुहुयात् । वश्या भवन्ति । रात्रौ शुचिरष्टशतं जपेत् । सर्वान् धनान्मोचयति । क्रोधमुपशमनं पिण्डकतुपहोमेन वा कन्यावशीकरणे तिला जुहुयात् । वस्त्रकामेन कर्पासं जुहुयात् । अष्टशतं सप्तवारं वा अष्टसहस्राभिमन्त्रितां कृत्वा हस्ते बध्वा यं याचयति तं लभते । नित्यजापेन प्रत्यङ्गिरा एवमुत्पादिना अष्टसहस्राभिमन्त्रितेन यस्य हस्ते बध्नाति तस्य रक्षा कृता भवति । धनमिच्छन् गुग्गुलुगुलिकानामष्टसहस्रं जुहुयात् । सप्तरात्रम् कुलपतिकामः गन्धां जुहुयात् सप्तरात्रम् घृताक्तां । ग्रामं लभति । पुष्पमष्टशताभिमन्त्रितं यस्य ददाति स वशो भवति । कुङ्कुमतगरतालीसपत्रं समृणालशतपुष्पश्रीवेष्टसमायुक्तं विधिनाभिमन्त्रितं राजद्वारे वश्यं मालभ स्त्रीपुरुषप्रयुक्तवशीकरणं युद्धविजयकरणम् । ध्वजमष्टसहस्रवारा परिजप्य गन्धपुष्पधूपं नाभिमन्त्रयित्वा सप्त दधिकुण्डेषु अर्घ्यं निसर्जयेत् । परसैन्यं दर्शनान्नश्यति । कृष्णतिलां पटस्याग्रतः अष्टसहस्राभिमन्त्रितं कृत्वा यस्य नाम ग्रहाय भक्षयति स वशो भवति । अष्टसहस्रजप्ता सर्ववीजानि सर्वाप य सर्वगन्धानि च सुरभिपुष्पाणि पद्मं वा सर्वाणि अकालमूलकलशे प्रक्षिप्य, नाधिवृक्ष अष्टसहस्रं जपेत् । स्वयं वा स्नापयेत् । अन्यं वा स्नापयेत् । सर्वोपद्रवेभ्यो मुक्तो भवति । पद्मं वा पद्मपत्रं वा निर्धूमेषु अङ्गारेषु यस्य नाम्ना जुहोति स वश्यो भवति । बिल्वपत्रं मधुरयुक्तं अष्टसहस्रं जुहुयात् । राजपत्नीं वा राजमहिषीं वा वशीकरोति । सर्वसत्त्ववशीकरणं प्रियङ्गु जुहुयात् । यस्य नाम ग्रहाय रक्तशालयं जुहोति । स वशो भवति । कुमारीवशीकरणं कुसुम्भपुष्पां जुहुयात् । पटस्याग्रतः क्षीरपायसं अष्टसहस्रां जुहुयात् ।

यस्य नाम्ना स वशो भवति । सधातुके चैत्ये पूर्वाभिमुखं पटं प्रतिष्ठाप्य, शुक्लप्रतिपदमारभ्य वेदिः पूर्वोत्तराग्रैर्भिरस्तार्य, बिल्वसमिधाभिरग्निं प्रज्वाल्य, विकसितानां पद्मानां दधिमधुघृताक्तानां त्रिसन्ध्यमष्टसहस्रं जुहुयात् । अगरुतुरुष्क कुन्दुरुक शापिष्टकेन च धूपो देयः । क्षीरदधिभक्त बलि दद्यात् । विघ्नानां सर्वभौतिकं बलिं देया । ततोऽष्टम्यां प्रभृति विकसितानां श्वेतपद्मानां दधिमधुघृताक्तानां त्रिसन्ध्यमष्टसहस्रं जुहुयात् । महानिधानं विषयं वा लभते । दधिमधुघृताक्तानां पीतपुष्पाणां दिने दिनेऽष्टसहस्रं जुहुयात् । देशं लभति । त्रिरात्रोषित मस्तताहारेण वा होम कर्तव्यः । पञ्च प्रभृति शतसहस्रैरानन्तर्यकारिणस्यापि सिद्ध्यति । तद्वत् समिधानां दधिमधुघृताक्तानां लक्ष जुहुयात् । सुवर्णकोटिं लभते । प्रातरुत्थाय प्रयत स्नातो ब्रह्मचार्यग्निं प्रज्वाल्य, नागकेसरप्रियङ्गुराजान राजमात्र वा वशीकर्तुकामोऽष्टसहस्रं जुहुयात् । त्रिसन्ध्यम् । त्रिमासाभ्यन्तरेण विशिष्टफल प्राप्नोति । द्रव्य प्रभूतं च । गोवत्सलण्डानां शतसहस्रं जुहुयात् । गोशतं लभते । प्रियङ्गुनागकेसरसमिधानां यस्य नाम्ना जुहोति, स वश्यो भवति । खदिरसमिधानां दधिमधुघृताक्तानां पटस्याग्रतोऽष्टसहस्रं त्रिसन्ध्यं जहुयात् । महानिधान लभति । तद्दीयमानमक्षय भवति । समुद्रगामिनां नदीनां तीर्थे, पद्मानां रक्तचन्दनाक्तानां शतसहस्र प्रवाहयेत् । पद्मराशितुल्य निधान पश्यति । पटस्याग्रतो बिल्वाहुतीनामष्टसहस्र जुहुयात् त्रिसन्ध्यम् । भोगानुत्पादयति । तिलतण्डुलानेकीकृत्य पटस्याग्रतोऽष्टसहस्र त्रिसन्ध्य जुहुयात् सप्तरात्रम् । अक्षयमन्नमुत्पद्यते । नागानां नागपुष्पाणि जुहुयात् । वशा भवन्ति । यक्षाणां पटस्याग्रतो गुग्गुलुगुलिकानामष्टसहस्रं जुहुयात् । त्रिसन्ध्य सप्तरात्रमशोकसमिद्भिः । यक्षिणी वशा भवति । श्रीवासक पटस्याग्रतो जुहुयात् । किन्नरा वशा भवन्ति । देवानां वशीकर्तुकामः, मूलपटस्याग्रतोऽगरुसमिधानां घृताक्तानामष्टसहस्र जुहुयात् त्रिसन्ध्यमेकविंशतिरात्रम् । वशा भवन्ति । पटस्याग्रत कुन्दुरुकं जुहुयात् । प्रेता वशा भवन्ति । सर्जरस जुहुयात् । विनायका वशा भवन्ति । पिण्या

कहोमेन सर्वां वशीकरोति। राजानं राजमात्रं वा वशीकर्तुकामः, पटस्याग्रतो राजसर्षपां तैलाक्तामष्टसहस्रं जुहुयात्। सप्तरात्रम्। वशो भवति। यदिच्छति तत् करोति। राजकन्यावश्यार्थे पटस्याग्रतो राजिकां जुहुयात्। पुरोहितं वशीकर्तुकामः पटस्याग्रतः घृतं जुहुयात्। क्षत्रियं वाहुतिभिः। वैश्यवशीकरणे क्षीरं जुहुयात्। शूद्रवशीकरणे कुसरां जुहुयात्। सर्वस्त्रियो वशीकरणे लवणहोमेन। रण्डा माषहोमेन। सर्वसत्त्वां तिलतैलाक्तै वशीकरोति। सर्वेषाम् ष्टसहस्त्रिको होमः सप्तरात्रम्। शुचिर्भूत्वा चतुर्भक्तोपितः विल्वसमिधाभिरग्निं प्रज्वाल्य, बिल्वानां जुहुयात्। शतसहस्रं निधानं पश्यति। त्रिंशतिरात्रं क्षीरयावकाहारेण श्वेतसर्षपाणां लक्षं जुहुयात्। अर्थं लभते। कृतपुरश्चरणं गौरसर्षपाणां घृताक्तानां पटस्याग्रतः रात्रौ दिवसं जुहुयात्। मासेन व सुवर्णसहस्रं लभति। चतुर्भक्तोपितो दशसहस्राणि एतदेव जुहुयात्। अर्थं लभते। सधातुके चत्ये पटं प्रतिष्ठाप्य, पलाशकाष्ठैरग्निं प्रज्वाल्य, उत्पलानां लक्षं जुहुयात्। ग्राम लभति। पटस्याग्रतः गन्धपुष्पधूपं वा क्षीरयावकाहारः पद्मं जुहुयात्। सुवर्णसहस्रं प्रतिलभते। कुमुदानां पटस्याग्रतो लक्षं जुहुयात्। यं मनसा चिन्तयति, तं लभते। पटस्याग्रतो त्रिमधुरानां सहस्रं जुहुयात्। निधानं पश्यति। पटस्याग्रतो दधिमधुघृताक्तानां पद्मानां शतसहस्रं जुहुयात् क्षीरयावकाहारः। सुवर्णसहस्रं प्रतिलभे। त्रिरात्रोपितोऽगरुसमिधानामष्टसहस्रं जुहुयात्। ततः सर्वरात्रं जापो देयः। पटः प्रकम्पते। स्वगदामचलनं वा। ततः सिद्धो भवति। यं मनसा चिन्तयति, तं ददाति। महापुरुषवशीकरणे पटस्याग्रतः जातीपुष्पाणि जुहुयात्। विषमार्थं करवीरपुष्पाणां जुहुयात्। कर्णिकारपुष्पाणां जुहुयात्। दीनारशतं लभते। सेनापतिकामः कुन्दपुष्पाणि जुहुयात्। सैनापत्यं लभते। तारावर्त्तपुष्पं जुहुयात्। दीनारसहस्रं लभते। मुचुलिन्दलक्षं जुहुयात्। सुवर्णसहस्रं लभति। श्वेतकरवीरपुष्पहोमेन विपक्षे बद्धो भवति। विषयमपि लभते पटस्याग्रत आधारकोऽग्निमुपसमाधाय प्रतिदिनं वर्द्धमाना पूजा कार्या। गन्धतैलाक्तानां कनकस्य तुटिमात्रं सहस्रं जुहुयात्। यावद् भगवां

वरदः । ततः विद्याधरचक्रवर्त्ती भवति । य प्रार्थयति । रजतचूर्ण जुहुयात् । राज्य ददाति । आयस चूर्ण जुहुयात । दीनारसहस्रं लभति । कुङ्कुमाहुति गन्धतैलाक्तां शतसहस्र जुहयात् । यावत प्रार्थयति, त लभति । सर्वंग ाहुतीनां लक्षं जुहुयात् । यथाभिप्रेत विषय लभति । कर्पूराहुतीना लक्ष जुहुयात् । दीनारलक्ष लभति । चन्दनसमिधानां ग धतैलाक्ताना लक्ष जुहुयात् । दीनारसहस्र लभति । सुवर्णचेलाहुतिलक्ष जुहुयात् । दीनारसहस्र लभति । अगरु समिधाना लक्ष जुहुयात् । श्रुतिधरो भवति । धासकमसिधाना गन्ध तैलाक्तानां लक्ष जुहुयात् । महान्या युपशमा भवति । निम्बफलानां गन्धतैलाक्ताना लक्ष जुहुयात् सर्वजन्धनान्माचयति । रामानवत्साया गो घृत गृह्य, लक्षाभिमन्त्रित पिबेत् । मेधावी भवति । अर्कपुष्पाणा लक्ष जुहुयात् । सर्वसत्त्ववल्लभो भवति । पुष्पफल सप्ताभिमन्त्रित कृत्वा यस्य दीयते, स वशो भवति । पोपधिक शुक्लपञ्चदश्या स धातुके चैत्येऽपतितगोमयेन मण्डलकमुपलिप्य, ग न्धपुष्पघृतप्रदीपाभिः पूजा कृत्वा, उदुम्बरकाष्ठैराग्न प्रज्वाल्य, ब्राह्मीसमिधानाम ष्टसहस्रं जुहुयात् । हविष्याहारा मेधावी भवति । ब्राह्मणवशीकरणे क्षीर जुहुयात् । स वशो भवति । क्षत्रियस्य हविष्य जुहुयात् । वशो भवति । वैश्यवशीकरणे यवदधिमिश्र हविष्य चैकीकृत्य जुहुयात् । वशो भवति । शत्रं दृष्ट्वा जपेत् । स्तम्भितो भवति । उदकेन सप्ताभिमन्त्रितन सर्वाशा पूरयति । सवरागपु उमाजनम् । लोध्रगुटिकाया सप्ताभिमन्त्रितयाक्षीण्यञ्जयेत् । अक्षिरोगमपनयति । ग्लानस्य सूत्रकं सप्ताभिमन्त्रित वन्धितव्यम् । सर्वग्रहा न प्रभवन्ति । भस्मना सप्तजप्तेन मण्डलबन्धः शिखावन्धेनात्मरक्षा भवति । सप्तजप्तेन लोष्टकेन दिशाबन्धः । दु प्रसवाया तैल परिजप्य दातव्यम् । सुख प्रसवति । मृतगर्भाया ऋतुकालसमय स्नातस्नाताया गोक्षीरमष्टशताभिमन्त्रितं कृत्वा, सर्वबुद्धबोधिसत्त्वानां प्रणाम कारयित्वा, पानाय देयम् । परमान्न च घृतमिश्रं भोजयितव्यः । ततः पुत्र प्रसवति । प्रासादिक शुक्लप्रतिपदमारभ्य पूर्वाभिमुखं पट प्रतिष्ठाप्य, प्रतिदिनं

गुग्गुलुगुडिकानामष्टसहस्रं जुहुयात् । त्रिसन्ध्यम् । यामिच्छति तं ददाति । कृतपुरश्चरणः सधातुके चैत्ये पटं प्रतिष्ठाप्य, गन्धपुष्पधूपबलिं दत्वा, पटस्याग्रतोऽगरुसमिधानामङ्गुष्ठपर्वमात्राणां तुरुष्कतैलाक्तानां जुहुयात् सप्तरात्रं त्रिसन्ध्यम् । राज्यं ददाति । विद्याधरमन्तर्धानं वा पादप्रचारिकं वा श्रुतिधरत्वं ददाति । अथ गुलिकां साधयितुकामेन कर्णिकारकेसरं नागकेसरं श्वेतचन्दनं गजमदं चैकीकृत्य, छाया शुष्कां गुडिकां कृत्वा, शुचिवस्त्राया कन्याया पीषयेत् । पुष्यनक्षत्रे करणीयम् । शुचिर्भूत्वा सप्तगुलिका त्रिलोहवेष्टिता कृष्णागरुसमुद्गके प्रक्षिप्य, पटस्याग्रतो जपेद्, यावत् स्फुरणमागता । ता गृह्य, भगवतः एकं दत्वा, मुखे प्रक्षिप्या तर्हिता भवति । पटस्याग्रतः लक्षाणां दधिमधुघृताक्तानामष्टसहस्रं जुहुयात् । निधानं लभति । कदम्बपुष्पाणां दधिमधुघृताक्तानामष्टसहस्रं जुहुयात् । सर्वसत्त्वा वशा । समुद्रगामिनां नदीमवतीर्य, उपवसितः केसरपुष्पाणामष्टसहस्रं जुहुयात् । दशवस्त्रयुगानि लभति । पटस्याग्रतः जातीपुष्पाणां दधिमधुघृताक्तानां त्रिसन्ध्यमष्टसहस्रं जुहुयात् । दिवसानि सप्त । सर्वसत्त्वानां प्रियो भवति । विषयं ददाति लभति । कुमुदपुष्पाणां दधिमधुघृताक्तानामष्टसहस्रं जुहुयात् । दिनानि सप्त पञ्चविषयाणि लभते । राजवशीकरणे, राजसर्षपां जुहुयात् । सप्तरात्रम् । ब्राह्मणवशीकरणे करवीरपुष्पाणामष्टसहस्रं जुहुयात् । सप्तरात्रम् । वैश्यवशीकरणे सौगन्धिकपुष्पाणामष्टसहस्रं जुहुयात् सप्तरात्रम् । शूद्रवशीकरणेऽष्टसहस्रणागा जुहुयात् सप्तरात्रम् । रण्डा अक्षतगभिधानामष्टसहस्रं जुहुयात् सप्तरात्रम् । सधातुके चैत्ये रोचनामष्टसहस्राभिमन्त्रितां कृत्वा, राजकुले गच्छेत् । सर्वे वशा भवन्ति । दूर्वाङ्कुराणामष्टसहस्रं जुहुयात् । शान्तिर्भवति परस्य । आत्मनः शान्तिं कर्त्तुकामेन त्रिसन्ध्यं क्षीरं जुहुयात् । शान्तिर्भवति । महादेवस्य दक्षिणां मूर्त्तिं ताम्रभाजने घृतं स्थाप्य, सहस्रं जपेत् । सर्वभूतिकं बलिं निवेद्या च । घृतं चलति । ततः सिद्धो भवति । ललाटे तिलकं कृत्वा, सर्वजनप्रियो भवति । मेधावीकरणे भगवतश्चामितायस्यार्यमञ्जुश्रियस्य च पूजां

कृत्वा, रजते वा ताम्रे वा घृत स्थाप्य, तावज्जपेद्, यावत् त्रिविधा सिद्धि । त पीत्वा मेधावी भवति । धूमायमानेऽन्तर्धानम । ज्वलित-माकाशगमनम् । मन शिला साधयितुकामेन क्षीरयावकाहारो लक्ष जपेत् । महादेवस्याग्रतस्त्रिरात्रोपित समाभिरश्वत्थपत्र प्रतिष्ठाप्य, त्रि शिराच्छाद्य, सर्वभूतिकां बलि निवेद्यम् । अग्नि नत आत्मन सखा-यानां च रक्षां कृत्वा तावज्जपेद्, यावत् त्रिविधा सिद्धि । ज्वलितेन दशवर्षसहस्राणि जीवति । अयोमय चक्र कृत्वा, त्रिशूल वा, उदारां पूजां कृत्वा, दक्षिणहस्तेन गृहीत्वा, पटस्याग्रत पर्यङ्कोपविष्टस्ताव-ज्जपेत्, यावद् चिटचिटायति । ज्वलति । त गृहीत्वा विद्याधरो भवति । सर्वदेवमनुष्या वशा भवन्ति । अङ्गुलिसाधनं कर्तुकाम' नद्या उभयकूलमृत्तिकां गृह्य, तयाङ्गुलि कारयेत् । तमङ्गुलि पटस्याग्रतः स्थापयित्वा, तावदाकर्षयेत् । यावदागच्छेति । सिद्धा भवति । तया यमाकर्षयति स आगच्छति । रोचनां साधयितुकाम' कृतपुरश्चरणः पटस्याग्रत प्रतिष्ठाप्य, गन्धपुष्पधूपं दत्वा, तावज्जपेद्, यावज्ज्वलि तमिति । तया च सिद्धया पञ्चवर्षसहस्राणि जीवति । पद्म साधयि-तुकामेन रक्तचन्दनमय पद्मं कृत्वा, पद्म सधातुके चैत्ये प्रतिष्ठाप्य, तस्याग्रतो गृहीत्वा, कृतपुरश्चरणस्तावज्जपेद्, यावज्ज्वलतीति गृही त्वा सर्वविद्याधरचक्रवर्ती भवति । कैलासानुचरा देवा वशा भवन्ति । सर्वविद्याधराणामधिपत्यः । उदकेन वेपचिकित्सा । ज्वरादेशन स्व स्थानेशिन सकृज्जप्तनात्मरक्षा । मन्त्रेनोभ्रेण जप्तेन सखायरक्षा । त्रिजप्तेन दिशाबन्ध । चतुर्जप्तेन मण्डलबन्ध । कृष्णाष्टम्यामहोरात्रो-षितेन कपिलाया गो' समानवत्साया अधःपतितगोमयनार्यमञ्जुश्रीरूप कृत्वा, पूर्वाभिमुख स्थाप्य, महता पूजा कृत्वा, तस्याग्रतो लक्ष जपत् । ततो भगवां शिरः कम्पयति । अथ वा सिद्धिनिमित्त दर्शयति । तत' सिद्धो भवति । य चिन्तयति, त सर्वं करोति । भगवान् वरदो भवति । सर्वेच्छां सम्पादयति । स्वप्न च शुभाशुभ कथयति । यथेष्ट प्रयुञ्जीत । पूर्वाह्णे सहस्रजप्तेन सुवर्णमनुत्पद्यते । पोपाधिक क्षीरयाव काहारः पर्वतशिखरमारुह्य शतसहस्र जपेत् । दर्शनं भवति । ईप्सां सम्पा-

दयति । पटस्याग्रत सप्तरात्रं कुङ्कुमाष्टसहस्रं जुहुयात् । कृतपुरश्च रण । एकदेशे राजा भवति । त्रिसन्ध्य कणानामष्टसहस्रं जुहुयात् । रात्रौ त्रयम् । दीनारशत लभति । आटरुषककाष्ठैरग्निं प्रज्वाल्य आटरुष पुष्पाणां घृताक्तानामष्टसहस्रं जुहुयात् । सुवर्ण लभति । कृष्णचतुर्दश्यामहोरात्रोषितेन घृताक्ताना राजिकामष्टसहस्रं जुहुयात् । रूपकसहस्रं लभति । अथवा ग्राम भवति । पटस्याग्रत श्लेष्मातक काष्ठैरग्निं प्रज्वाल्य, तिरा दूर्वाप्रवालाना लक्ष जुहुयात् । गोसहस्रं लभति । सुरसीपत्राणामष्टसहस्रं जुहुयात् । दिव्य गृह लभति । मनसा लक्षजप्तेन पुराणसहस्रं लभति । श्रीविष्टसहस्रं जुहुयात् सप्तरात्र त्रिसन्ध्यम् । दीनारसहस्रं लभति । यथाभिप्रेत सर्वं सम्पादयति । श्रीमांश्च भवति । सुभगश्च भवति । नद्यायां रक्तपुष्पाणि होमयेत् । रक्तानि वस्त्राणि लभते । शुक्लाष्टम्या शुक्लपञ्चदश्यां वा विविक्तभूप्रदेशे, श्वेतार्कस्याधस्तादार्यमञ्जुश्रियस्य गन्धपुष्पधूपं च दत्वा माल्य चाष्टसहस्रं जपेत् । पश्चात्पुष्पमात्रमार्यमञ्जुश्रिय कारयेत् । शुक्लाष्टम्या विविक्त प्रदेशे वल्मीके शुक्लगन्धवलिमाल्यधूपनिवेद्यमष्टसहस्रं जपेत् । ततो वल्मीकमृत्तिकां गृह्य, गन्धोदकेन मर्दयेत् । तस्या मृत्तिकया पूर्वकृत प्रतिमामुद्गमकैर्क्षीरेण प्रतिमुद्रा कृत्वा, तत. शुक्लप्रतिपदमारभ्य, यावत्पूर्णमासि त्रि' काल भगवत पूजा कृत्वा वलिं दद्यात् । ततो, जातीपुष्पाणामष्टसहस्रेण हन्तव्य । पौपधिकेन क्षीरयावकाहारेण दर्भसंस्तरशायिना साधयितव्यम् । दीनारसहस्रं लभति । सततजापेन यात्रासिद्धिमवाप्नोति । यदि दिवसानि सप्ताष्टसहस्रं जपेत् । ग्राम लभते । श्रीमां भवति । अर्थमुपार्जयितुकामेन गोष्ठं गत्वा कृष्णाष्टम्या परभ्य क्षीरयावकाहारा लक्ष जपत् । अपरस्मिं कृष्णचतुर्दश्यां ते ततोऽहोरात्रोषितेन तत्रैव शतसहस्रं जप्तव्यम् । दीनाराणामष्टशतानि लभति । यमिच्छति । सुवर्ण वा ग्राम वा लभति । कृष्णचतुर्दश्यामहोरात्रोषित पटस्याग्रतः बोधिवृक्षकाष्ठैरग्निं प्रज्वाल्य, वचामष्टसहस्रं जपेद् दीनारशत लभति । कृष्णाष्टम्यां पलाशकाष्ठैरग्निं प्रज्वाल्य, दधिमधुघृताक्ताना गुग्गुलगुडिकानां

पटस्याग्रत शतसहस्र जुहुयात्। दीनारशत लभते। शतपुष्पाणां लक्ष जुहुयात् । दीनारशत लभात । बिल्वसमिधानां शतसहस्र जुहुयात् । यमिच्छति, त सम्पादयति । गङ्गानदीतीरे, समुद्रपुलिने वा, अनुपहते मानुषवर्जिते । वालुकाया सुगतवितस्तिप्रमाण स्तूप कृत्वा, यथाविभवतो ग धपुष्प धूप दत्वा, अष्टसहस्राभिमन्त्रित कुर्यात् । एव दिने दिने ग धादीन् दत्त्वा यावल्लक्षत्र स्तूपसहस्रं पूर्ण मिति पञ्चानन्तर्यमवाप्नोति तिलानामष्टसहस्र जुहयात् । यस्येच्छति, स वशो भवति । सधातुके चैत्ये पूजा कृत्वाष्टसहस्र जपेत् । शुभाशुभ कथयति । आप्यायन कर्तुकामो भगवताऽग्रत क्षीरवृक्षसमिधानां घृताक्तानामष्टसहस्र जहयात् । तत सा विद्या आप्यायिता भवति । सप्तमे साधने प्रयोक्तव्य' । यत्र ब्रह्मराक्षसोऽ यो वा सत्त्व कृतपुरश्चरण, तत्र गत्वा, दशसहस्राणि जपेत् । महानिधान प्रयच्छ ति । क्षीरयावकाहार' सधातुके चैत्ये सवत्सर जपेत् । तत्रैव पट प्रति ष्ठाप्य, कृष्णाष्टम्यां त्रिरात्रोपित उदारा पूजां कृत्वा, बलि निवेद्य, पटस्याग्रत अग्नि प्रज्वाल्य, रक्ताक्षरामिधानां दधिमधुघृताक्तानामष्टस हस्र जुहुयात् । कुबेराद्या यक्षा' आगच्छन्ति । न भेतव्य च स्थाप्य, तस्योपरि सुपिण्ड पर्यङ्क बध्वा, हस्तेनावष्टभ्य, तावज्जपेत् तावज्ज्व लितमिति । अत्रान्तरे सर्वनरकतिर्यग्योनिकानां दु ख व्युपशमयति । विद्याधरनिकायाश्च सन्निपतन्ति । तत. सर्वबुद्धबोधिसत्त्वानां नम स्कार कृ वा गृहीतव्यम् । विद्याधरैरनुगम्यमाना विद्यापुरीं गच्छति। विद्याधरराजा भवति । सर्वविद्याधरा पूजयन्ति । महाकल्पस्थायी भवति। अनन विधिना चक्रखड्गमुद्गराद्य' प्रहरणविशेषा' साध्या । सा चेद् विद्या साध्यमाना न सिद्ध्यति; तामनन मन्त्रेण समेत भग वतो बुद्धस्याग्रत' पटस्य च पूजां कृत्वा, अष्टसहस्र जपेत् । तत्र कुश सस्तरे स्वप्तव्यम् । ऊनातिरिक्त य वा सूचयति, तत्र स्थाने यक्षय क्षिणीसहिता पूर्ववत्सेव । तत्र मण्डलकमुपलिप्य गौरसर्षपाणामष्टस हस्र जुहुयात् । आगच्छति । यथेष्ट वक्तव्या । अध्येषणता प्रयच्छति। तां भक्ष्य कल्पायुर्भवति । अथ नागच्छति, सप्तरात्र कुर्यात् । आग च्छति । अथ शान्ति कर्तुकाम. भगवतोऽग्रत क्षीराहुत्याष्टसहस्र

गन्धोदकेन वाभ्युक्षयेत् । शान्तिर्भवति । पल्लवेन मयूरच्छकेन वा
सर्पदष्टं समार्जयेत् । निर्विषो भवति । वल्मीकशिखरमारुह्य निराहार
एकपाद पर्वाह्णाद् यावदपराह्णं जपेत् । निधयदर्शनीय क्षीयते । तत्र
स्थान यत्र तिष्ठति । तत्र प्रविशेत् । तत्र गत्वा मण्डलकमुपलिप्य
गौरसर्षपाणामष्टसहस्र जुहुयात् । यक्षा आगच्छन्ति । [illegible]रापितेन
गन्धोदकेन कलशेनार्घं देयं । यक्षा ब्रुवन्ति 'किं कर्तव्यम् । आ
हूता स्म' । वक्तव्यम् 'यक्षा मे आज्ञाकरा भवन्तु' । तथास्त्वित्युक्त्वा
न्तर्धीयन्ते यक्षा । सिद्धा भवति । य मृगयति त ददाति । दिव्या
रसरसायनान्योषधिविधानानि प्रयच्छन्ति । तत सहस्रपरिवृतस्यापि
वस्त्रसमाहार प्रयच्छति । य मृगयति, तत् सर्वं प्रयच्छति । एवं वशी
करणे कृष्णयोरेकतरेण त्रिरात्रोपित कृतरक्ष सुयन्त्रित पटस्या
ग्रतो निर्धूमाङ्गारैर्गुग्गुलुगुलिकानामष्टसहस्र जुहुयात् । घृताक्तानाम् ।
अर्धरात्रे देवतागच्छति । वक्तव्या । ओम् इति प्रयच्छन्ति । य वा मृग
यति । वस्त्रार्थी दूर्वाकाण्डानां घृताक्तानामष्टसहस्र जुहुयाद्, वस्त्राणि
लभति । वचामष्टसहस्राभिमन्त्रितं कृत्वा मुखे प्रक्षिप्य, सर्वत्र व्य
हारेषूत्तरवादी भवति । सुगन्धतैल परिजप्य, मुखं प्रक्षयेत् । राजकुले
पूत्तरवादी भवति । अञ्जनमष्टसहस्राभिमन्त्रित कृत्वाक्षिण्यञ्जयेत् ।
व्यवहार उत्तरवादी भवति । चन्द्रसूर्यग्रहे वा, श्रोताञ्जन मुखे प्र
क्षिप्य, तावज्जपेद्, यावन्मुक्त इति । पेषयित्वा रक्षां कृत्वाञ्जनम
ष्टसहस्राभिमन्त्रित कृत्वा, अक्षीण्यञ्जयेत् । अदृश्यो भवति । सर्वग
न्धानां पटस्याग्रतो लक्ष जुहुयात् । श्रिय पश्यति । य वर मृगयति ।
त लभति । मौनी भिक्षाहारो लक्ष जपेत् । अतीहतो भवति । पट
स्याग्रतो मण्डलकमुपलिप्य, पुष्पावकीर्णं कृत्वा, उदकचूलकाः स
प्ताभिमन्त्रिताः पातव्याः दिवसानि सप्त । मेधावी भवति । पूर्वाधीत
ञ्च न नश्यति । ब्राह्मीरसकर्ष क्षीरकर्षमष्टशत परिजप्य, पातव्यम् ।
दिनेदिने मेधा वर्द्धते । यावदेकविंशतिरात्र पञ्चशतानि धारयति गृ-
ह्णाति । रक्षा उदकेन सप्तजप्तेन शिरसि दातव्यम् । मण्डलबन्धः ।
खदिरकीलकैरेकविंशतिजप्तैर्गुग्गुलुधूपेनावेशयति । विषच्छुरिकया

चिकित्सा पल्लवेन वा ग्रहनाशनम् । सप्तजप्तेन श्वेतपुष्पेण गुग्गुलुधूपेन वा ग्रहगृहीतमनां स्नापयन् । स्नाक नष्टिभयम् । श्वेतसर्षपां तिलमिश्रां घृताक्तां जुहुयात् । वरदो भवति । रात्रौ होम । सधातुके चैत्ये पूर्णमस्यां सगौरवेण मण्डलकमुपलिप्याष्टौ पूर्णकलशा अष्टौ च पुष्पमालागरुतुरुष्कच गाकु दुरुधूप दहता तावज्जपेत् । तत शरीरसिद्धिं प्रयच्छति । सधातुके चत्ये क्षीरयावकाहार यथावि भवत पूजां कृत्वा शतसहस्र जपेत् । जम्भागाहवादिषु कर्मसु स मर्था भवति । सक्तुभक्ष ग्रामसमात्रमुदकगवारीय, लक्ष जपेत् । वशीकरणे अ तर्धान शिखाविषु सर्वेष्वेव गुणमर्था भवति । नागस्थाने कर्पासास्थि जुहुयात् । नागा वश्या भवति । य मृगयति त लभते । दक्षिणहस्तादङ्गुलिमष्टाभिमन्त्रित कृत्वा, राजान तर्जयेद् , वश्यो भवति । अनना विधिना गजव्याघ्रमहिषादीस्तम्भ यति । तिलहोमेन नरनारीवशीकरण त्रिशितविकयेन रक्षा आत्मरक्षा पररक्षा, सप्ताभिमन्त्रितेन शिखाबन्ध । युद्धे राजकुले विवादे जपमानस्य विजयो भवति । आत्मना अभिषेक कर्तुकामश्चत्वार. कलशा अकालनदीपल्वलप्रस्रवणोदके वा सर्वगन्धबीजानि प्रक्षिप्य अष्टसहस्राभिमन्त्रितानि कृत्वा, तेनोदकेनात्मानमभिषिञ्चेत् । सर्वविघ्नविनायकालक्ष्मीविनिर्मुक्तो भवति । पिशाचज्वरे गन्धोदकेनाष्टशताभिमन्त्रितेनाभ्युक्षयेत् । स्वस्थो भवति । वेताड पूर्वाभिमुखखदिरकीलकैः, बालाशल्यकै. सुमन्त्रित कृत्वा, सुप्रयत्नतश्चतुर्दिक्षु दिशासु खड्गहस्तान् पुरुषांस्थाप्य, वेताडस्य हृदये उपविश्य, आयसेन स्रुवेण लोहचूर्ण जुहुयात् । तस्या मुखाज्जिह्वा नि सरति । तां तीक्ष्णेन शस्त्रेण छित्त्वा, नीलोत्पलराशिप्रकाश खड्ग भवति । तेन गृहीतेन सपरिवार उत्पतति । विद्याधरराजा भवति । एकादश वर्षकोटीं जीवति । काल गतश्च देवेषूपपद्यते । पुष्पलोहमयीं मुण्डि लक्षणोपेतां कृत्वा, पटस्याग्रत कृतपुरश्चरण सप्तरात्रानिराहारितां कृत्वा, सहस्रसम्पाताहुतिं भगवतोऽग्रत कृष्णचतुर्दश्यां त्रिरात्रोषित' उदारां पूजां कृत्वा, बलिविधानं रक्षामण्डलव धसीमाबन्धादिक कृत्वा, आर्यसङ्घ यथाशक्तितः भोजयित्वा, पादयो' प्रणिपत्य, आर्यसङ्घ अनु

प्राप्य म्रियेत् । पटस्याग्रतः सिद्धार्थकपुञ्जकं स्थाप्य, पुञ्जस्योपरि
जप्य दातव्यम् । सर्वग्रहावेशनम् । गुग्गुलुधूपेन सर्वाकाल्पं धूपयन
सर्वशत्रुस्तम्भनम् । जापं गर्गरां निक्षिप्त्वा, मारण्यभेनाकाशे
क्षिपितव्यम् । सर्वशत्रुस्तम्भनम् । गान्धारीलतं सप्तजप्तं दातव्यम् ।
निर्विषो भवति । सर्वकालकलहविग्रहविवादेषु पञ्चरङ्गिकं सूत्रमष्ट
शताभिमन्त्रितं कृत्वा ग्रन्थिबन्धं धारयितव्यम् । सर्वकलिकलहवि
ग्रहविवादेषु स्तम्भिता भवन्ति । सर्वविषेषु पत्रं पानीयं सप्तजप्तं दा
तव्यम् । निर्विषो भवति । अर्थकामः, शुचिना शुचिवस्त्रप्रावृतेनाहो
रात्रोषितः पटस्याग्रतः कुन्दुरुकधूपो देयः । स्वप्ने कथयति शुभं
वाशुभं वा । सप्तसहस्राणि रूपकं लभति । सर्वमुद्रा भेदभस्मना
भोगार्थी नदीसङ्गमे तडागानामकृतमेऽन्यत्र वा शुचिप्रदेशे पटं प्रति-
ष्ठाप्य जापहोमं समारभेत् । पद्मानां दधिमधुघृताक्तानां लक्षं जुहुयात् ।
द्विलक्षं वा । ततः सर्वकाममवाप्नोति । लक्षत्रयहोमेन राज्यं ददाति ।
एकविंशतिहोमेन महाधनपतिर्भवति । गुग्गुलुगुडिकानां दधिमधुघृता
क्तानामष्टसहस्रं जुहुयात् । एकविंशतिरात्रम् । पुष्टिर्भवति । दीनारस
हस्रं लभते । कुड्ये प्रक्षेप्तव्यं । सर्वशत्रवः स्तम्भिता भवन्ति । गोमयम-
ण्डलकं कृत्वा, मृतकं गृह्य, मण्डलमध्ये स्थाप्य गुग्गुलुधूपं दत्वा, मन्त्रं
जपेत् । यदि जीवति, मृतकं नर्तति । न जीवति, न नर्तति । गोमयेन म-
ण्डलकमुपलिप्य, चतुर्हस्तप्रमाणं पुष्पधूपं दत्वा, तस्मिन्नेव स्थितो जपेत् ।
शत्रूणां स्तम्भनम् । शस्त्रं सप्तवारं परिजप्य, धरण्यां स्थाने निखनि
तव्यम् । सर्वशस्त्राण्याच्छिन्ना भवन्ति । परचक्रदण्डं सप्तवारां परिजप्य
[illegible]व्यम् । [illegible] भवति । [illegible] । अपामार्गसमि
द्भिरग्निं प्रज्वाल्य, कृष्णतिलां श्वेतसर्षपमिश्रां जुहुयात् । [illegible]
रग्रहा नश्यति । सर्वज्वरेषु कृष्णसूत्रकं बन्धितव्यम् । सर्वग्रहडाकिनीषु
नीलसूत्रं बन्धितव्यम् । [illegible] गौर
मृत्तिकाश्या भवति । सर्वसत्त्वानां चन्द्रसूर्यापरागे उपवासं कृत्वा,
तैलं जपेत् । तेन [illegible] मुखं म्रक्षयेत् । अरिकुलं प्रविशेत् । मैत्रचि
त्तमुत्पद्यते । अनेनैव विधानेन प्रतिसराष्टसहस्राभिमन्त्रितं कृत्वा, हस्ते
बध्वा, सङ्ग्रामेऽवतरेत् । अपराजितो भवति । काल्यमुत्थाय सभा

